॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

दर्पणसहित-

# श्रीमद्भगवद्गीतायां

## तृतीयं षट्कं

### अथ त्रयोदशोऽध्यायः

---

**धृतराष्ट्रः** ॥

एवं ज्ञानयोगकर्मयोगध्यानयोगभक्तियोगान् तत्तत्संगताननेकानर्थविशेषांश्च श्रुतवान् दृष्टवांश्च विश्वरूपं भगवति वासुदेवे परां भक्तिमुपगतः पार्थः शोकमोहसंशयविपर्ययादीन् दोषान् दूरीकृत्य किं स्वधर्मबुध्या युद्धे प्रावर्तिष्ट ॥ उत कृष्णार्जुनयोः भूयोऽपि संवादः प्रावर्तिष्ट ॥ वद मे संजय ॥

**संजयः** ॥

भगवद्वचनश्रवणभगवद्रूपदर्शनाभ्यां विधूतशोकमोहोऽपि युद्धं स्वधर्मं मत्वा कर्तुं कृतनिश्चयोऽपि पार्थः श्रुतेषु तेषु तेष्वर्थेषु संशयपरिजिहीर्षया विशेषबुभुत्सया च भूयोऽपि संवादमवतितारयिषुः कांश्चिदर्थान्निर्दिश्य तद्विवरणमभ्यर्थयामास ॥

॥ द्वै ॥ **अर्जुन उवाच** ॥

**प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ॥**

**एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥**

**प्रकृतिमिति** ॥ हे केशव कृष्ण प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञं चैव ज्ञानं ज्ञेयं चैव इत्येतत्सर्वं वेदितुं ज्ञातुं इच्छामि ॥ ज्ञानमत्र ज्ञानं ज्ञायते अनेनेति ज्ञानसाधनं च ॥१॥

हे देव त्वया १'प्रकृतेः क्रियमाणानि' २'प्रकृतेर्गुणसंमूढाः' ३'प्रकृतिं स्वामधिष्ठाय' ४'मे भिन्ना प्रकृतिरष्टधा' ५'प्रकृतिं यान्ति मामिकां' ६'प्रकृतिं स्वामवष्टभ्य' इत्यादिषु प्रकृतिरुक्ता ॥ ७'पुरुषं पुरुषर्षभ' ८'परमाप्नोति पूरुषः' ९'स सुखी नरः' १०'भक्तिमान् मे प्रियो नरः' इत्यादिषु पुरुष उक्तः॥ किं तावेव प्रकृतिपुरुषौ क्षेत्रक्षेत्रज्ञपदाभ्यां औपनिषदाः पौराणिकाश्च व्यवहरन्ति उत तावन्यौ ॥ ११'कर्मबन्धं प्रहास्यसि' १२'सुखं बन्धात्प्रमुच्यते' १३'मुच्यन्ते तेऽपि कर्मभिः' १४'एवं ज्ञात्वा विमोक्ष्यसे' १५'यज्ज्ञात्वा मोक्ष्यसेऽशुभात्' इत्यादिषु बन्धमोक्षावुक्तौ ॥ कीदृशी प्रकृतिः कस्तस्याः स्वभावः के च तस्याः गुणाः कश्च तद्बन्धः कश्च ततो मोक्षः ॥ १६'श्रद्धावान् लभते ज्ञानं' १७'ज्ञानं प्रकाशयति तत्परं' १८'ब्रह्मविद्ब्रह्मणि स्थितः' १९'ज्ञाननिर्धूतकल्मषाः' २०'प्रियोहि ज्ञानिनोऽत्यर्थं' २१'ज्ञानी त्वात्मैव मे मतं' २२'ज्ञानवान् मां प्रपद्यते' इत्यादौ ज्ञानमुक्तं तज्ज्ञानं किं किंविषयकं । विषयभूतो ज्ञेयः कः कीदृशः ॥ २३'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया' २४'श्रद्धावान् लभते ज्ञानं मत्परस्संयतेन्द्रियः' इत्यादिना आचार्योपासनश्रद्धाभक्तीन्द्रियनियमनानि साधनान्युक्तानि ।किं तान्येव उत अन्यान्यपि ॥ इत्येतत्सर्वं साशेषविशेषं सप्रकारं ज्ञातुमिच्छामि ॥ वक्तुमर्हसि ॥ नायं निर्बंधः॥ किं तु जिज्ञासया प्रार्थना ॥ त्वमीश्वरोऽसि ॥ किं तवाविदितम् ॥ १ ॥

## ॥ श्रीभगवानुवाच ॥

कृष्णः ॥

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥ २ ॥

---

१ ३ २७. २ ३ २९. ३ ४ ६. ४ ७ ४. ५ ९ ७. ६ ९ ८. ७ २ १५. ८ ३ १९. ९ ५ २३. १० १२ १९. ११ २ ३९. १२ ५ ३. १३ ३ ३१. १४ ४ ३२ १५ ४ १६. ९ १. १६ ४ ३९, १७ ५ १६. १८ ५ २० १९ ५ १७. २० ७ १७ २१ ७ १८. २२ ७ १९. २३ ४ ३४. २४ ४ ३९.

इदमिति ॥ हे कौंतेय इदं शरीरं क्षेत्रं इति अभिधीयते उच्यते ॥ एतत् क्षेत्रं यः वेत्ति जानाति तं, तद्विदः तत् क्षेत्रं तं क्षेत्रज्ञं च विदंतीति तद्विदः क्षेत्रक्षेत्रज्ञतत्त्वज्ञाः क्षेत्रज्ञं क्षेत्रं जानातीति क्षेत्रज्ञः तं इति प्राहुः वदंति ॥ २ ॥

हे पार्थ इदं प्रमाणसिद्धं शरीरं क्षेत्रं ॥ किं तच्छरीरमिति चेत् । अव्यक्तमहदहंकारादिकं ॥ तद्धि कालेन शीर्णं भवति ॥ देहरूपेण परिणतस्य तस्य नाशे जीवस्य दुःखोदयात् जीवस्य हिंसाकरमपि भवति ॥ प्रेर्यते च भगवता अतः शरीरं १ शर् च तत् ईरं च शरीरं इति व्युत्पत्तिः ॥ तदेव भगवदावासस्थानत्वात् क्षेत्रं ॥ क्षीयते स्थीयते भगवता अत्रेति क्षेत्रं इति व्युत्पत्तिः ॥ कायदेहापरपर्यायं शरीरं तु क्षेत्रविकारत्वेन २ 'संघातश्चेतना धृतिः' इति वक्ष्यते ॥ एतत् अव्यक्तमहदादिक क्षेत्रं सर्वदा सर्वथा यो जानाति तं परमात्मानं ३ क्षेत्रज्ञमिति क्षेत्राक्षेत्रज्ञविषयकज्ञानवन्तो वदन्ति ॥ २ ॥

॥ अ ॥ अर्जुनः ॥

४ सप्तमेऽध्याये ५ 'भूमिरापोऽनलो वायु'रिति जडप्रकृतिमुक्त्वा ६ 'प्रकृतिं विद्धि मे परां । जीवभूता' मिति चेतनप्रकृतिरुक्ता ॥ चेतनप्रकृतिस्तु जीव एव ॥ स च पुरि देहे शयनात् पुरुष उच्यते ॥ उक्तश्च सः पुरुषशब्देन त्वया ७ 'पुरुषं पुरुषर्षभ' इत्यादौ ॥ क्षेत्रं क्षेत्रज्ञः इति द्वौ पदार्थौ उपनिषत्सु पुराणेषु च तत्र तत्र अभिधीयेते । किं प्रकृतिपुरुषावेव क्षेत्रक्षेत्रज्ञौ उत अन्यौ । किं पुरुषः महदादिकमिव शरीरमिव च प्रकृतेर्विकारः उत प्रकृतेरन्यः ॥ प्रकृतेरन्यत्वे किं परमात्मा त्वमेव सः उतान्यः ॥

---

१. शीर्यते शृणाति वा इति शर् । ईर्यते इति ईरं इति शब्दनिष्पत्तिः २. १३. ७. ३ क्षेत्रज्ञ इति तद्विद इति पाठांतरं ॥ ४. इद शरीरमित्येव अध्यायारंभो दृश्यते ॥ प्रकृतिं पुरुषं चैवेति प्रश्नश्लोकः बहुषु कोशेषु नोपलभ्यते ॥ उपलभ्यते च द्वैतिनां पाठे केषुचन कोशेषु ॥ इदं शरीरमित्येव अध्यायमारभमाणानां अर्जुनप्रश्नप्रतिपादकश्लोकाभावात् अन्यत्रेव अत्रापि उत्तरानुरोधेन अर्जुनप्रश्न उन्नेयः ॥ ५. ७. ४. ६. ७. ५. ७. २. १५.

आद्ये कथं तस्य सुखदुःखबन्धमोक्षाः घटेत ॥ परमात्मशब्दितपरब्रह्मणस्तदभावात् ॥ अन्यत्वे अद्वैतहानिः ॥ परम ... सः प्रकृतिस्तं वशीकृत्य सुखदुःखादिमंतं बन्धमोक्षादिमंतं च करोतीति चेत् ॥ बन्धः कः कीदृशः । मोक्षश्च कः कीदृशः । बन्धः कदा जातः । तस्मान्मोक्षस्य उपायः कः ॥ १'प्रसादे सर्वदुःखानां हानिरस्योपजायते । प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति' २'समाधावचला बुद्धिस्तदा योगमवाप्स्यसि'॥ ३ 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' ॥ ४ 'तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परं' ॥ ५ 'ज्ञात्वा मां शान्तिमृच्छति' ॥ ६ 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' ॥ ७ 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' ॥ इत्यादौ ज्ञानान्मोक्ष इत्युक्तम् ॥ तच्च ज्ञानं किं किंविषयकं । विषयभूतं वस्तु कीदृशं ॥ तादृशस्य मोक्षसाधनस्य ज्ञानस्य उपायः कः इत्याद्यर्थविशेषबुभुत्सया त्वामहमर्थयामि ॥ कृपया परमया अनुग्राह्याय मे सर्वमिदमुपदिश ॥

कृष्णः ॥

इदं शरीरं इदं चक्षुरिदं श्रोत्रं इयं बुद्धिः इदं मनः इत्यादिरूपेण इदमिदमित्यनुभूयमानं प्रकृतिमहदहंकारादिरूपं प्रकृतिप्राकृतात्मकं सर्वं दृश्यजातं कालेन शीर्यमाणत्वात् शीर्यत इति शरीरमिति शरीरशब्दवाच्यं क्षेत्रमिति तत्र तत्र उच्यते ॥ प्रकृतिरेव कार्यकारणरूपा क्षीयते नश्यति पुरुषः रागद्वेषादिरूपेणानेन इति, क्षिणोति हिनस्ति पुरुषमिति, क्षः क्षयात् संसारात्मकात् अनर्थात् शमदमादिरूपेण पुरुषं त्रायते रक्षतीति, कालेन स्वयं क्षीयते अपक्षीयते नश्यति वा इति, संसारप्ररोहभूमित्वात् सुखदुःखरूपपुण्यपापफलोत्पादकत्वाद्वा क्षेत्रवद्वर्तते इति वा, क्षेत्रं ॥ नान्यः पदार्थः ॥ देहकायापरपर्यायं शरीरमेव क्षेत्रमिति कुतो नोच्यते इति चेत् तादृशं शरीरं क्षेत्रैकदेशत्वेन ८'संघातश्चेतनाधृति' रिति संघातपदेन वक्ष्यते ।

---

१. २. ६५ २. २. ५३. ३. ४. ३९. ४. ५. १६. ५. ५. २९. ६. १० १०. ७. १२ ७. ८. १३ ७.

अतः प्रकृतिप्राकृतात्मकं सर्वं दृश्यजातमेव क्षेत्रं ॥ क्षेत्रशब्दिते क्षेत्रैकदेशे शरीरे स्थित्वा अहमिति ममेति च यो जीवोऽभिमन्यते सः शरीराभिमानी पुरुष एव क्षेत्रज्ञः इति तज्ज्ञाः वदन्ति ॥ देहापरपर्यायं शरीरमेव क्षेत्रमिति भ्रान्तिजनकस्य शरीरपदस्य प्रयोगः किमर्थमिति चेत् देहे स्थितस्यैवात्मनः अहं ममेत्याद्यभिमानदर्शनात् प्रदर्शनार्थं शरीरपदप्रयोगः ॥ कार्यकारणरूपा प्रकृतिः क्षेत्रं तदेकदेशे देहे स्थित्वा अहं ममेत्यभिमन्यमानो जीवः पुरुषशब्दवाच्यः क्षेत्रज्ञः ॥ हे पार्थ सम्यगवधारयेदम् ॥ २ ॥

॥ वि ॥ अर्जुनः ॥

सप्तमे जडप्रकृतिजीवप्रकृतिरूपे द्वे प्रकृती उक्ते ॥ स च जीवः पुरुषशब्देनोक्तः ॥ इन्द्रियाणि शरीरं च जडप्रकृतेः परिणामः इति १' ब्रह्मण्याधाय कर्माणि २' सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी । नवद्वारे पुरे' इत्यत्रोक्तम् ॥ किं तच्छरीरं स पुरुष एव च क्षेत्रक्षेत्रज्ञौ उतान्यौ ॥ किं शरीरमेव जीवः उतान्यः ॥ अन्य इति चेत् कुतः । प्रकृतिः कीदृशी तत्संसृष्ट आत्मा कीदृशः तद्वियुक्तः शुद्धात्मा कीदृशः शुद्धस्यात्मनः प्रकृतिबंधः कदा जातः कीदृशः प्रकृतिबन्धरहितशुद्धात्मस्वरूपप्राप्तिरुपायः कः इत्यादिकं विविच्य ब्रूहि ॥

कृष्णः ॥

हे पार्थ देहापरपर्यायं शरीरं क्षेत्रवत्पुण्यपापफलनिर्वर्तकत्वात् क्षेत्रमित्युच्यते ॥ एतत् शरीरं ममेदं अहं वेद्मीति यो जनाति सः क्षेत्रज्ञः । इति तज्ज्ञा वदन्ति ॥ वेद्यं शरीरं वेदिता जीवः ज्ञेयज्ञातृभावात् शरीरात्मनोर्भेदः ॥ उक्तश्च प्रमातृत्वैकस्वभावस्यात्मनः प्रमेयत्वैकस्वभावात् शरीराद्भेदः ३''अन्तवन्त इमे देहा' इत्यत्र ॥४'' संघातश्चेतना धृतिः'' इति संघातपदेन शरीरं क्षेत्रतयैव वक्ष्यते न क्षेत्रैकदेशतया ॥ अतो युक्तमिदम् ॥ २ ॥

---

१. ५. १०. २. ५. १३. ३. २. १८. ४. १३. ७.

॥ द्वै ॥ **अर्जुनः** ॥

प्रकृतिः क्षेत्रं भगवान् क्षेत्रज्ञः इत्युक्तम् ॥ अस्तु भगवतः क्षेत्रज्ञत्वं ॥ क्षेत्रविषयकज्ञानवान् हि क्षेत्रज्ञः जीवस्य क्षेत्रैकदेशे देह मनोबुद्धीन्द्रियादिषु च अहं ममेत्यादिज्ञानसद्भावात् क्षेत्रज्ञत्वमापद्यते ॥ किं तदस्ति उत न ॥ आद्ये भगवतः क्षेत्रज्ञत्वोक्तिः कथं ॥ द्वितीये अवयवार्थानुगमात् नेति कथं वक्तुं शक्यम् ॥ ब्रूहि ॥

**कृष्णः** ॥

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥**

क्षेत्रज्ञं चेति ॥ हे भारत भरतकुलोत्पन्न अर्जुन सर्वक्षेत्रेषु सर्वाणि च तानि क्षेत्राणि च सर्वक्षेत्राणि तेषु मां चापि क्षेत्रज्ञं विद्धि जानीहि । क्षेत्रज्ञमपि मां च मामेव जानीहि । मच्छेषभूतं मच्छरीरभूतं च जानीहि ॥ क्षेत्रं च क्षेत्रज्ञश्च क्षेत्रक्षेत्रज्ञौ तयोः क्षेत्रक्षेत्रज्ञयोः विषये यत् ज्ञानं तत् मम ज्ञानं मद्विषयकं ज्ञानं ब्रह्मज्ञानमित्यर्थः ॥ इति मम मतं ॥ २ ॥

**प्रकृतेः क्षेत्रत्वेन तदेकदेशे शरीरादौ किंचिज्ज्ञानवतो जीवस्य क्षेत्रज्ञत्वं स्पष्टं ॥ न केवलं स एव क्षेत्रज्ञः किन्तु अहमपि॥ मां चापि क्षेत्रज्ञं जानीहि॥ किं जीव इव क्षेत्रैकदेशविषयकज्ञानात् क्षेत्रज्ञो भवान् इति चेत् सर्वक्षेत्रेषु क्षेत्रज्ञोऽहं ॥ जीवस्तत्तत्क्षेत्रमात्रक्षेत्रज्ञः । अहं तु सर्वक्षेत्रक्षेत्रज्ञः ॥ हन्त द्वयोरप्यादवयोः दस्संपद्येतेति चेत् । नोभयोस्समप्राधान्यम् ॥ एकः परमोत्तमः अपरस्तु परमाधमः ॥ जीवः अमुख्यक्षेत्रज्ञः अहं तु मुख्यक्षेत्रज्ञः इत्येकस्मिन् क्षेत्रे मुख्यामुख्यौ द्वौ क्षेत्रज्ञौ ॥ स्पष्टं चेदं वक्ष्यते ॥ १ 'पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्' ॥ २ ' परमात्मेति**

१. १३. २२. २. १३. २३.

चाप्युक्तो देहेऽस्मिन् पुरुषः परः इति ॥ क्षेत्रक्षेत्रज्ञयोर्विषये उक्तरीत्या यज्ज्ञानं तदेव १मद्विषयकं मोक्षसाधनं ब्रह्मज्ञानशब्दितं ज्ञानम् ॥ क्षेत्रशब्दितसकलजडानां स्वरूपस्थितिनियामकोऽहं क्षेत्रज्ञशब्दितसकलजीवानां स्वरूपस्थितिप्रवृत्तिनियामकोऽहम् इत्याकारकं मद्विषयकं ज्ञानं ब्रह्मज्ञानं इति मम २ मतम् ॥ अतो निश्चितमेतत् ॥ हे पार्थ नात्र संशयः कार्यः ॥ ३ ॥

॥ अ ॥ अर्जुनः ॥

शरीरं क्षेत्रं जीवः क्षेत्रज्ञः इत्युक्तं । तेन एकैकस्मिन् शरीरे एकैको जीवः इत्यापतितम् ॥ ततश्च त्वमेकः जीवाश्चानेके इति परमार्थपदार्थबाहुल्यादद्वैतहानिरापद्यते ॥ ब्रूहि ॥

कृष्णः ॥

क्षेत्रज्ञशब्दितो यो जीवः सः अहमेव । तमपि मामेव विद्धि॥ न तु मद्भिन्नं सत्यं किंचिदस्ति ॥ ब्रह्मैव अविद्यया अध्यारोपितकर्तृत्वभोक्तृत्वादिसंसारधर्मसंसर्गेण जीवतामापद्यते ॥ स च जीवः आरोपितसकलसंसारधर्मप्रहाणेन ब्रह्मतामाप्नोति ॥ न तु जीवब्रह्मणोर्भेदः॥ब्रह्माद्युत्तमक्षेत्रेषु विद्यमानाः क्षेत्रज्ञाः त्वदभिन्ना इति युज्यते कथं क्रिमिकीटाश्वगर्दभादिपरमाधमक्षेत्रेषु विद्यमानाः क्षेत्रज्ञाः त्वदभिन्नाः स्युः ॥ वक्तुमप्येवं त्रसति रसना मा वद वचने अज्ञानां बुद्धिर्भिद्यत इति चेत् सर्वेष्वपि क्षेत्रेषु क्षेत्रज्ञं मामेव विद्धि ॥ उक्तं हि मया ॥ ३ ' शुनि चैव श्वपाके च पण्डिताःसमदर्शिनः' इति ॥ नतु समकारिण इति नापि समवादिन इति उत्तममध्यमाधमरूपेण वैषम्यं तु प्रकृतिपरिणामशरीरगतं नात्मगतम् ॥ अतो विहाय साध्वसं सर्वक्षेत्रेषु क्षेत्रज्ञं मदभिन्नमेव जानीहि ॥ अपिशब्दात् क्षेत्रमपि मामेव विद्धि ॥ अधिष्ठानभूतपरब्रह्माज्ञानात् तत्र उक्तरूपं क्षेत्रं शुक्त्यज्ञानात् शुक्तौ रजतमिव कल्पितमवभासते ॥ न हि शुक्तौ दृश्य-

---

१. २. मम ज्ञानं मम मतं इत्यन्वयः॥ ३. ५. १८

मानं रजतं शुक्तेरन्यत् । अपि तु शुक्तिरेव। तद्वत् ब्रह्मणि दृश्यमानं दृश्यजातं न ब्रह्मणोऽन्यत् । अपि तु ब्रह्मैव ॥ अत क्षेत्रमप्यहमेव ॥ त्वं क्षेत्रमपि मामेव विद्धि ॥ निर्गुणे निष्क्रिये नीरूपे अद्वितीये ब्रह्मणि न गुणः न च क्रिया नापि रूपादिकं। अतः ततो भिन्नं किमपि तत्र नास्ति ॥ ततश्च सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मेति स्थितम् ॥ क्षेत्रं मिथ्या क्षेत्रज्ञो जीवः सत्यः स च वस्तुतः परब्रह्माभिन्नः तयोर्भेदप्रतीतिर्भ्रान्तिः १भेदस्तु मायाकल्पितः व्यावहारिकः अभेद एव पारमार्थिकः इति क्षेत्रक्षेत्रज्ञयोर्विषये यज्ज्ञानं तदेव मोक्षसाधनम् मद्विषयकं ज्ञानं ब्रह्मज्ञानशब्दितं ॥ अन्यत्तु वृथापाण्डित्यमात्रं इति मम मतं ॥ भायां ब्रह्मविद्यायां रतेन त्वया सम्यगवधारणीयं आवश्यकमिदम् ॥ ३ ॥

॥ वि ॥ अर्जुनः ॥

किं क्षेत्रं क्षेत्रज्ञश्चेत्युभयं त्वदधीनं उत स्वतन्त्रम् ॥ ब्रूहि ॥

कृष्णः ॥

क्षेत्रज्ञं अपिशब्दात् क्षेत्रं च मच्छेषतया मच्छरीरतया च मद्विशेषणत्वेन मां विद्धि मदभेदेन विद्धि॥ यथा क्षेत्रं क्षेत्रज्ञं प्रति विशेषणत्वेन चैत्रोऽयं मैत्रोऽयमिति क्षेत्रज्ञाभेदेन व्यपदिश्यते तथा क्षेत्रं क्षेत्रज्ञश्चेत्युभयं मां प्रति विशेषणत्वेन मदभेदेन व्यपदिश्यते॥ २ 'यस्य पृथिवी शरीरं'३ 'यस्यात्मा शरीरं' इति श्रुतिः॥ क्षेत्रस्य क्षेत्रज्ञस्य च त्वच्छेषत्वेन त्वच्छरीरत्वेन च त्वदधीनतया त्वां प्रति विशेषणत्वेन त्वदभेदव्यपदेशः,अधमक्षेत्रक्षेत्रज्ञविषये युज्यते कथं ब्रह्माद्युत्तम क्षेत्रक्षेत्रज्ञविषये इति चेत् ॥ हे पार्थ ब्रह्मादयः उत्तमा अपि ४ मदपेक्षयाऽधमा एव। अत उत्तममध्यमाधमक्षेत्रेषु

१. अस्यार्थस्य युक्तिभिः प्रमाणैश्च स्थापनं भाष्ये शंकरानंदीये च द्रष्टव्यं ॥ २. ३. बृ. ५ ७. ४. अत्र, 'आत्मेश्वरोऽसि न परोऽस्ति तवेश्वरोऽन्यो विश्वस्य चासि पतिरस्य परायणं च। नारायणाच्युत परस्त्वमिहैक एव ब्रह्मादयोऽपि भवदीक्षणलब्धसत्ता ॥ १ ॥ स्वाभाविकानवधिकातिशयेशितृत्वं नारायण त्वयि न मृष्यति वैदिकः कः ॥ ब्रह्मा शिवः शतमखः परमः स्वराडित्यतेऽपि यस्य महिमार्णवविप्रुषः ते ॥ २ ॥ इत्यादयः श्लोकाः एतदर्थकमन्यत् गाथादिकं च इत्येतत् अनुसन्धेयं ॥

सर्वेषु क्षेत्रं क्षेत्रज्ञश्चेत्युभयं मदधीनमेव ॥ अतः १ 'त्वमक्षरं सदसत्तत्परं यत्' २ 'वायुर्यमोऽग्निर्वरुणः शशांकः पितामहस्त्वं प्रपितामहश्च' इत्यभेदव्यपदेशः ॥ क्षेत्रं क्षेत्रज्ञश्चेत्युभयं मदधीनं न तु तस्य स्वातंत्र्यं ॥ ३नापि तयोर्मदभेदः ॥ क्वचिदभेदव्यपदेशस्तु उक्तरीत्या विशेषणत्वेन इति क्षेत्रक्षेत्रज्ञविषये यद्ज्ञानं तत् मद्विषयक ज्ञानं तदेव उपादेयं नान्यदिति मम मतम ॥ ३ ॥

**अर्जुनः ॥**

क्षेत्रक्षेत्रज्ञविषयकं ज्ञानं गहनमिति भाति ॥ अतस्तदुभयं विविच्यब्रूहि ॥

**कृष्णः ॥**

**तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ४ ॥**

**तदिति** ॥ तत्क्षेत्रं यत् च यादृक् च यद्विकारि ये च ते विकाराश्च यद्विकाराः यद्विकाराः अस्य संतीति यद्विकारि । विकाराः अस्य संतीति विकारि येः विकारि यद्विकारि इति वा । यतः येन यत प्रवृत्तिमच्च ॥ यतः यस्मात् यत् उत्पद्यते तच्च ॥ यतः यस्मै प्रयोजनाय यच्च ॥ स च क्षेत्रज्ञः यः यः प्रभावः यस्य स यत्प्रभावः यत्प्रभावश्च तदेतत्सर्वं समासेन संग्रहेण मे मम सकाशात् शृणु ॥ यत्तत्क्षेत्रं तत् यादृक् इति वा ॥ ४ ॥

॥द्वै॥तत् क्षेत्रतयोक्तं अव्यक्तादि यत्स्वरूपकं तस्य स्वरूपं यत् यत्प्रकारकं तस्य प्रकाराः ये यद्विकारकं तस्य विकाराः ये येन प्रवर्तकेन ४ प्रवर्तते तस्य प्रवर्तकः यः सः प्रव[र्त]कः क्षेत्रज्ञश्च यत्स्वरूपकः तस्य स्वरूपं यत् सः यत्प्रभावकः तस्य प्रभावः यादृशः क्षेत्रस्य स्वरूपं प्रकारं विकारान् प्रवर्तकं च क्षेत्रज्ञस्य स्वरूपं तस्य प्रभावं च संग्रहेण ब्रवीमि ॥

---

१. ११. ३७. २. ११. ३९. ३ अभेदनिराकरणं तु भाष्यतात्पर्यचंद्रिकयोर्द्रष्टव्यं ॥ ४. यत् इति यत् यती यंति इति प्रथमैकवचनांतं गतिमत् । इत्यर्थः ॥

तदखिलं मे संकाशात् शृणु । गहनमपि सुगमं करिष्यामि ॥ तथोपदिशामि शृणु तदवधानेन ॥४॥

१.॥अ॥ यच्चेदं क्षेत्रं तत् यादृक् यद्धर्मकं तस्य धर्माः ये॥ यतश्च यत्॥ प्रकृतिः कार्यरूपा कारणरूपा च तत्र कारणरूपाद्यस्मात् कार्यरूपं यदुत्पद्यते क्षेत्रतयोक्तेषु प्रकृतिप्राकृतात्मकदृश्यवर्गेषु कारणभूतं कार्यभूतं च यद्यत् ॥ यतः यस्मात् भवति तस्य उत्पादकं यत् ॥ यत् यद्भेदवत् तस्य भेदाः ये । इति वा ॥ शिष्टं पूर्ववत् ॥ ४ ॥

॥ वि ॥ यत् जडाजडात्मकद्रव्ययोर्मध्ये यद्द्रव्यं ॥ यादृक् येषामाश्रयभूतं ॥ यतः यस्मै प्रयोजनायोत्पन्नं ॥ यत् यत्स्वरूपकं ॥ शिष्टं पूर्ववत् ॥ ४ ॥

अर्जुनः ॥

संग्रहेण मयोच्यमानमिदमखिलं शृणु इत्युक्तं॥ कुत्र कैरुक्तं क्षेत्रक्षेत्रज्ञयोः स्वरूपादिकं विस्तरेण॥ यत्रकुत्रचित् विस्तरेणोक्तं चेत् तत एव ज्ञातुं शक्यं । किं तव वचनप्रयासेन ॥ किं च अहं ब्रवीमि मत्तः शृण्वित्युक्तं कथं त्वमिदमखिलं जानासि ॥ किं त्वं स्वयमेव स्वोत्प्रेक्षया वक्ष्यसि ॥ उत यैः कैश्चित् प्रामाणिकैरुक्तमनुसृत्य ॥ ब्रूहि ॥

कृष्णः ॥

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ॥
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ५ ॥

ऋषिभिरिति ॥ ऋषिभिः बहुधा बहुभिः प्रकारैः गीतं उक्तमेव विविधैः नानाविधैः छंदोभिः वेदैः पृथक् गीतमेव हेतुः युक्तिः एषु अस्तीति हेतुमन्ति तैः हेतुमद्भिः ब्रह्मणः

१. शुश्रूषातिशयोत्पादनाय संग्रहोपन्यासोऽयम् ॥

सूत्राणि ब्रह्मसूत्राणि तेषां पदानि ब्रह्मसूत्रपदानि तैः ब्रह्मसूत्रपदैः विशेषेण निश्चितं विनिश्चितं सम्यक् निर्णीतं चैव तत् समासेन मे शृणु इति पूर्वेणान्वयः ॥ विनिश्चितैः इति पाठे हेतुमद्भिः विनिश्चितैः विशेषेण निश्चयजनकैः ब्रह्मसूत्रपदैश्च गीतमेव तत् शृणु इत्यन्वयः ॥ ९ ॥

द्वै॥वि॥मया वक्ष्यमाणमिदमखिलं बहुविधं १ऋषिभिः बहुभिः २प्रकारैरुक्तं तदेव संग्रहेणाहं वक्ष्यामि ॥ तत्र प्रमाणमृषयः तेषां प्रमाणं किमिति चेत् ॥ ऋग्यजुस्सामादिनानाप्रकारैः वेदैः प्रत्येकं असङ्कीर्णरूपेणोक्तं ॥ ऋषीणां प्रमाणं वेदा इत्युक्तं कथं तदर्थनिर्णयः कर्तुं शक्यः अतिगहनार्थत्वात् ॥ केन प्रमाणेन वेदार्थं निर्णीय तदनुसारेण ऋषिभिर्गीतमिति चेत् ॥ ब्रह्मसूत्रपदैश्चैव विनिश्चितम् ३ब्रह्मसूत्रस्थैः पदैः सम्यक् निश्चितमेव॥ एकैकस्यापि ब्रह्मसूत्रपदस्य अनेकवेदार्थनिर्णायकत्वात्॥ पद्यते ज्ञायते अर्थः एभिः इति व्युत्पत्त्या पदानि वाक्यानि ४ब्रह्मसूत्ररूपैः ५ब्रह्मसूत्रस्थैर्वा वाक्यैः ६ब्रह्मसूत्राख्यैः अर्थप्रतिपादकतया पदशब्दवाच्यैः शारीरकसूत्रैः पद्यते ज्ञायते तत्त्वं अत्र ब्रह्मसूत्रेणेति पदानि ब्रह्मसूत्रेण निर्णेतव्यार्थानि ७ब्रह्मसूत्रविषयवाक्यभूतानि वेदवाक्यानि तैश्च ८विनिश्चितमिति वा ॥ ब्रह्मसूत्रैः वेदार्थं निर्णीय तदनुसारेण ऋषिभिर्गीतमित्युक्तं भवति ॥ ब्रह्मसूत्राणामतिगहनार्थतया तदर्थनिर्णयः कथं कर्तुं शक्यः इति चेत् ॥ युक्त्यनुसारीणि तानि प्रशस्तबहुयुक्तिमन्तिच्च योऽर्थो युक्तियुक्तः तमर्थं तेषां तदुक्तयुक्तीनां च परिकल्प्य तदनुसारेण वेदानामर्थो निश्चेतव्यः॥ "युक्तियुक्तं वचो ग्राह्यं न तु पुरुषगौरवा"दिति हि वदन्ति॥ युक्त्यनुसारेण सूत्रार्थं निर्णीय तदनुरोधेन वेदार्थं निर्णीय तदनुसारेण ऋषिभिर्गीतम् ॥ तदनुसारेण मया वक्ष्यते ॥ अतः श्रद्धया शृणु ॥ अतिविस्तरत्वात्

१-२. बहुधा इत्यस्य ऋषिभिरित्यनेन गीतमित्यनेन चान्वयः॥ ३. ५ ब्रह्मसूत्राणां संबंधीनि पदानि तैः ॥ ४. ६. ब्रह्मसूत्ररूपाणि च तानि पदानि च तैः ॥ ७ ब्रह्मसूत्राणां पदानि आस्पदानि तैः॥ ८. विनिश्चितैरिति पाठे हेतुमद्भिः अतएव असंदिग्धार्थप्रतिपादकैः निश्चयजनकैः ब्रह्मसूत्रपदैश्च गीतमेव मयोच्यमानं शृण्वित्यर्थः ॥

गहनार्थत्वाच्च तेषां तैः क्षेत्रक्षेत्रज्ञयाथात्म्यस्य ज्ञातुमशक्यतया संगृह्य तत्सारमहं ब्रवीमि ॥ शृणु ॥ ५ ॥

॥ अ ॥ ऋषिभिः बहुधा गीतं ऋषिप्रोक्तेषु योगशास्त्रेषु विस्तरेणोक्तम् ॥ विविधैः छन्दोभिः पृथक् गीतं नित्यनैमित्तिककाम्यभेदभिन्ननानाकर्मप्रतिपादककर्मकांडैः कर्मतद्देवतातत्फलरूपेण पृथक् विस्तरेणोक्तम् ॥ १ ब्रह्मणः सूत्राणि प्रतिपादकानि पदानि वेदवाक्यानि तैः॥ २सूच्यते सगुणद्वारा व्यवधानेन प्रतिपाद्यते ब्रह्म एभिरिति सूत्राणि ३"यतो वा इमानि भूतानि जायन्ते॥ येन जातानि जीवन्ति॥यत्प्रयन्त्यभिसंविशन्ति" इत्यादीनि तटस्थलक्षणपराणि वाक्यानि पद्यते साक्षात्प्रतिपाद्यते ब्रह्म एभिरिति पदानि ४'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादीनि स्वरूपलक्षणपराणि वाक्यानि तदुभयात्मकज्ञानकाण्डैः ५"को ह्येवान्यात्कः प्राण्यात्॥यदेष आकाश आनन्दो न स्यात्"॥ इत्यादिरीत्या तत्रतत्र तत्तदर्थोचितयुक्तीः प्रतिपादयद्भिः । अतः असंदिग्धार्थप्रतिपादकतया निश्चयजनकैः पृथग्गीतम्॥ ६" अथातो ब्रह्मजिज्ञासा" इत्यादिब्रह्मसूत्रात्मकानि ७ पदानि वाक्यानि तैः ८" ईक्षतेर्नाशब्दं" ९ "आनन्दमयोऽभ्यासात्" इत्यादियुक्तिमद्भिः पृथग्गीतं चेत्र अतः श्रद्धेयं क्षेत्रक्षेत्रज्ञयाथात्म्यं तत् त्वं मयोच्यमानं परमेणादरेण शृणु ॥ ५ ॥

अर्जुनः ॥
अवहितोऽस्मि ब्रूहि ॥

कृष्ण : ॥
महाभूतान्यहंकारोबुद्धिरव्यक्तमेव च ।
इंद्रियाणि दशैकं च पंचचेंद्रियगोचराः ॥ ६ ॥

---

१. ब्रह्मसूत्राणि च तानि पदानि च तैः॥ २. सूत्राणि च पदानि च सूत्रपदानि ब्रह्मणः सूत्रपदानि तैः ॥ ३. तै. ३. १. ४ तै. २. १. ५. तै २. ७. ६. १. १ १. ७ ब्रह्मसूत्रात्मकानि च तानि पदानि च तैः ॥ ८. १. १. ५. ९. १. १. १२.

**इच्छा द्वेषस्सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ७ ॥**

महाभूतानीति ॥ महान्ति च तानि भूतानि च महाभूतानि पृथिव्यप्तेजोवाय्वाकाशाख्यानि अहंकारः अहंकारतत्वं बुद्धिः महत्तत्वं अव्यक्तं प्रकृतिश्चैव दश एकं च एकादश इन्द्रियाणि इन्द्रियाणां गोचराः इन्द्रियैर्ज्ञेयाः विषयाः पञ्च च इच्छा द्वेषः सुखं दुःखं संघातः भूतेन्द्रियादिसंहतिरूपं शरीरं चेतना चेतसोऽव्याप्तिः बुद्धिवृत्तिर्वा धृतिः धैर्यं इत्येतत् विकारैः सहितं सविकारं क्षेत्रं इति उक्तप्रकारेण समासेन संक्षेपेण उदाहृतं ते मया उक्तं ॥ चेतनाधृतिः इत्येकं पदं ॥ चेतनस्य जीवस्य आधृतिः आधारः संघातः देहः इति वा ॥ ६ ॥ ७ ॥

**॥द्वै॥ अ॥ पृथिवी आपः तेजः वायुः आकाशः इति पंच महाभूतानि तत्कारणभूतं अहंकारतत्वं तत्कारणभूतं१बुद्धिशब्दितं महत्तत्वं तत्कारणभूता त्रिगुणात्मिका अव्यक्तशब्दिता प्रकृतिः सा च इत्येताऽन्यत्र प्रकृतिः॥श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पंच ज्ञानेन्द्रियाणि॥ वाक्पाणिपादपायूपस्थाख्यानि पंच कर्मेंद्रियाणि॥ मनश्चैकमिंद्रियं॥ शब्दस्पर्शरूपरसगंधाख्याः पंच ज्ञानेंद्रियग्राह्यविषयाश्च इति प्रकृत्या सह चतुर्विंशतिः तत्वानि॥ इच्छा द्वेषः सुखं दुःखं २ संघातशब्दितं भूतेंद्रियादिसंहतिरूपं शरीरं ३ चेतसो व्याप्तिश्चेतनाशब्दिता धैर्यं च इत्येतत् महाभूतादि धृत्यन्तं विकारसहितं क्षेत्रम् ॥ इदं च संक्षेपेण मया ते प्रोक्तम् ॥ इच्छादिग्रहणं सङ्कल्पादीनां उपलक्षणम् ॥ अत्रेदमवधारय ॥ प्रकृतिः क्षेत्रस्वरूपं महदादयः प्रकाराः इच्छादयोविकाराः । ततश्च**

---

द्वै. १. महत्तत्वमप्यहंकारपदेन गृह्यते ॥ बुद्धिरंतःकरणविशेषः ॥ अ. २. संघातः इंद्रियमनश्चिदात्मनां एकलोलीभावरूपो भोक्ता ॥ 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति (का ३. ४.) श्रुतिः ॥ ३ स्वरूपज्ञानाभिव्यंजिका प्रमाणासाधारणकारणिका चित्तवृत्तिर्ज्ञानाख्या चेतना बुद्धिवृत्तिविशिष्ट आत्मचैतन्याभासो वा ॥

यच्च यादृक्च यद्विकारि इति त्रयं विवृतं ॥ प्रकृतिः क्षेत्रस्वरूपं महदादयो विकाराः इच्छादयो धर्माः ॥ ततश्च यच्च यद्विकारि यादृक्च इति त्रयं विवृतमिति वा ॥ महाभूतादि धृत्यन्तं क्षेत्रमेव क्षेत्रांतःपातित्वात् ॥ सविकारमित्यस्य [1]जन्मादिनाशान्तविकारवदित्यर्थः । जन्मादिनाशान्त [2]विकारसहितं महाभूतादि धृत्यन्तं क्षेत्रं ते मया प्रोक्तम् ॥ मायाख्या पारमेश्वरी शक्तिरव्यक्तं सर्गादौ तदैक्षतेति तद्विषयमीक्षणं बुद्धिः ईक्षणानन्तरं बहु स्यामिति बहुभवनसङ्कल्पोऽहंकार तत आकाशादिक्रमेण पंचानां भूतानामुत्पत्तिः इत्यौपनिषदानां पन्था ॥ ६ ॥ ७ ॥

॥वि॥ महाभूतानि अहंकारः बुद्धिः अव्यक्तमेव च इति क्षेत्रशब्दितशरीरारंभकद्रव्याणि ॥ इंद्रियाणि दशैकं च इंद्रियगोचराः पंच च इति क्षेत्राश्रितानि तत्वानि ॥ इच्छा द्वेषः सुखं दुःखं इति क्षेत्रविकाराः क्षेत्रकार्यत्वात् ॥ इच्छादयः आत्मधर्मा अपि क्षेत्रसंबंधप्रयुक्ततया क्षेत्रकार्यत्वेन क्षेत्रविकारा उच्यंते ॥ चेतनाधृतिरित्येकं पदं ॥ चेतनस्य आधारः सुखदुःखे भुंजानस्य भोगापवर्गौ साधयतश्चेतनस्य आधारतयोत्पन्नः संघातः देहः भूतसमुदायरूपत्वेन संघातशब्दितशरीररूपं एतत् क्षेत्रं प्रकृत्यादि पृथिव्यंतद्रव्यारब्धं इंद्रियाद्याश्रयभूतं इच्छाद्वेषसुखदुःखविकारकं ते मया प्रोक्तं ॥ क्षेत्रं जडरूपं द्रव्यं इंद्रियादीनामाश्रयभूतं इच्छादिविकारकं चेतनस्य सुखदुःखानुभवाय भोगापवर्गसाधनाय चोत्पन्नं संघातरूपं इति यच्च यादृक्च यद्विकारि यतश्च यत् इति पञ्चकं विवृतं बोध्यं ॥ ६ ॥ ७ ॥

अर्जुनः ॥

क्षेत्रं क्षेत्रज्ञः ज्ञानं चेति त्रयमुक्तं ॥ ज्ञेयं प्रकृतिः पुरुषश्च इति त्रयमपि वदितु-

---

१. जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यति इत षड् विकाराः । २. यद्विकारीत्येतत् 'प्रकृतिं पुरुषं चैव' (१३. २०) विवरिष्यते ॥

मिच्छामि वक्तव्यं ॥ इदानीं[१] क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तद्ज्ञानं मतं ममेति त्वयोक्तं ज्ञानं ज्ञातव्यानेकार्थांतर्विशेषसद्भावाद्दुःसाधनमिति भाति ॥ अतस्तस्य साधनान्युपदिश ॥

कृष्णः ॥

[२]अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ८ ॥

इंद्रियार्थेषु वैराग्यमनहंकार एव च ॥
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ९ ॥

असक्तिरनभिष्वंगः पुत्रदारगृहादिषु ॥
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ १० ॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ११ ॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्
एतज्ज्ञानमिति प्रोक्तं अज्ञानं यदतोऽन्यथा ॥ १२ ॥

अमानित्वमिति ॥ मानः अस्यास्तीति मानी न मानी अमानी अमानिनः भावः अमानित्वं मानिनः भावः मानित्वं तस्य अभावः अमानित्वं इति वा ॥ दंभः अस्यास्तीति दंभी न दंभी अदंभी अदंभिनः भावः अदंभित्वं दंभिनः भावः दंभित्वं तस्य अभावः अदंभित्वं इति वा ॥ अहिंसा हिंसायाः अभावः। क्षान्तिः सहनं। ऋजोः भावः आर्जवं।

---

१. १३-३. वि. २. क्षेत्रकार्यत्वादमानित्वादिसाधनानि तदव्यवधानेनोपदिश्यंते ॥

आचार्यस्य उपासनं शुश्रूषा आचार्योपासनं । शुचेः भावः शौचं । स्थिरस्य भावः स्थैर्यं । आत्मनः मनसः विशेषेण निग्रहः आत्मविनिग्रहः आत्मनः मनसः वा परमात्मनि नितरां ग्रहः इति वा ॥ ८ ॥

**इंद्रियार्थेष्विति** ॥ इन्द्रियाणां अर्थाः इंद्रियार्थाः इन्द्रियग्राह्याः शब्दादयो विषयाः तेषु विगतो रागो यस्मात् सः विरागः विरागस्य भावः वैराग्यं । अहङ्कारस्य अभावः अनहंकारश्चैव ॥ जन्म च मृत्युश्च जरा च व्याधिश्च दुःखं च दोषाश्च जन्ममृत्युजराव्याधिदुःखदोषाः तेषामनुदर्शनम् । व्याधिषु दुःखं च दोषश्च दुःखदोषौ तयोः अनुदर्शनं । दुःखरूपो-दोषः दुःखदोषः तस्य अनुदर्शनं इति वा । दुःखेषु दोषस्य अनुदर्शनं इति वा ॥ जन्ममृत्यु-जराव्याधिदुःखरूपाणां दोषाणां अनुदर्शनं इति वा ॥ ९ ॥

**असक्तिरिति** ॥ पुत्राश्च दाराश्च गृहंच पुत्रदारगृहाणि तानि आदिः येषां तानि पुत्रदारगृहादीनि तेषु सक्तिः आसक्तिः तस्याः अभावः असक्तिः ॥ अभिष्वङ्गः अत्यासक्तिः तस्य अभावः अनभिष्वङ्गः ॥ इष्टश्च अनिष्टश्च इष्टानिष्टे तयोः उपपत्तयः प्राप्तयः तासु इष्टानिष्टोपपत्तिषु नित्यं समं चित्तं यस्य सः समचित्तः तस्य भावः समचित्तत्वं च ॥ १० ॥

**मयीति** ॥ अन्यस्य योगः संबन्धः अन्ययोगः तस्य अभावः अनन्ययोगः तेन व्यभिचारः अस्याः अस्तीति व्यभिचारिणी सा न भवतीत्यव्यभिचारिणी व्यभिचारस्या-भावः अव्यभिचारः सः अस्याः अस्तीत्यव्यभिचारिणी इति वा मयि भक्तिश्च ॥ न विद्यते अन्यः अन्यद्वा यस्मिन् सः अनन्यः स चासौ योगश्च अनन्ययोगः तेन अव्यभिचारिणी मयि विषये भक्तिः भजनं च इति वा॥ विविक्तः शुद्धः स चासौ देशश्च विविक्तदेशः तं सेवते इति विविक्तदेशसेवी तस्य भावः विविक्तदेशसेवित्वं ॥ विविक्तः निर्जनः इति वा ॥ जनानां संसत् सभा जनसंसत् तस्यां अरतिः अप्रीतिः ॥ ११ ॥

अध्यात्मेति ॥ आत्मानं जीवात्मानं परमात्मानं च अधिकृत्य जातं अध्यात्मं तच्च तत् ज्ञानं च अध्यात्मज्ञानं नित्यस्य भावः नित्यत्वं अध्यात्मज्ञाने नित्यत्वं

अध्यात्मज्ञाननित्यत्वम् ॥ अधि उत्कृष्टः स चासौ आत्मा च अध्यात्मा परमात्मा तस्य विषये यत् ज्ञानं तत्र नित्यत्वं इति वा ॥ आत्मानं अधिकृत्य प्रवृत्तं अध्यात्मं तच्च तत् ज्ञायते अनेनेति ज्ञानं ज्ञानजनकं वेदान्तशास्त्रं च अध्यात्मज्ञानं तत्र नित्यत्वं इति वा ॥ तत्वस्य ज्ञानं तत्वज्ञानं तत्वज्ञानाय इदं तत्वज्ञानार्थं तच्च तत् दर्शनं शास्त्रपर्यालोचनं तच्च ॥ तत्वज्ञानस्य अर्थः प्रयोजनं मोक्षः तस्य दर्शनं पर्यालोचनं इति वा॥ तत्वज्ञानार्थ-चिंतनं इति पाठे तत्वज्ञानं अर्थः प्रयोजनं यस्य तत् तत्वज्ञानार्थं तच्च तत् चिंतनं मननं तच्च इति वा ॥ एतत् अमानित्वादि साधनजातं ज्ञायते अनेनेति ज्ञानं ज्ञानसाधनं इति प्र सम्यक् उक्तं प्रोक्तं ॥ अतः अमानित्वादेः अन्यथा वर्तमानं मानित्वदंभित्वहिंसाऽक्षांत्यनार्ज-वादिकं अज्ञानं ज्ञानसाधनं न प्रत्युत ज्ञानविरोधि अज्ञानसाधनं च ॥ तत्वज्ञानविषयस्य भगवतः दर्शनं यत् एतत् अपरोक्षज्ञानमेव ज्ञानं इति प्रोक्तं अतः अपरोक्षज्ञानात् अन्यथा यत् ज्ञानं तत् मोक्षसाधनज्ञानं न इति च ॥ १२ ॥

**हे पार्थ १'स च यो यत्प्रभावश्चे'त्युक्तस्य ज्ञेयस्य तत्प्रभावस्य चोपदेशे क्रियमाणे कथमेतादृशमहाप्रभावकं वस्तु मया ज्ञातुं शक्यमित्यशक्यसाधनत्वशंकया तत्र प्रवृत्तिर्नोत्पद्येत ॥ अतः साधनैरेभिरनायासेन ज्ञातुं शक्यमिति धैर्योत्पादनाय साधनानां विंशतिमुपदिशामि ॥ मानः विद्याधनकुलशीलाद्यभिमानरूपः तिरोहितो-गर्वः तद्वर्जनं एतदज्ञानमित्यन्वयः॥ सति माने २'तद्विद्धि प्रणिपातेन परिप्रश्नेने'त्युक्त प्रणिपातप्रश्नसेवादिकं न कुर्यात् ॥ अतो मानवर्जनमावश्यकम् ॥ ३दंभः बहिः प्रका-श्यमानो गर्वः तद्वर्जनम् ॥ तदपि मानवर्जनवदावश्यकम् ॥ मनोवाक्कायैः परहिंसा-वर्जनम् ॥ शत्रुमित्रोदासीनेषु समबुद्धेर्हि ध्यानद्वारा ज्ञानयोगाधिकारः ॥ उक्तं हि मया॥ ४"सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ॥ साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते"**

---

१. १३. ४. २. ४. ३४. ३. आत्मनोऽल्पत्वं ज्ञात्वापि महत्वप्रदर्शनं दंभः ख्यात्याद्यर्थं धर्माचरणं वा ॥ ४ ६ ९

इति॥ पुनः पुनः प्रश्नादिकुपिताचार्यकृततर्जनादेः सहनम्॥ पुनः पुनः प्रणिपातप्रश्नसेवादिकरणेन परैः कृतस्यापहासस्य सहनं च॥ मनोवाक्कर्मणामैकरूप्यं च॥ १तदभावे दुरात्माऽयमिति नोपदिशेदाचार्यः॥२ 'परिप्रश्नेन सेवये'त्युक्ता आचार्यस्य शुश्रूषा॥ तदभावे आचार्यो न प्रसीदेत्॥ ३मृज्जलाभ्यां कायशुद्धिर्बाह्यशौचं रागद्वेषादिराहित्यमान्तरं शौचं एतदुभयम्॥ महताऽप्यायासेनेदं साधनीयमिति स्थिरचित्तता॥ तदभावे विघ्नोपनिपातेन वा दुरवगाहविषयावगाहनायासेन वा मास्त्विदमिति निवर्तेत॥ निवर्तन्ते हि प्रायशो लोके सुगमत्वबुध्या प्रवृत्ताः दुर्ग्रहविषयग्रहणायासेन॥ आत्मशुद्धितस्य मनसः विशेषेण निग्रहः॥ आत्मशुद्धितस्य देहस्य अभ्यासवशात् नितरां ज्ञानसाधनादिप्रवृत्त्यनुकूलताऽऽपादनं॥ निगृहीतस्य शुद्धस्य मनसः विशद्धवाच्ये परमात्मनि नितरां ग्रहणं च॥ तदभावे ज्ञानाभ्यासो न सिध्येत्॥ ८॥

इन्द्रियविषयेषु शब्दस्पर्शरूपरसगन्धेषु रागवर्जनम्॥ तदभावे श्रवणमननध्यानाद्यवसरे इन्द्रियाणां विषयान् प्रति धावनेन मनसो ज्ञेये वस्तुनि नैश्चल्यानुदयात् ज्ञानं नोत्पद्येत॥ अविद्यमानगुणाभिमानमूलको गर्वोऽहंकारः ४विद्यादिभिः अहं सर्वोत्कृष्टः इति गर्वो वा अनात्मनि देहे आत्मत्वाभिमानः अनात्मीये पुत्रकलत्रादौ आत्मीयत्वाभिमानश्च वा तद्राहित्यम्॥ तदभावे प्रणिपातादिकं न कुर्यात्॥ देहे प्रीत्यतिशयेन देहायासः स्यादिति ज्ञानसाधने न प्रवर्तेत॥ पुत्रकलत्रादिभरणौपयिककार्यान्तरव्यापृत्या श्रवणादेरुपरोधः स्यात्॥ अतः इदं द्वयमावश्यकम्॥ जन्ममरणजराव्याधिदुःखदोषाणां पण्णां शास्त्रादिकं स्वानुभवं चानुसृत्य पर्यालोचनम्॥ जन्मादिदुःखान्तेषु पञ्चसु दोषस्य अनुदर्शनम॥ जन्मादिव्याध्यन्तेषु चतुर्षु दुःखरूपदोषस्य दुःखदोषयो-

---

१. अत्र, 'मनस्येकं वचस्येकं कर्मण्येकं महात्मनां॥ मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यत् दुरात्मना'मिति श्लोकोऽनुसन्धेयः॥ २ ४ ३४॥ ३. अत्र, 'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा॥ मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तर'मिति वचनमनुसन्धेयं॥ ४. मानस्तु विद्यमानगुणाभिमानमूलकः आत्मश्लाघासहितश्चेति भेदः॥ आत्मश्लाघासहितो मानः तद्रहितोऽहंकारः इति वा भेदः॥

र्वा अनुदर्शनम् ॥ जन्ममृत्युजराव्याधिदुःखरूपस्य दोषस्य अनुदर्शनम् ॥ सति चास्मिन् दोषदर्शनाद्विषयेभ्यो विरज्येत॥ततश्च इन्द्रियैस्सार्धं मनः ज्ञेय वस्तुनि निश्चलमवतिष्ठेत ॥ उक्तं च मया ॥ १ "यदा विनियतं चित्तं आत्मन्येवावतिष्ठते ॥ निस्पृहस्सर्वकामेभ्यो युक्त इत्युच्यते तदा" ॥ इति ॥ ९ ॥

पुत्रकलत्रगृहोद्यानादिषु आसक्तिवर्जनम् ॥ निश्शेषमासक्तिं वर्जयितुमशक्तानां २ अभिष्वंगशब्दितात्यासक्तिवर्जनं ॥ उक्तं हि मया ॥ ३ "यस्सर्वत्रानभिस्नेहः" इति ॥ तदभावे तद्भरणचिन्तातंकवतो ध्यानादिकं न सिध्येत् ॥ इष्टप्राप्तौ हर्षराहित्येन अनिष्टप्राप्तौ विषादराहित्येन च सदा मनसः समता ॥ तदभावे इष्टानिष्टप्राप्तिमूलकहर्षविषादजर्झरितं मनः ज्ञेयं वस्तु न स्पृशेत् ॥ उक्तं हि मया ॥ ४ 'नाभिनन्दति न द्वेष्टी'ति॥ ५ 'न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियं' इति ६ 'यो न हृष्यति न द्वेष्टी'ति च ॥ १० ॥

ज्ञेये सर्वस्वामिनि मयि भक्तिशब्दिता प्रीतिः सा च अन्यस्य कस्यापि देवस्य यस्य कस्यापि प्रयोजनस्य ७ संबंधराहित्येन अनन्यगामिनी मदेकविषया अतः अव्यभिचारिणी ॥ तत्र तदन्यत्र च संबंधो व्यभिचारः तद्रहिता ॥ ज्ञानसाधनाय मयि भक्तिः किमर्थेति चेत् मयि भक्तिः कृता चेत् हृषीकेशोऽहं विषयेषु सक्तं मनस्तत आकृष्य वशतामापाद्य ज्ञेये वस्तुनि निश्चलमवस्थापयामि ॥

---

१. ६. १८ २. अनन्यात्मभावनालक्षण सक्तिविशेषः॥ अहमेवायमित्यनन्यत्वबुद्ध्या अन्यस्मिन् पुत्रादौ सुखिनि दुःखिनि च सति अहमेव सुखी दुःखी चेति तदीयसुखदुःखादेः आत्मनि भावनाहेतुः प्रीत्यतिशयः इत्यर्थः॥शास्त्रीयकर्मोपकरणत्वातिरेकेण श्लेषराहित्यं वा॥मलदवाल्यादिदर्वीविकृतानां पाचकपरिचारकादिष्विव पुत्रदारादिषु भगवद्भागवताराधनोपकरणत्वेन प्रीतिकरणं न दोषाय ॥ तदतिरेकेण प्रीतिर्न कार्या इत्यर्थः ॥ ३. २ ५७. ४ २ ५७. ५. ५. २०. ६. १२. १७. ७. अन्यः देवः अन्यत्प्रयोजनं च तस्य योगः संबन्धः अन्ययोगः तस्याभावोऽनन्ययोगः तेन ॥

तेन च मद्विषयकं परोक्षज्ञानमुत्पद्यते ॥ तच्च कामाद्युपहतिपरिहारेण दृढतामापाद्य अपरोक्षज्ञानहेतुतां प्रापय्य मदावरणभूतां योगमायाख्ययवनिकामपसार्य मत्स्वरूपमपरोक्षतो दर्शयामि ॥ अभक्तस्य तु परोक्षमपरोक्षं वा ज्ञानं नोत्पद्यते ॥ उक्तं हि मया ॥ १'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा' ॥ २'योगमायासमावृतः' ॥ ३'मामेव ये प्रपद्यंते मायामेतां तरंति ते' ॥ ४'ददामि बुद्धियोगं तं येन मामुपयांति ते'॥ इत्यादि ॥ वक्ष्यते च ॥ ५'मां च योऽव्यभिचारेण भक्तियोगेन सेवते'॥ ६'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः' इत्यादि ॥७'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन॥यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वा'मिति श्रुतिः॥ ८स्वतः संस्कारादिना वा शुद्धः क्रिमिकीटादिभिः सर्पव्याघ्रादिभिश्च रहितः चित्तप्रसादहेतुः देशो यः तत्सेवनं आत्मज्ञानविमुखाः विषयभोगलंपटतोपदेशकाः बुद्धिसंस्कारशून्याः ये जनाः तेषां समवाये अरुचिः ॥ ९ साधूनां संगस्तु ज्ञानहेतुत्वादावश्यक ॥ १०अनन्यः अनन्यविषयः यो भक्तियोगः तेन मयि विषये अव्यभिचारेण भजनम् ॥ ११अनन्यः विजातीयप्रत्ययरहितः यः समाधियोगः तेन सजातीयप्रत्ययावृत्तिलक्षणेन मयि निर्गुणे ब्रह्मणि विषये ब्रह्मैवाहमहमेव ब्रह्मेति भजनं अनुसंधानं अव्यभिचारेण कर्तव्यम् इति वा ॥ ११ ॥

---

१. ३. ३९. २. ७. २५. ३. ७ १४ ४. १०. १०. ५. १४. २६. ६. १८. ५५. ७. का २. २३. ८. जनवर्जितदेशवासित्वं जनसंसदि चाप्रीति. इति वा आद्ये सत्यपि द्वितीयाभावो बाधकः ॥ द्वितीये सत्यपि प्रथमस्याभावो बाधकः॥ ९. अत्र, 'त एते साधवः साध्वि सर्वसंगविवर्जिताः। संगस्तेष्वथ ते प्रार्थ्यः संगदोषहरा हि ते ॥ सतां प्रसंगान्मम वीर्यसंपदो भवन्ति हृत्कर्णरसायनाः कथाः ॥ तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥ भक्त्या पुमान् जातविराग ऐन्द्रियात् दृष्टश्रुतान्मद्रचनानुचिन्तया ॥ चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गै. ॥ असेवयाऽय प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृंभितेन। योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे ॥ इति भाग ३. २५. श्लोका अनुसंधेयाः ॥ १०. न विद्यते अन्यः भजनीयः यस्मिन् सः अनन्यः स चासौ योगश्च तेन ॥ ११. न विद्यते अन्यः विजातीयप्रत्ययः यस्मिन् सः अनन्यः स चासौ योगश्च तेन ॥

आत्मानमधिकृत्य ज्ञानं अध्यात्मं आत्मपरमात्मविषयकं यत् वेदांतजन्यज्ञानं तत्र निष्ठावत्वं ॥ अधि सर्वोत्कृष्टः आत्मा परमात्मा तद्विषयकज्ञाने निष्ठावत्वं इति वा॥ आत्मानमधिकृत्य प्रवृत्तं अध्यात्मं ज्ञायते तत्वमनेनेति ज्ञानं ज्ञानजनकं वेदांतशास्त्रं तत्र निष्ठावत्वं इति वा ॥ अध्यात्मं वेदांतशास्त्रं तेन ज्ञानं वेदांतशास्त्रजन्यं तत्र निष्ठावत्वं इति वा॥ तत्वज्ञानार्थं शास्त्रपर्यालोचनं॥ तत्वज्ञानस्य अर्थः प्रयोजनं मोक्षः तस्य दर्शनं पर्यालोचनं फलपर्यालोचने हि साधने प्रवृत्तिः स्यात् । तत्वज्ञानप्रयोजनकं [१]यच्चिंतमं मननं तत्॥ एवकारेण एकैकस्याप्यावश्यकता उच्यते ॥ चशब्देन विंशतेस्साधनानां मिथः समुच्चयो ज्ञानसाधनमिति सूच्यते इत्येतत्साधनजातं ज्ञानसाधनं तत्रतत्र उक्तं मया ते प्रोक्तं॥ अस्मात् साधनजातादन्यत् यत् मानित्वदंभित्वहिंसादिकं तत् ज्ञान-साधनं न ॥ प्रत्युत अज्ञानवृद्धेस्साधनं ॥ ज्ञानविरोधि च ॥ तत्वज्ञानार्थदर्शनं । एत ज्ज्ञानमिति प्रोक्तं अज्ञानं यदतोऽन्यथा इत्यावर्त्यते॥ तत्वज्ञानविषयस्य भगवतो दर्शन शब्दितं अपरोक्षज्ञानं यत् एतदेव ज्ञानं इति प्रोक्तं ॥ अतोऽन्यथा यत् ज्ञानं तत् मोक्ष-साधनज्ञानं न इत्यपि बोध्यं ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तदज्ञानं मतं ममेति तु परोक्षज्ञानविषयम् ॥ ज्ञानसाधनाय अमानित्वादयो गुणा यत्नेन संपादनीयाः ॥ विपरीताश्च मानित्वादयो दोषाः यत्नेन सर्वथा वर्जनीयाः ॥ १२ ॥

**अर्जुनः ॥**

उक्तानि ज्ञानसाधनानि । महता प्रयत्नेन तानि संपाद्य ज्ञेय वस्तु किम् ॥

**कृष्णः ॥**

ज्ञेयं यत्तत् प्रवक्ष्यामि यद् ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३ ॥

---

१. तत्वज्ञानार्थचिंतनमिति पाठः ॥ तत्वज्ञान अर्थः प्रयोजनं यस्य तत् तत्वज्ञानार्थं तच्च तत् चिंतनं च तत् ॥ २ १३. ३. ॥

सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १५ ॥

बहिरंतश्च भूतानां अचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत् ॥ १६ ॥

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १७ ॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ॥
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १८ ॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ॥
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १९ ॥

॥ द्वै ॥ **ज्ञेयमिति** ॥ यत् ज्ञेयं यत् ज्ञात्वा अमृतं मोक्षं अश्नुते प्राप्नोति तत् अहं प्रवक्ष्यामि ॥ आदिः एषां अस्तीत्यादिमन्ति देहेन्द्रियमनोबुद्धिगुणकर्मादीनि न विद्यन्ते आदिमन्ति यस्य तत् अनादिमत् ॥ प्राकृतदेहेन्द्रियमनोबुद्धिगुणकर्मादिरहितम् ॥ आदिः अस्य अस्तीत्यादिमत न आदिमत् अनादिमत इति वा ॥ तादृशं परं ब्रह्म ज्ञेयं ॥ तत् सत् न कार्यप्रपञ्चांतर्गतं न असत् न कारणप्रपञ्चांतर्गतं न इति । मूर्तं न अमूर्तं न । इति उच्यते ॥ १३ ॥

**सर्वत इति** ॥ तत् ज्ञेयं सर्वतः सर्वावयवेषु पाणिः हस्तशक्तिः पादः चरणशक्तिश्च यस्य तत् सर्वतःपाणिपादं ॥ सर्वतः अक्षि नेत्रशक्तिः शिरः शिरश्शक्तिः मुखं मुखशक्तिश्च यस्य तत् सर्वतोऽक्षिशिरोमुखं ॥ सर्वतः श्रुतिः श्रवणशक्तिः अस्यास्तीति श्रुतिमत् ॥ सर्वतः सर्वेषु रूपेषु सर्वेषु देशेषु पाणिपाद्याद्यवयवविशिष्टं इति वा ॥ लोके सर्वं वस्तुजातं आवृत्य व्याप्य तिष्ठति ॥ १४ ॥

**सर्वेन्द्रियेति** ॥ गुणान् आभासयति प्रकाशयति ज्ञापयति इति गुणाभासं सर्वाणि च तानि इंद्रियाणि च सर्वेन्द्रियाणि सर्वेंद्रियाणां गुणाभासं इति, सर्वाणि च तानि इंद्रियाणि च सर्वेन्द्रियाणि सर्वेन्द्रियाणि च गुणाश्च सर्वेन्द्रियगुणाः तान् आभासयति स्वयं वेत्ति इति वा सर्वेन्द्रियगुणाभासं ॥ सर्वाणि च तानि इंद्रियाणि च सर्वेन्द्रियाणि सर्वेन्द्रियैः विवर्जितं रहितं सर्वेन्द्रियविवर्जितं ॥ न सक्तं असक्तं कर्तृत्वेऽपि पुण्यपापलेपरहितं । सर्वं भुंक्ते इति सर्वभुक् सर्वसंहारकं चैव सर्वसारभोक्तृ वा ॥ सर्वभृच्चेति पाठे सर्वं बिभर्तीति सर्वभृत् । भरणं धारणं पोषणं च ॥ निर्गताः गुणाः यस्मात् तत् निर्गुणं सत्वादिगुणहीनं ॥ गुणानां कल्याणगुणानां भोक्तृ अनुभवितृ । सत्वादिगुणानां तत्कार्याणां च भोक्तृ पालकम् । सत्वादिगुणकार्यस्य जगतः भोक्तृ संहर्तृ । गुणानां सारपवित्ररसानां भोक्तृ भोजनसमर्थं च ॥तत् ज्ञेयमेतादृशमेव॥१५॥

**बहिरिति** ॥ तत् भूतानां सर्वेषां चेतनानां अचेतनानां च बहिः अंतश्च स्थितं ॥ चरं सर्वत्र गमनशीलं च न चरं अचरं चरणं अन्यथाभावः तद्रहितं चैव ॥ सूक्ष्मत्वात् विज्ञातुं सम्यक् ज्ञातुं शक्यं विज्ञेयं न विज्ञेयं अविज्ञेयं ॥ तत् दूरे तिष्ठतीति दूरस्थं ॥ अन्तिके समीपे च वर्तते ॥ १६ ॥

**अविभक्तमिति**॥तत् विभक्तेषु भिन्नेषु नानाविधेषु भूतेषु चेतनाचेतनात्मकेषु स्थितमपि न विभक्तं अविभक्तं अभिन्नं भेदरहितं विभक्तं भिन्नमिव स्थितं च॥स्थितिकाले भूतानां

भर्तृ भरणकर्तृ भूतभर्तृ च ॥ संहारकाले भूतानां ग्रसिष्णु भक्षकं संहारकं च ॥ सृष्टिकाले प्रभविष्णु उत्पादकं च ॥ तत् ज्ञेयं अमानित्वादिसाधनैः अवश्यं ज्ञातव्यमेव ॥ १७ ॥

**ज्योतिषामिति** ॥ तत् ज्योतिषामपि सूर्यादितेजसामपि ज्योतिः तेजःप्रदम् ॥ तमसः अज्ञानात् मृत्योः प्रकृतेश्च परं अतीतं ॥ इति उच्यते ॥ ज्ञानं ज्ञानस्वरूपं ज्ञेयं ज्ञातव्यं स्वेन स्वरूपज्ञानेन ज्ञेयं च ज्ञानेन गम्यं गंतुं योग्यं प्राप्यं ज्ञानगम्यं ॥ सर्वस्य हृदि हृदये विशेषेण स्थितं विष्ठितं च ॥ १८ ॥

**इतीति** ॥ क्षेत्रं तथा ज्ञानं ज्ञेयं च इति उक्तरीत्या समासतः संक्षेपेण उक्तं ॥ मम भक्तः मद्भक्तः यः सः एतत् विज्ञाय सम्यक् ज्ञात्वा मयि भावः स्थितिः मद्भावः मोक्षः तस्मै मद्भावाय उपपद्यते अर्हो भवति ॥ १९ ॥

ज्ञेयं यद्वस्तु तत् सम्यक् वक्ष्यामि ॥ शृणु ॥ महता प्रयत्नेन साधनानीमानि संपाद्य ज्ञेयं वा तदिति चेत् तत् वक्ष्यमाणं वस्तु ज्ञात्वा अमृतशब्दितं मोक्षं प्राप्नोति तज्ज्ञानं मोक्षसाधनम् ॥ अतस्तद्वक्ष्यामि ॥ किं तदिति चेत् परब्रह्म ॥ १"तद्विजिज्ञासस्व॥तद्ब्रह्मे"ति श्रुत्या २"अथातो ब्रह्मजिज्ञासे"ति सूत्रेण च जिज्ञास्यब्रह्मत्वेनोक्तपरब्रह्मशब्दितो भगवान् नारायणः॥३"स च यः"इत्येतदनेन विवृतम् ॥ ४"यतश्च य"दिति तु ५"उपद्रष्टानुमन्ताचे"ति विवरिष्यते ॥ ६"यत्प्रभावश्चे"त्येतद्विवरीतु ज्ञेयत्वेनोक्तस्य ब्रह्मणो नारायणस्य गुणानहं ब्रवीमि ॥ अनादिमदित्यादिना ॥ आदिर्मन्ति यानि देहेन्द्रियगुणकर्मादीनि तद्रहित अप्राकृतनित्यदेहेन्द्रियगुणकर्मादिमत् आदिमत् न इति वा ॥ नारायणाख्यं परब्रह्म ज्ञेयं ७"तमसः परमि"ति वक्ष्यते ॥ तत् ज्ञेयं सत् न कार्यप्रपञ्चान्तर्गतं न असत् न कारणप्रपञ्चान्तर्गतं न इति मूर्तं न अमूर्तं न इति ८"स एष नेति नेती"त्यादि श्रुतावुच्यते ॥ १३ ॥

१ तै. ३. १. २. १. १. १. ३. १३ ४. ४. १३. ४ ५. १३ २३. ६. १३. ४. ७. १३. १८. ८. बृ. ६. ४. २२

सर्वावयवेषु पाणिपादाक्षिशिरोमुखश्रोत्रादिसर्वावयवशक्तिमत् । तस्य वेदनकरणशक्तिः प्रतींद्रियं प्रत्यवयवं वर्तते ॥ लोके सर्वत्र व्याप्तिमत् ॥ पाणिपादादिसकलेंद्रियावयवोपेताणुतरदिव्यरूपोपेततया सर्वत्र स्थितं सत् जगति व्याप्तरूपेण सर्वं वस्तुजातं व्याप्य तिष्ठतीतिच ॥ दाढर्याय सर्वत इत्यस्य असकृत् प्रयोगः ॥१४॥

सर्वाणि इंद्रियाणि प्रति सर्वेषां इंद्रियाणां सर्वान् गुणान् शब्दादीन् विषयांश्च आभासयति ज्ञापयति प्रकाशयति ॥ सर्वाणि इंद्रियाणि सर्वान् विषयांश्च स्वयं वेत्ति वा॥ तादृशं तत् ज्ञेयं ॥ भिन्नैः प्राकृतैर्वा सर्वैरिंद्रियैः रहितं तत् ॥ कर्तृत्वेऽपि पुण्यपापलेपरहितं ।। उक्तं हि मया ॥ १ 'न मां कर्माणि लिंपंति न मे कर्मफले स्पृहे'ति ॥ २''न,च मां तानि कर्माणि निबध्नंति धनंजये'ति च । ३ सर्वभुक् सर्वसंहारकारकं सर्वसारभोक्तृ वा ।। सर्वस्य जगतो ४भरणात् सर्वभृच्चैव ॥ सत्वादिप्राकृतगुणहीनं सर्वकल्याणगुणानुभवयुक्तं । सत्वादिगुणानां तत्कार्याणां च ५ पालकं । ६ सत्वादिगुणकार्यजगत्संहर्तृ ॥ ७ गुणशद्बितसारपवित्ररसभोजनसमर्थं च ॥ तत् ज्ञेयं ब्रह्म एतादृशमेव ।। १५ ।।

सर्वेषां चेतनानां अचेतनानां च बहिः अंतश्च व्याप्य वर्तते ॥ ८ 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा॥अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुतिः । सर्वत्र गमनाच्चरं चरणं अन्यथाभावः तद्रहितं चैव॥ सूक्ष्मत्वात् सम्यक् ज्ञातुमशक्यं तत्९'दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभि' इति श्रुतिः॥उक्तं च मया॥१०'श्रुत्वाप्येनं वेद न चैव कश्चित्' इति॥ सर्वगतत्वात् तत् दूरस्थं समीपे स्थितं च॥ ११'तदु दूरे तद्वन्तिके' इति श्रुतिः ॥ १६ ॥

१२ भिन्नेषु नानाविधेषु भूतेषु चेतनाचेतनात्मकेषु स्थितमपि अभिन्नं स्थानभेदप्रयुक्तभेदरहितं १३''नस्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि'' इति सूत्रं॥ अज्ञानां भिन्नमिव

---

१. ४ १४ २. ९. ९. ३. सर्वभुक्चैवेति पाठांतरं ॥ ४. ॥ भरणं धारणं पोषणं च ॥ ५. ॥ सर्वभुक्चेति पाठे इदं ॥ ६. ७ सर्वभृच्चेति पाठे इदं ॥ ८. ना १३. ९ का. ३. १२, १०. २. २९. ११ ई. ५. १२. अविभक्तं विभक्तेषु इति पाठः ॥ १३. ३. २. ११.

प्रतीयमानं च तत् स्थितिकाले भूतानां भरणकर्तृ संहारकाले ग्रासंकुर्वत् सर्वभक्षण- कर्तृ पुनस्सृष्टिकाले उत्पादकं सर्वकर्तृ ॥ जगदुदयास्थितिलयकर्तृत्वेन मुमुक्षुभिर्ज्ञा- तव्यं च ॥ १७ ॥

तत् सूर्यादिज्योतिषामपि ज्योतिः तेजःप्रदं ॥ सूर्यादिषु विद्यमानं तेजः तदीयं १'अनुकृतेस्तस्य च' इति सूत्रं २'तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति ३'येन सूर्यस्तपति तेजसेन्धः' इति च श्रुतिः॥वक्ष्यते च॥ ४'यदादित्यगतं तेजो जगद्भासयतेऽखिलं ॥ यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक'मिति ॥ तमसः अज्ञानात् मृत्योः प्रकृतेश्च परं अतीतं ५'यदेकमव्यक्तमनंतरूपं विश्वं पुराणं तमसः परस्तात्' इति श्रुतिः ॥ मयाप्युक्तं ॥ ६'तमसः परस्तात्' इति ॥ अज्ञानरहितं मृत्युरहितं प्रकृतिप्राकृतसम्बन्धरहितं ॥ ज्ञानस्वरूपं ज्ञानसाधनैः अमानित्वादिभिः सर्वथा ज्ञातव्यं ॥ स्वस्वरूपज्ञानेन स्वेन ज्ञेयं च स्वस्वरूपज्ञानेन तदात्मानं वेत्ति ॥ तादृशं ७'तदात्मानमेवावेदहं ब्रह्मास्मीति' इति श्रुतिः ॥ ज्ञानिभिर्ज्ञानेन साधनेन मुक्तौ प्राप्यं च ॥ सर्वस्य प्राणिजातस्य हृदयदेशे ८विशेषेणस्थितं ॥ १८ ॥

उक्तरीत्या प्रकृत्यादिरूपं क्षेत्रं तथा ईशजीवरूपौ क्षेत्रज्ञौ तयोर्ज्ञानरूपं ज्ञानं अमानित्वादिरूपं ज्ञानसाधनं परब्रह्मरूपं ज्ञेयं च एतत्सर्वं संक्षेपेण मया उक्तम् ॥ मयि भक्तिमान् सन् एतदखिलं सम्यक् ज्ञात्वा मयिस्थितिरूपमोक्षाय अर्हो भवति॥ ९ उक्तसाधनैः एतत् ज्ञेयत्वेनोक्तं परब्रह्म १० ज्ञात्वा मोक्षमाप्नोति च ॥ अतः एत दखिलं त्वया ज्ञातव्यं ॥ उक्तसाधनानि प्रयत्नेन संपाद्य तैः ब्रह्म च ज्ञातव्यं ॥ ज्ञात्वा च तत् तेन तदवश्यमाप्तव्यं ॥ एतेन सप्तकेन ११'स च यः' १२'यत्प्रभावश्च' इत्येतत् द्वयं विवृतम् ॥ १९ ॥

---

१ १. ३. २२. २ का ५. १५. ३. तै. का. ३. ९. ४. १५. १२. ५. ना. १. १. १. ६. ८. ९. ७ बृ. ३. ४. १०. ८. धिष्ठितमिति पाठे आधिष्ठितं ९ उत्तरार्धस्य व्याख्यानान्तरं ॥ १०. अपरोक्षतः साक्षात्कृत्य. ११. १३ ४. १२. १३.

॥ अ ॥ **ज्ञेयमिति**॥ यत् ज्ञेयं यत् ज्ञात्वा अमृतं परं ब्रह्म अश्नुते प्राप्नोति तत् अहं प्रवक्ष्यामि सम्यक् वक्ष्यामि ॥ अनादिमत परं इति छेदः ॥ आदिः अस्यास्तीत्यादिमत् न आदिमत् अनादिमत् ॥ परं उत्तमं ॥ अनादिमत्परं इत्येकं पदं ॥ आदिमत कार्यं परं तद्भिन्नं कारणं आदिमच्च पर च आदिमत्परे न आदिमत्पर अनादिमत्परं कार्यकारणविलक्षणं ॥ अनादि मत्परं इति छेदः ॥ न विद्यते आदिः यस्य तत् अनादि मत् सगुणब्रह्मणो मम सकाशात परं उत्तमं एतादृशं ब्रह्म निर्गुणं ब्रह्म ज्ञेयं ज्ञातव्यं वस्तु ॥ तत ब्रह्म सत् न तत् असत न ॥ सत् तत् न असत् तत् न इति च ॥ इत्युच्यते ॥ १३ ॥

**सर्वत इति** ॥ तत् सर्वतः सर्वेषु शरीरेषु उपाधिभूतेषु पाणी च पादौ च यस्य तत सर्वतःपाणिपादं ॥ सर्वतः सर्वशरीरेषु अक्षिणी च शिरश्च मुखं च यस्य तत् सर्वतोऽक्षिशिरोमुखं॥ सर्वतः सर्वेषु शरीरेषु श्रुती श्रोत्रे अस्य स्तः इति श्रुतिमत् ॥ लोके विद्यमानं सर्वं आवृत्य व्याप्य तिष्ठति ॥ १४ ॥

**सर्वेन्द्रियेति** ॥ तत सर्वाणि च तानि इंद्रियाणि च सर्वेन्द्रियाणि तानि च गुणाश्च सर्वेन्द्रियगुणाः तेषां आभासः प्रकाशः येन तत् । सर्वाणि च तानि इन्द्रियाणि च सर्वेन्द्रियाणि सर्वेन्द्रियाणां गुणाः तैः आभासः प्रकाशो यस्य तत् । सर्वेन्द्रियाणां गुणेषु आभासते इति वा । सर्वेन्द्रियाणां गुणैः आभासत इव इति वा ॥ सर्वेन्द्रियाणि च गुणाश्च सर्वेन्द्रियगुणाः सर्वेन्द्रियगुणवत् आभासत इति वा सर्वेन्द्रियगुणाभासं ॥ सर्वाणि च तानि इन्द्रियाणि च सर्वेन्द्रियाणि तैः विवर्जितं रहितं ॥ न सक्तं असक्तं ॥ असक्तं सर्वभृच्चेत्येकं ॥ असक्तमेव सर्वं बिभर्तीति सर्वभृच्चैव॥ निर्गताः गुणाः यस्मात् तत् निर्गुणं ॥ गुणानां भोक्तृ ज्ञातृ गुणभोक्तृ च ॥ गुणानां पालक वा ॥ १५ ॥

**बहिरिति** ॥ तत् भूतानां बहिः अंतश्च वर्तते ॥ चरं च अचरं च तत् ज्ञेयमेव ॥ तत् सूक्ष्मत्वात् विशेषेण ज्ञातुं शक्यं विज्ञेयं न विज्ञेयं अविज्ञेयं ॥ तत् दूरे तिष्ठतीति दूरस्थं अन्तिके च वर्तते ॥ १६ ॥

**अविभक्तमिति**।। भिन्नेषु भूतेषु देहेषु स्थितमपि अविभक्तं अभिन्नमेव तत्।।विभक्तमिव भिन्नमिव स्थितं च ।। तत् स्थितिकाले भूतानां भर्तृ धारणकर्तृ भूतभर्तृ ।। संहारकाले ग्रसिष्णु ग्रासकर्तृ भक्षकं ।। पुनः सृष्टिकाले प्रभविष्णु उत्पादकं च ।। नानाकार्यात्मना प्रभवनशीलं च।। एतादृशं तत् ज्ञेयं ज्ञेयं च ज्ञातव्यमेव तदेव ज्ञेयं इति च ।। १७ ।।

**ज्योतिषामिति** ।। तत् ज्ञेयं ज्योतिषामपि तेजसामपि ज्योतिः तेजःप्रदम् ।। तमसः अज्ञानात् प्रकृतेः जडवर्गाच्च परम् ।। तत् उच्यते श्रुत्यादौ एतादृशं उच्यते ।। ज्ञानं ज्ञानस्वरूपं ज्ञेयं ज्ञातव्यं ज्ञानेन ज्ञानसाधनेन अमानित्वादिना गम्यं प्राप्यं ज्ञानगम्यं सर्वस्य प्राणिजातस्य हृदि बुद्धौ विशेषेण स्थितं विष्ठितम ।। धिष्ठितमिति पाठे अधिष्ठितं च ।। ज्ञानं ज्ञायतेऽनेनेति ज्ञानसाधनं अमानित्वादिकं ज्ञेयं ब्रह्म ज्ञानेन गम्यं प्राप्यं ज्ञानगम्यं तदेव ब्रह्म इत्येतत् त्रयं सर्वस्य हृदि बुद्धौ अधिष्ठितं इति वा १८ ।।

**इतीति** ।। क्षेत्रं तथा ज्ञानं ज्ञानसाधनं ज्ञेयं परब्रह्म च इति उक्तरीत्या समासतः संक्षेपेण उक्तम ।। मयि भक्तः मद्भक्तः सन् एतत् विज्ञाय सम्यक् ज्ञात्वा मम भावः तादात्म्य मद्भाव तस्मै मद्भावाय उपपद्यते अर्हो भवति ।। १९ ।।

**ज्ञेयमित्यादि पूर्ववत्** ।। **अमृतशब्दितं मोक्षं अमृतशब्दितं परं ब्रह्म वा प्राप्नोति ।। परं अतिशयितं निर्विशेषं ब्रह्म ज्ञेयं ।। तत् अनादिमत् आदिमतो जगतो विलक्षणम्।। आदिमत् न उत्पत्तिविनाशरहितं।।१अनादि २मत्परं इति छेदः अनादि मत वक्तुः सगुणात् परं अतिशयितं निर्गुणं ।। अनादिमत्परं इत्येकं पदं।। आदिमत् कार्यं परं तद्भिन्नं कारणं तदुभयविलक्षणं ।। तत् ब्रह्म सत् नोच्यते।।अभिव्यक्तनामरूपादि-**

---

१. मतुबर्थस्य बहुव्रीहिणोक्तत्वात् मतुप आनर्थक्यं अतः एवं व्याख्यानमुचितमिति भाव ।। श्लोकपूरणार्थो मतुप् । इत्यन्ये ।। २ व्यस्त समस्त च ।।

विशेषं यत् नामरूपक्रियाजातिगुणविशेषं इदमिदमिति निर्देष्टुमर्हं तत् महदादिकार्यजातं सत् सत् न महदादिकार्येष्वन्यतमं न ॥ तत् ब्रह्म असत् नोच्यते ॥ यत् तद्विलक्षणमव्यक्तं तदसत् ॥ असत् न कारणभूतमव्यक्तमपि न ॥ सत् ब्रह्म न असत् ब्रह्म न इति च ॥ पूर्वयोजनायां ब्रह्मणः सदसदात्मकत्वं निषिध्यते ॥ उत्तरयोजनायां सदसतोः ब्रह्मात्मकत्वं निषिध्यते। तत् ब्रह्म सत् न भावो न॥ असत् न अभावो न॥ भावाभावोभयविलक्षणं ॥ अस्तिबुध्द्यनुगतं सत् नास्तिबुध्द्यनुगतं असत् ॥ भावः अस्तीति विधिमुखेन प्रत्यक्षादेर्विषयः ॥ अभावः नास्तीति निषेधमुखेन प्रत्यक्षादेर्विषयः ॥ घटोऽस्ति घटोनास्ति इति ॥ भावाभावौ सदसच्छब्दाभ्यामुच्येते ॥ ब्रह्मतु अस्तिनास्तिबुध्द्याविषयत्वेन भावाभावात्मकत्वाभावात् न सदसच्छब्दाभ्यामुच्यते ॥ अतः जगद्विलक्षणं तद्ब्रह्म ॥ सर्वस्यापि वस्तुजातस्य अस्तिनास्तिबुद्धिविषयत्वात् उभयबुध्द्यविषयत्वं ब्रह्मणः कथमिति चेत् ॥ इंद्रियगम्यस्य घटादेर्वस्तुनस्तथात्वेऽप्यतीन्द्रियस्य शब्दैकप्रमाणगम्यस्य परब्रह्मण उभयबुध्द्यविषयत्वं युक्तं ॥ अत उक्तं 'न सत्तन्नासदुच्यते' इति ॥ कथमिदं विरुद्धमुच्यत इति चेत् ॥ श्रुतिरप्येवमेव वक्ति ॥ [1]'अन्यदेव तद्विदितादथो अविदितादधि' इति ॥ जगद्विलक्षणत्वादतिमहता यत्नेन ब्रह्म तदवश्यं विज्ञेयमित्येवंपरा सा श्रुतिरिति चेत् समं प्रकृतेऽपि । प्रवक्ष्यामीति प्रतिज्ञाय 'नसत्तन्नासदुच्यते' इति वचनमननुरूपमिति चेत् ॥ किं करणीयं मया ॥ अयमेव निर्विशेषपरब्रह्मोपदेशप्रकारः श्रुतिरप्येवमेव ह्युपदिशति॥ [2]'स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते' इति [3]'अथात आदेशो नेति नेति' इति [4]'अस्थूलमनणु' इति च ॥ अध्यस्ततत्तद्धर्मनिवृत्तये निषेधद्वारोपदेशस्य वेदांतेषु प्रसिद्धेः आरोपितसकलविशेषनिषेधरूपमिदमेव प्रवचनं ॥ अतो नाननुरूपमिदं॥ ब्रह्म कुतः केनापि शब्देन नोच्यते इति चेत् ॥ [5] चतुष्टयी शब्दानां प्रवृत्तिरित्यभियुक्तवचनानुसारेण जातिगुणक्रियासंज्ञापुरस्कारेणैव शब्दोऽभिधेयं वक्ति ॥ यथा गौः अश्वः ब्राह्मणः

---

१. के. १ ४. २. बृ. ३ ४-२० ३. बृ ४. ३. ६ ४. बृ. ५ ८.८ ५. एवमेवव्याकरणमहाभाष्यं ॥

क्षत्रियः इति जातिं पुरस्कृत्य । शुक्लः कृष्णः धनी गोमान् इति गुणं पाचकः पाठकः परिचारकः पूजकः इति क्रियां । देवदत्तः यज्ञदत्तः चैत्रः मैत्रः इति संज्ञां ॥ ज्ञेयं ब्रह्म जातिगुणक्रियासंज्ञाशून्यं निर्विशेषत्वात् ॥ अतः केनापि शब्देन नोच्यते ॥ १ " यतो वाचो निवर्तन्ते ॥ अप्राप्य मनसा सह " इति श्रुतिः । अत उक्तं न सत्तन्नासदुच्यत इति ॥ तादृशं तत् ज्ञेयं ब्रह्म ॥ १३ ॥

यदि ज्ञेयं ब्रह्म सत् न स्यात् तर्हि तस्यासत्त्वमेव स्यात् ॥ ब्रह्म नास्तीत्येवापद्येत इति चेत् ॥ शंकेयं असत् नेति परिहृता ॥ सत् न इत्युक्तया प्राप्तस्य असत्त्वस्य असन्नेत्युक्तिमात्रेण परिहारः कथमिति चेत् शृणु ॥ तत् ज्ञेयं ब्रह्म नासत् ॥ कुत इति चेत् ॥ सर्वतःपाणिपादं सर्वेषु उपाधिभूतेषु शरीरेषु करचरणरूपावयवसहितं ॥ तथा सर्वेषु शरीरेषु नेत्रशिरोमुखसहितं ॥ तथा सर्वेषु शरीरेषु श्रोत्रेंद्रियसहितं ॥ कथमेकस्य ब्रह्मण सर्वशरीरस्थसर्वेंद्रियावयववत्त्वमिति चेत्॥ लोकशब्दोदिते प्राणिवर्गे विद्यमानं सर्वं देहाद्यचेतनवर्गं व्याप्य तिष्ठति ॥ विभु हि ब्रह्म ॥ अतो युक्तं ॥ सर्वेषु शरीरेषु करचरणाद्यवयवाः श्रोत्रादीनींद्रियाणि च वर्तन्ते॥ जायंते च ग्रहणगमनादयः श्रवणदर्शनादयश्च तत्तद्व्यापारा जीवच्छरीरे ॥ न जायंते च शवशरीरे ॥ अतः अन्वयव्यतिरेकाभ्यां तत्तत्कार्यजननशक्तिमान् कश्चिदं तरस्ति ॥ सति तस्मिन् जायंते असति च तस्मिन् न जायंत इति सर्वैरगत्याऽभ्युपेयं ॥ स एव आत्मा क्षेत्रज्ञश्च ॥ जानाति क्षेत्रशब्दितं शरीरं ज्ञायते च क्षेत्रशब्दितैः पाण्यादिभिः श्रोत्रादिभिश्च ज्ञयशक्तिनिमित्तकस्वस्वकार्ये अंतरस्तित्वेन अत क्षेत्रज्ञ इत्युच्यते॥ अप्रत्यक्षविलक्षणवैद्युतानलसंसर्गेण गच्छतोऽनसो गमनागमनाभ्यां गमनहेतुभूतो वैद्युतानलसंसर्गो निश्चीयते ॥ तद्वत् इंद्रियादिव्यापारतदभावाभ्यां हेतुभूतः कश्चित्पदार्थो निश्चीयते ॥ स एवात्मेत्युच्यते ॥ तदेव ज्ञेयं ब्रह्म ॥ यत्संनिधि-

१. तै. २. ४

मात्रेण देहेन्द्रियादयश्चेष्टन्ते । तच्चेष्टाकारणं ब्रह्मेति ज्ञेयस्य ब्रह्मणः सद्भावोऽनुमानेन ज्ञातुं शक्यः ॥ निर्विशेषं ब्रह्म हि ज्ञेयं कथं सविशेषं क्षेत्रज्ञशब्दितं ब्रह्म ज्ञेयप्रवचने सर्वप्राणिकरणोपाधिकत्वेन निरूप्यत इति चेत् निर्विशेषस्य ब्रह्मणः साक्षात्प्रदर्शयितुमशक्यतया तत्सद्भावद्योतनाय १ सगुणं ब्रह्मोपन्यस्यते ॥ अस्तु नाम तत् ज्ञेयं सर्वत पाणिपादं इति कथमभेदेन वचनं युज्यते इति चेत् ॥ सगुणनिर्गुणयोरभेदात् एवं वचनं युज्यते ॥ उक्तश्च तयोरभेदो मया ॥ २ 'क्षेत्रज्ञं चापि मां विद्धी'ति ॥ कथं क्षेत्रज्ञशब्दितस्यात्मनः पाणिपादादिमत्वं इति चेत् ॥ क्षेत्रधर्मं पाणिपादादिमत्वं क्षेत्रज्ञे आरोप्य मिथ्याभूतं औपाधिकं तत् क्षेत्रज्ञसद्भावज्ञापनाय शाखाग्रे चन्द्रः इतिवदुच्यत इति युक्त एवायमुपन्यासः ॥ १४ ॥

सर्वेन्द्रियगुणाभासं तत् । सर्वेषां इन्द्रियाणां गुणानां च आभासः प्रकाशो-येन तत् ॥ बुध्यादीनां तद्गुणानां अध्यवसायसंकल्पदर्शनश्रवणवचनादानगमनादीनां च प्रकाशकं ॥ सर्वेषां इंद्रियाणां गुणैः उक्तरूपैः अवभासो यस्य तत् ॥ सर्वेन्द्रियगुणैः पूर्वोक्तरीत्या अनुमितसद्भावं ॥ करणक्रियया क्षेत्रज्ञसद्भावोऽधिगम्यत इत्युक्तं ॥ सर्वेषामिन्द्रियाणां गुणेषु रूपाद्याकारासु वृत्तिषु तत्तदाकारेण भासते तत् ॥ सर्वेषामिंद्रियाणां गुणैः उक्तरूपैः तत्तद्विषयरूपेण आभासत इव मायया तत् ॥ सर्वाणि आंतराणि बाह्यानि च इंद्रियाणि मनोबुध्यहंकारचित्ताख्यानि श्रोत्रादीनि चेति ग्राहकसामान्यं गृह्यते गुणाः विषयाः तेन ग्राह्यसामान्यं गृह्यते ॥ समस्तग्राह्यग्राहकवत् आभासते न तु ग्राह्यग्राहकस्वरूपं ॥ सर्वेषामिंद्रियाणां गुणैः उक्तरूपैः अवभासः तत्तदिंद्रियव्यापाररूपः प्रकाशो यस्य तत् स्वयं निर्व्यापारमपि तत्तदिंद्रियव्यापारैः व्यापृतमिव तत् ॥ ३ 'ध्यायतीव लेलायतीव' इति श्रुतिः ॥ ध्यानोपलक्षितज्ञानेंद्रियव्यापारवदिव तत् लेलायनशब्दितचलनोपलक्षितकर्मेंद्रियव्यापारवदिव तत् ॥ ४ 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिश्रुतयस्तु तत्तदिंद्रिय-

---

१. अत्र, 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ॥ ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः'' इति कारिकाऽनुसन्धेया ॥ २ १३. ३. ३. बृ. ६ ३. ७. ४. श्वे ३. १९

गुणानुगुण्यभजनमात्रपराः न तु साक्षात् तत्तद्व्यापारवत्त्वप्रतिपादिकाः वस्तुतः सर्वेंद्रियशून्यं ॥ इंद्रियोपलक्षितशब्दादिगुणशून्यं च ॥ १ 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगंधवच्च यत्' ॥ २ 'अप्राणो ह्यमनाः शुभ्रः' ३ 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं' ॥ इत्यादिश्रुतेः ॥ केनापि वस्तुना संबंधराहित्यात् असक्तं ॥ ४ 'असंगो ह्ययं पुरुषः' इति श्रुतेः ॥ सर्वभ्रमाधिष्ठानरूपत्वात् शुक्त्यादिकं रजतादिकमिव सर्वं ५ बिभर्ति च तत् ॥ न हि निरधिष्ठाना भ्रांतिर्दृश्यते ॥ न हि मृगतृष्णादयोऽपि निरास्पदा भवंति ॥ ६ असंश्लेषेणैव सर्वस्याधारभूतं च ॥ सत्त्वरजस्तमोगुणरहितं ॥ गुणानां सत्त्वरजस्तमसां सुखदुःखमोहरूपेण परिणतानां अहं सुखी अहं दुःखी इत्यादिरूपेण ज्ञातृ। सत्त्वरजस्तमोगुणानां तत्कार्याणां च पालकं॥ गुणकार्यदेहेन्द्रियादिरहितं॥ ७'अशरीरं शरीरेषु' इति श्रुतेः॥ रूपादिगुणरहितं च॥८'अशब्दमस्पर्शमरूप'मिति श्रुतेः । सुखादिगुणरहितं ॥ सुखदुःखादेः क्षेत्रधर्मत्वेनोक्तत्वात् ॥ तथापि सत्त्वादीनां देहेन्द्रियादीनां रूपादीनां सुखादीनां च ज्ञातृ बुध्यादिसांनिध्यात् ॥ अत्र सर्वेन्द्रियगुणाभासं गुणभोक्तृ इति सगुणविषयं ॥ सर्वेन्द्रियविवर्जितं असक्तं सर्वभृत् निर्गुणं इति तु उभयोस्समं ॥ तादृशं तत् ज्ञेयं ॥ १५ ॥

देहात्मना परिणतानां पृथिव्यादिभूतानां बहिः विषयरूपेण वर्तते तत् ॥ तेषां अन्तः प्रत्यगात्मरूपेण वर्तते तत् ॥ चराणामचराणां च स्वस्मिन्नारोपितानां वस्तूनां आरोपाधिष्ठानभूतं तत् अन्तर्बहिश्च वर्तते रज्जुरिव सर्पस्य शुक्तिरिव रजतस्य ॥ स्वकार्याणां भूतानां कारणं तत् अन्तर्बहिश्च वर्तते सुवर्णमिव कटककुण्डलादीनां ॥ जलमिव च जलतरंगाणां ॥ खव्याप्यानां भूतानां व्यापकं तत् अन्तर्बहिश्च वर्तते ॥ अग्निरिवायःपिण्डस्य ॥ ९'तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः' इति श्रुतिः ॥ उक्तं च मया ॥ १० 'मया ततमिदं सर्वं जग'दिति । बहिरन्तश्च तदित्युक्त्या मध्ये अभाव आपद्यते इति चेत् यदचरं यच्चरं तदुभयमपि तज्ज्ञेयमेव स्थावरजंगमात्मकं

१. का. ३. १५. २. मुं. ३. २ ३. मुं. १. ६ ४. बृ. ६. ३ १५. ५. भरणं धारणं पोषणं च ॥ ६. असक्तं सर्वभृच्चेत्यंक इत्यभिप्रायेणेदं ॥ ७. का. २. २२. ८. का. ३. १५. ९. ई. ५. १०. ९. ४.

सर्वं ब्रह्मैव न ततोऽन्यत्किंचिदस्ति ॥ अधिष्ठानत्वात् कारणत्वाच्च ब्रह्मणः ॥ न हि रजतादि शुक्त्यादेरन्यत् ॥ न हि कटकादिसुवर्णादन्यत् ॥ एकादशेन्द्रियाणि स्थूलभूतानि च व्यवहितत्वाद्बहिरित्युच्यन्ते ॥ महदहंकारपञ्चतन्मात्राऽव्यक्तानि संनिहितत्वादंतरित्युच्यंते॥तेषुस्थितम् ॥ आत्मनस्तत्र संबन्धः आरोपितोऽस्ति॥ तत् चरं च अचरं चैव चराचरोपाधिकक्षेत्रज्ञशब्दितजीवाभिन्नं चैव इति वा॥ सूक्ष्मत्वाज्ज्ञातुमशक्यं तत्॥ तत दूरस्थं तत् समीपे च वर्तते ॥ १'तदु दूरे तद्वंतिके' इति २'बृहच्च तद्दिव्यमचिंत्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ॥ दूरात्सुदूरे तदिहांतिके च पश्यत्स्विहैव निहितं गुहायां' ॥ इति च श्रुतिः ॥ शमदमादिसाधनशून्यानां योजनलक्षकोट्यंतरितमिव वर्षसहस्रकोट्याऽप्यप्राप्यं ॥ शमदमादिसंपन्नानां तु अत्यन्ताव्यवहितमिव सद्यः प्राप्यं ॥ प्रत्यगात्मा हि तत् ॥ १६ ॥

३अभिन्नेषु भूतेषु देहेषु भिन्नमिव स्थितमपि अभिन्नमेव तत ४'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा॥कर्माध्यक्षःसर्वभूताधिवासःसाक्षी चेता केवलो निर्गुणश्च' इति श्रुतिः॥ भिन्नमिव स्थितं च ॥ तच्चायं स्थितिकाले भूतानि बिभर्ति॥ प्रलये भूतानि ग्रसते ॥ पुनः सृष्टिकाले सृजति च ॥ अज्ञानदशायां शुक्तिरिव रजतरूपेण जगद्रूपेण प्रभवति ॥ व्यवहारदशायां स्वस्मिन्नारोपितं सर्वं मूढव्यवहारार्थं स्वयं बिभर्त्ति ॥ प्रबोधदशायां स्वस्मिन्नारोपितं सर्वं स्वस्मिन्नेव तिरोभावयति तद्ब्रह्म ॥ ५' सत्यं चानृतं च सत्यमभवत् ' इति ६' भर्ता सन् भ्रियमाणो बिभर्ति ॥ एको देवो बहुधा निविष्टः' इति ७ ' परेऽव्यये सर्व एकीभवन्ति' इति च श्रुतिः ॥ उत्पादनभरणग्रसनैः कारणस्य ब्रह्मणः अस्तित्वं ज्ञायते ॥ प्रदर्शनभरणतिरोभावनैः अधिष्ठानस्य ब्रह्मणः अस्तित्वं ज्ञायते ॥ तज्ज्ञेयमेतादृशं ॥ अतस्तदेव ज्ञेयं नान्यत् तत् ज्ञेयमेव इति च ॥१७॥

१. ई. ५. २. मु. ५. ७. ३. 'अविभक्तं च भूतेषु'' इति पाठः ॥ ४ श्वे. ६. ११. ५. तै. २. ६. ६. तै. आ. ३. १४. १ ७. मु. ६ ७

सूर्यचन्द्रानलनक्षत्रविद्युदादीनां तेजसामपि तेजःप्रदम् ॥ १ 'तमेव भान्त'मि-
त्यादिश्रुतेः ॥ वक्ष्यते च ॥ २ 'यदादित्यगतं तेज' इत्यादि ॥ सूर्यादीनां तेजसां
प्रकाशकं ज्ञापकं न हि सूर्येण सूर्यो ज्ञायते किं तु चित्प्रयुक्तेन चक्षुषा ज्ञायते ॥
३ 'आत्मैवास्य ज्योतिर्भवती'ति श्रुतिः ॥ ज्योतिषां मध्ये यत् ज्योतिः तत् ॥ सूर्यादीनां
मध्ये ज्योतीरूपेण वर्तते । ४ 'येन सूर्यस्तपति तेजसेद्धः' इति ॥ ५ 'यश्चासावादित्य'
इति ६ 'य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मी'ति च श्रुतिः ॥ प्रकाश-
कानां नेत्रश्रोत्रमनोबुद्ध्यादीनां प्रकाशकत्वशक्तिप्रदं ॥ ७ 'श्रोत्रस्य श्रोत्र'मित्यादिश्रुतेः ॥
८ 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते' इत्यादिश्रुतेश्च ॥ तमःशब्दितादज्ञानात् प्रकृ-
तेः जडवर्गाच्च परं ९ 'तमसः परस्तात्' इति श्रुतिः ॥ मयाप्युक्तं । १० 'तमसः पर-
स्तात्' इति ॥ अज्ञानप्रकृतिप्राकृतसंबंधशून्यं ॥ ज्ञानस्वरूपं ॥ ११ 'सत्यं ज्ञानमनन्तं
ब्रह्मे'ति श्रुतिः ॥ ज्ञातव्यं तत् ॥ कथं ज्ञातुं शक्यते इति चेत् ज्ञानसाधनेन अमानि-
त्वादिना अधिगम्यं ॥ ज्ञानेन प्राप्यं च ॥ एतादृशं ब्रह्म कुत्रोपलभ्येतेति चेत् सर्वस्य
प्राणिजातस्य हृदयशब्दितबुद्धिगुहायां १२ विशेषेण स्थितं ॥ सर्वगतमपि बुद्धावेव
विशेषेणोपलभ्यते सावित्रं तेजः सूर्यकान्तादाविव ॥ बुद्धिस्तस्योपलब्धिस्थानं ॥
१३ ज्ञेयतज्ज्ञानज्ञानफलानां दुःसंपादनताबुद्ध्या व्याकुलयति मां इति चेत् मा व्याकुलो
भूः ॥ परमसुलभानीमानि बुद्धिमतां ॥ अमानित्वादिकं ज्ञानसाधनं ज्ञेयं ब्रह्म तदेव
ज्ञानेन प्राप्यं इत्येतत्त्रयं सर्वस्य बुद्धावेव वर्तते । बुद्ध्या हि सर्वं विभाव्यते ॥ बुद्धिम-
तां सुसंपादनानीमानि ॥ १८ ॥

उक्तप्रकारेण सविकारकं सधर्मकं महाभूतादि धृत्यंतं क्षेत्रं तथा अमानित्वा-
दिकं ज्ञानसाधनं ज्ञेयं परं ब्रह्म च ऋषिभिर्वेदैश्च विस्तरेणोक्तं तं मया संग्रहेणोक्तं ॥

१. का. ५. १५. २. १५. १२ ३. बृ. ६. ३. ६. ४. तै. का. ३. ९. ७. ५. तै. २. ८.
६. छा. ४. ११. १ ७. के. १. २. ८. के. १. ५ ९. ना. १. १. १. १०. ८. ९. ११. तै. २. १.
१२. धिष्ठितमिति पाठे अधिष्ठितं ॥ १३ भाष्यं. ज्ञानादेः दुस्संपादनत्वबुद्ध्या प्राप्तावसादस्य उत्तम्भनार्थ-
माह ॥ ज्ञानमित्यादि ॥ उत्तम्भनं उद्दीपनं प्रोत्साहनमित्यर्थः ॥

मद्भक्तः पूर्वाध्यायोक्तलक्षणः १एतदखिलं सम्यक् जानाति ॥ स एवात्राधिकारी नाभक्त ॥ २ यस्य देवे परा भक्ति यथा देवे तथा गुरौ ॥ तस्यैते कथिताह्यर्थाः प्रकाशंते महात्मनः इति श्रुतिः ॥ अपरोक्षज्ञानद्वारा मम ब्रह्मणो भावमाप्तुमर्हो भवति ॥ तस्मात्त्वं पूर्वाध्यायोक्तलक्षणो भक्तो भूत्वा मदुक्तमेतदखिलं सम्यक् ज्ञात्वा सम्यग्दर्शननिष्ठया मोक्षमाप्नुहि ॥ एतदर्थमेव एतावानुपदेशः ॥ ३ एतेन सप्तकेन ४ स च यो यत्प्रभावश्चेति द्वयं विवृत ॥ १९ ॥

वि ॥ ज्ञेयमिति ॥ यत् ज्ञेयं यत् ज्ञात्वा अमृत शुद्धात्मस्वरूप अश्नुते प्राप्नोति ॥ तत् प्रवक्ष्यामि ॥ अनादि मत्परं इति च्छेदः ॥ न विद्यते आदिः यस्य तत् अनादि अहं परो यस्य तत् मत्परं ॥ मच्छेषभूतं ॥ ब्रह्म शुद्धात्मस्वरूपं ज्ञेयं ॥ तत् सत् न कार्यं न असत् न कारणं न इत्युच्यते ॥ १३ ॥

सर्वत इति ॥ तत् सर्वतः सर्वकाले सर्वदेशे पाणौ च पादे च लक्षणया तच्छक्तिः यस्य तत् सर्वतःपाणिपादं सर्वत्रपाणिपादशक्तिमत् ॥ सर्वतः अक्षि शिरः मुखं च तच्छक्तिः यस्य तत् सर्वतोऽक्षिशिरोमुखं सर्वत्र अक्ष्यादिशक्तिमत् ॥ सर्वतः श्रुतिः श्रोत्रं तच्छक्तिः यस्य तत् श्रुतिमत् सर्वत्रश्रवणशक्तिमत् ॥ लोके सर्वं आवृत्य ज्ञानद्वारा व्याप्य तिष्ठति ॥ १४ ॥

सर्वेन्द्रियेति ॥ तत् सर्वाणि च तानि इन्द्रियाणि च सर्वेन्द्रियाणि तेषां गुणाः तैः आभासः ज्ञानं यस्य तत् सर्वेन्द्रियगुणाभासं ॥ सर्वाणि च तानि इंद्रियाणि च सर्वेन्द्रियाणि तैः विवर्जितं रहितं सर्वेन्द्रियविवर्जितं । न सक्तं असक्तं सर्वाणि शरीराणि बिभर्ति इति सर्वभृत् चैव ॥ निर्गताः सत्वादिगुणाः यस्मात् तत् निर्गुणं ॥ गुणानां भोक्तृ अनुभवितृ गुणभोक्तृ च ॥ १५ ॥

बहिरिति ॥ भूतानां पृथिव्यादीनां बहिः वर्तते ॥ भौतिकशरीररहितं ॥ तेषां अंतश्च वर्तते ॥ भोगार्थं भौतिकशरीरसहितम् ॥ स्वभावतः न चरं अचरं

१ एतत् निर्विशेषं ब्रह्म इति वा ॥ २ श्वे ६ २३. ३ एतद्द्वयं 'पुरुषः प्रकृतिस्थोहि' (१३. २२) 'उपद्रष्टा' (१३ २३) इति श्लोकद्वयेन विवरिष्यते ॥ ज्ञेयस्वरूपकथनमिदं ॥ इत्यन्ये ॥ ४ १३ ४

देहित्वदशायां चरं चैव । तत् सूक्ष्मत्वात् अविज्ञेयं न सम्यक् ज्ञातुं शक्यं ॥ तत् दूरस्थं च अंतिके च ॥ १६ ॥

**अविभक्तमिति** ॥ भिन्नेषु भूतेषु शरीरेषु स्थितमपि विभक्तं भिन्नं न विभक्तं अविभक्तं भेदरहितं च ॥ विभक्तमिव प्रतीयमानं च ॥ तत् भूतानां पृथिव्यादीनां भरणकर्तृ भूतभर्तृ ॥ अन्नादीनां ग्रसिष्णु ग्रसनकर्तृ ॥ अन्नादीनां रेतोमलजलादिरूपेण परिणामकर्तृ च ॥ तत् ज्ञेयं ज्ञेयं च अवश्यज्ञातव्यमेव ॥ १७ ॥

**ज्योतिषामिति** ॥ तत् ज्ञेयं आत्मस्वरूपं ज्योतिषामपि सूर्यादितेजसामपि ज्योतिः प्रकाशकत्वरूपतेजस्त्वप्रदं ॥ तमसः प्रकृतेः परं ॥ तत् एतादृशं उच्यते ॥ ज्ञानं ज्ञानस्वरूपं ज्ञेयं ज्ञातव्यं ज्ञानेन अमानित्वादिना ज्ञानसाधनेन गम्यं प्राप्यं च ॥ सर्वस्य हृदि हृदये विशेषेण स्थितं विष्ठितं च ॥ १८ ॥

**इतीति** ॥ क्षेत्रं तथा ज्ञानं ज्ञानसाधनं अमानित्वादिकं ज्ञेयं आत्मस्वरूपं च इति उक्तरीत्या समासतः संक्षेपेण उक्तम् ॥ मयि भक्तः मद्भक्तः सन् एतत् विज्ञाय मम भावः स्वभावः मद्भावः तस्मै मद्भावाय उपपद्यते अर्हो भवति ॥ १९ ॥

**वि० ज्ञेयमित्यादि पूर्ववत् ॥ अमृतं प्रकृतिबन्धरहितशुद्धात्मानं प्राप्नोति॥ ब्रह्मशब्दितं परब्रह्मतुल्यं शुद्धात्मस्वरूपं ज्ञेयं ॥ तत् स्वतः सर्वविषयासंकुचितज्ञानवत्त्वेन बृहत् ॥ शरीरादिभिः परिच्छेदरहितस्य तस्य परिच्छिन्नत्वं कर्मकृतं न स्वरूपप्रयुक्तं ॥ प्रकृतिबन्धान्मुक्तस्य तु ब्रह्मत्वशब्दितं आनन्त्यमेव ॥ १ 'वालाग्रशतभागस्य शतधा कल्पितस्य च ॥ भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ' इति श्रुतिः॥ तदेव प्रथमतो ज्ञेयं॥ तत्स्वरूपयाथात्म्यनिश्चयपूर्वको हि कर्मयोगो महता प्रबन्धेनोक्तो मया॥ स्वस्वरूपज्ञानाभावे न कोऽपि निवृत्तिकर्ममार्गे प्रवर्तेत ॥ उक्तं हि मया॥२'व्यवसायात्मिका बुद्धिरेकेह 'ति ॥ ३'कर्मण्यकर्म यः पश्ये'दिति ॥४'स सन्यासी च योगी च 'ति॥**

१. श्वे. ५. ९. २. २. ४१. ३. ४. १८. ४. ६. १.

१'यं संन्यास इति प्राहुः योगं तं विद्धि पाण्डवे'ति च ॥ तस्यैव ज्ञेयत्वेनोक्तिरुचिता प्रकृते॥ २'क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तद्ज्ञानं मतं ममे'त्युपक्रमात् ॥ मध्ये ३'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी'ति तस्यैव निरूपणात्॥ ४'क्षेत्रक्षेत्रज्ञयोरेवमंतरं ज्ञानचक्षुषे'ति अन्ते तस्यैव उपसंहाराच्च॥ शुद्धात्मनि ब्रह्मशब्दो बृहत्त्वगुणयोगात् परब्रह्मसादृश्याच्च युक्त वक्ष्यते च ॥ ५'ब्रह्मभूयाय कल्पते' इति ॥ ६'ब्रह्मणो हि प्रतिष्ठाऽहमि'ति ॥ ७'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षती'ति च ॥ तदात्मस्वरूपं अनादि आद्यन्तरहितं मत्परं अहं परस्तस्य अहं शेषी मच्छेषत्वैकरसं तत् ॥ ८'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येषत आत्माऽन्तर्याम्यमृतः' इति ॥ ९'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबंधहेतु' इति १०'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इति च श्रुतिः ॥ ११'शेषत्वं हि परतन्त्रत्वरूपं तत् कथं ज्ञेयस्य शुद्धात्मनो गुणतयोच्यते इति चेत् शेषत्वं द्विविधं गुणकृतं दोषकृतं चेति ॥ तत्र ईश्वरविषये यच्छेषत्वं तत् तदीयकारुण्यवात्सल्यस्वामित्वज्ञानशक्त्याद्यिकल्याणगुणकृतं अतस्तत्सुखरूपं अतो गुणतयोच्यते ॥ तत् सत् न कार्यं न ॥ असत् न कारणं न इत्युच्यते ॥ कार्यत्वं कारणत्वं च तस्य नास्ति ॥ आत्मनः पितृरूपेण कारणत्वं पुत्ररूपेण कार्यत्वं चास्ति ॥ उक्तं च त्वया तस्य कारणत्वं १२'एतद्योनीनि' इति॥ १३'भूतानी'ति कार्यत्वं च ॥ सति त्वेवं कथं न सत्तन्नासदुच्यत इति इति चेत् ॥ कार्यकारणावस्थाद्वयमात्मनो विद्यते ॥ परन्तु तस्य तदन्वयः कर्मरूपाविद्यावेष्टनकृतः न स्वरूपकृतः ॥ अत्र ज्ञेयत्वेनोच्यमानं स्वाभाविकं रूपं तस्य तदुभयान्वयाभावात् 'नसत्तन्नासदुच्यते' इति युक्तम् ॥ १३ ॥

१. ६ २. २ १३ ३ ३. १३. २०. ४. १३. ३४ ५. १८ २६. ६. १४ २७. ७. १८ ५४. ८. बृ. ५. ७. २२. ९. श्वे. ६ १६ १० तै. आ ३. ११ २. ११. अत एव मुमुक्षुप्पाडिग्रन्थे 'शेषत्वं दुःखरूपं खलु लोके दृश्यते इत्याक्षिप्य ' इदं शेषत्वं गुणकृतं इति समाहितम् ॥ अभिमतविषये शेषत्वं सुखरूपं भवति इति तट्टीकायाम् ॥ १२. ७. ६. १३. ७. ६.

पाणिपादादिसर्वावयव... मत् शुद्धात्मस्वरूपम् ॥ यद्यपि आत्मस्वरूपस्य अशरीरत्वात् निरवयवत्वा... ...रिंद्रियत्वाच्च पाणिपादादिप्रसंगएव नास्ति तथापि पाणिपादादिसर्वेन्द्रियावयव... ...पं विद्यते ॥ सा च शक्ति सर्वदा सर्वत्र ॥ तदात्मस्वरूपं प्रकृतिबंधान्मु... ...द्धं सत् परमात्मना समं भवति ॥ १'तदा विद्वान् पुण्यपापे विधूय निरंजनः परम ...साम्यमुपैति' इति श्रुति ॥ वक्ष्यते च ॥ २'मम साधर्म्यमागता' इति ॥ अतः ३'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति परमात्मनि श्रूयमाण पाणिपादादिशक्तिमत्त्वं शुद्धात्मनोऽप्यस्ति ॥ तत् लोके विद्यमानं सर्वं वस्तुजातं व्याप्य तिष्ठति॥ अणुरप्यात्मा प्रकृतिबंधान्मुक्तः शुद्धः असंकुचितधर्मभूतज्ञानद्वारा सर्वगतो भवति ॥ ४'प्रदीपवदावेशस्तथा हि दर्शयती ति सूत्रम् ॥ १४ ॥

सर्वेन्द्रियवृत्तिभिरपि विषयान् ज्ञातुं समर्थं तत् ॥ स्वयं प्रकाशस्यापि शुद्धात्मनः सर्वेन्द्रियव्यापारैरपि ज्ञातुं सामर्थ्यमस्ति ॥ वस्तुतः सर्वेन्द्रियरहितं इंद्रियव्यापारानंतरेणैव स्वत एव सर्वं जानाति तत् ॥ स्वभावतो देवादिदेहसंबन्धरहितं ॥ मुक्तौ देहवत्त्वदशायां देहभरणसमर्थं चैव ॥ ५ 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतेः ॥ स्वभावतः सत्त्वरजस्तमोगुणरहितं ॥ सत्त्वादिगुणकार्यानुभवसमर्थं च ॥ औपाधिकगुणभोक्तृत्वस्य मुक्तावभावेऽपि तत्सामर्थ्यस्य सत्त्वात् गुणभोक्तृत्वोक्तिः ॥ १५ ॥

पृथिव्यादिभूतानां बहिर्वर्तते तत् ॥ तत्कृतशरीरराहित्यात्तथाभूतम् ॥ तेषामन्तश्च वर्तते ॥ ६'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' ॥ ७'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुपतिष्ठन्ते' ॥ ८'इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्' इत्यादिश्रुतिसिद्धस्वच्छन्दवृत्तिषु शरीरग्रहणात् भूता

१. मं ५ ३ २ १४. २ ३. श्वे ३. १९ ४. ४. ४. १५. ५. छां. ७, २६. २. ६. छां ८. १२. ३. ७. ८. २. १ ८. तै. ३. १०.

न्तर्वर्तित्वं तस्य । शरीरं च मुक्तस्य प्राकृतानामप्राकृतानां वा भूतानां संघातः ॥ देहवत्त्वदशायां चरं स्वभावतोऽचरं चैव ॥ अस्मिन् क्षेत्रे वर्तमानमपि तत् अतिसूक्ष्मत्वात् देहात् पृथक्त्वेन संसारिभिरविज्ञेयम् ॥ अमानित्वादिसाधनरहितानां स्वदेहे वर्तमानमप्यतिदूरस्थमिव दुर्विज्ञेयं अमानित्वादिसाधनवतां अतिसमीपस्थमेव सुविज्ञेयम् ॥ १६ ॥

१ देवमनुष्यादिशरीरेषु स्थितमपि स्वरूपतो देवमनुष्यादिभेदरहितम् ॥ अज्ञानां देवाद्याकारेण अयं देवोऽयं मनुष्य इति भेदवत्तया प्रतीयमानं ॥ देहरूपेण संहतानां पृथिव्यादीनां भूतानां भरणकर्तृ अन्नादीनां ग्रसनकर्तृ ॥ ग्रस्तानां अन्नादीनां रेतोजलमलादिरूपेण परिणामकर्तृ ॥ तेन भर्तव्याद्देहादन्यत् ग्रस्यमानेभ्यो भूतेभ्योऽन्यत् परिणम्यमानेभ्यो भूतेभ्योऽन्यत् ॥ पूर्वं वेदितृत्वेन क्षेत्रादन्यत्वं क्षेत्रज्ञस्योक्तम् ॥ २ एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः इति ॥ अत्र भरणग्रसनप्रभवनकर्तृत्वेन क्षेत्रशब्दिताद्देहादन्यत्वं क्षेत्रज्ञशब्दितस्यात्मन उच्यते । न च ग्रसनादिकर्तृत्वं देहस्य संभवति मृतशरीरे तदभावात् ॥ तत ज्ञेयत्वेनोक्तमात्मस्वरूपं उक्तरीत्या देहादन्यत्वेन अवश्यं ज्ञातव्यम् ॥ १७ ॥

सूर्यचन्द्राग्न्यादिज्योतिषामपि प्रकाशकत्वप्रदम् ॥ सूर्यादीनां तेजसां तेजस्त्वप्रदत्वं भगवतो मुक्तम् ॥ कथं तदात्मन उच्यते इति चेत् ॥ इति हि अन्तरात्मज्योतिषि सूर्यश्चन्द्रो दीपनक्षत्राणि विद्युतश्च प्रकाशमाना प्रकाशयन्त्यर्थान न भवन्ति तस्मिन ॥ अत सूर्यादीनां प्रकाशकत्वप्रद आत्मा ॥ अत आत्मैव प्रकाशकं तेजः सूर्यादीनां तु विषयेन्द्रियसंनिकर्षविरोधितमसो निरासकत्वमात्रेण तेजस्त्वं ॥ तमश्शब्दितायाः प्रकृतेः परं प्रकृत्यसंसृष्टं ॥ ज्ञानस्वरूपं ज्ञेयं अमानित्वादिसाधनैः प्राप्यं ॥ सर्वस्य प्राणिजातस्य हृदये भोक्तृत्वरूपविशेषेण स्थितं । हृदि स्वरूपेणावस्थानं ॥ पादमस्तकमवयवेषु तु धर्मभूतज्ञानद्वाराऽवस्थानं अतो हृदि स्वरूपेणावस्थानरूपविशेषेण

१ अविभक्तं च भूतेषु इति पाठः ॥ २. १३ २ ३. अत्र, 'यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किं ॥ लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यती'ति श्लोकोऽनुसंधेयः ॥

स्थितं च ॥ सर्वस्य हृदि एक एव वा आत्मा तिष्ठतीति चेत् ॥ सर्वस्य गृहे अयमेव ब्रीहिस्तिष्ठतीतिवत् वस्तुभेदेऽपि जात्यैक्यादयं सर्वस्य हृदि तिष्ठतीत्युच्यते ॥ १८ ॥

उक्तरीत्या क्षेत्रं तथा अमानित्वादिकं ज्ञानसाधनं क्षेत्रज्ञरूपं ज्ञेयं च संग्रहेण मया उक्तं ॥ मयि भक्तिमान य स एव एतत्त्रययाथात्म्यं विजानाति विज्ञाय तेन मम यो भावशब्दितः स्वभावः असंसारित्वरूपः तत्प्राप्तये योग्यो भवति ॥ प्रकृतिबंधान्मुक्तो भवितुमर्हति । अत एतत्त्रयं विज्ञेयं ॥ अत एतावानुपदेशस्ते ॥ सम्यगवधारय एतेन श्लोकेन १ स च यो यत्प्रभावश्चेत्येतद्द्वयं विवृतम् ॥ १९॥

**अर्जुनः** ॥ क्षेत्रं क्षेत्रज्ञः ज्ञानं ज्ञानसाधनं ज्ञेयं इति पंचकं विवृतं ॥ प्रकृतिं पुरुषं च यथावत् ब्रूहि ॥

**कृष्णः** ॥ प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।

विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ २० ॥

**प्रकृतिमिति** ॥ प्रकृतिं पुरुषं चैव उभावपि न विद्यते आदिः ययोः तौ अनादी विद्धि जानीहि॥ विकारान् च गुणांश्चैव प्रकृतेः सकाशात् संभवः उत्पत्तिः येषां ते प्रकृतिसंभवाः तान् विद्धि ॥ २० ॥

प्रकृतिर्जडरूपा २ भिन्ना प्रकृतिरष्टधा इत्युक्ता ॥ पुरुषः ३ जीव एतौ द्वावपि आदिरहितौ नित्यौ ॥ एव मेव त्वं विद्धि ॥ द्विवचनेन सिद्धौ उभाविति पुनरुक्त्या तयोर्मेलनमनादि पुरुषशब्दितस्य जीवस्य प्रकृतिबन्धोऽनादिः इत्युक्तं भवति ॥ तौ स्वरूपतो नित्यौ आद्यन्तरहितौ ॥ तयोः संबंधस्तु अनादिः सांतः ॥ संबंधिनोस्सत्वेऽपि संबंधस्य नाशसंभवात् ॥ तथा दर्शनाच्च॥ किं तस्याः संबंधेन तस्य जायते इति चेत् पुरुषस्य विकाराः इच्छादयः गुणाः सत्वादयश्च प्रकृतिसंबंधेन जायन्ते ॥ विकाराः देहेन्द्रियमनोबुद्ध्यादयः गुणाः सत्वादयः तत्परिणामाः सुखदुःखमोहाश्च ॥ विकाराः

---

१. १३ ४ २. ७ ४ ३. अ. वि ॥ 'इतस्त्वन्यां जीवभूतां' (७.५) इत्युक्तचेतनप्रकृतिरूपः ॥ द्वै ॥ प्रकृतिः जडप्रकृतिः पुरुषः जीवः ॥

इच्छाद्वेषसुखदुःखादयः बंधहेतवः गुणाः अमानित्वादयः मोक्षहेतवः ॥ प्रकृतिः इच्छाद्वेषादिभिर्बंधहेतुर्भवति ॥ अमानित्वादिभिर्मोक्षहेतुर्भवति ॥ १ 'उपद्रष्टे'त्यत्र वक्ष्यमाणरीत्या २ प्रकृतिपुरुषयोस्संबन्धः भार्यापत्योः संबंध इव गुणदोषोभयहेतुरनुसंधेयः ॥ २० ॥

अर्जुनः ॥ जायन्तां नाम प्रकृतिसंबंधेन जीवस्य विकारा गुणाश्च तैस्तस्य किं भवति ॥

कृष्णः ॥ कार्यकारणकर्तृत्वे हेतुःप्रकृतिरुच्यते ॥
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २१ ॥

कार्येति ॥ प्रकृतिः, कार्यं शरीरं कारणानि इंद्रियाणि कार्यं च कारणानि च कार्यकारणानि तेषां कर्तृत्वं क्रिया कार्यकारणकर्तृत्वं तस्मिन् हेतुः कर्त्री उच्यते ॥ पुरुषः क्षेत्रज्ञः, सुखानि दुःखानि च सुखदुःखानि तेषां भोक्तुः भावः भोक्तृत्वं तस्मिन् हेतुः कर्ता उच्यते ॥ २१ ॥

३कार्यं शरीरं ४कारणानि इन्द्रियाणि तेषां कर्तृत्वं करणं तदात्मना परिणामः तस्मिन् प्रकृतिः हेतुः उच्यते ॥ प्रकृतिः शरीरं इन्द्रियाणि च भोगसाधनतया सृजति ॥

---

१. १३. २३. २. द्वै ॥ अत्र प्रकृतिपदेन परप्रकृतित्वेनोक्ता चेतनप्रकृतिशब्दिता लक्ष्मीर्गृह्यते ॥ पुरुषपदेन पूर्णषड्गुणः परमात्मा च गृह्यते ॥ एतदर्थमेव उभावपि पदं ॥ लक्ष्मीपरमात्मानावनादी तयोर्दांपत्यरूपसंबंधोऽप्यनादिः ॥ विकाराः गुणाश्च जडप्रकृतितदभिमानिचेतनप्रकृत्युभयसंभवाः ॥ ३. द्वै. अ. ॥ ४. अ ॥ करणेति पाठः ॥ कारणेति पाठे कार्यं विकारः कारणं विकारि ॥ अथवा एकादशेन्द्रियाणि पंच विषयाः इति षोडश विकाराः कार्यं ॥ महानहंकारो भूतानीति सप्त विकृतयः कारणं ॥ तेषां शरीरोत्पादकत्वे तन्मूलभूता प्रकृतिर्हेतुः ॥ तेषां कर्तृत्वं नियोक्तृत्वं तस्मिन् ॥ नि[illegible]यभोगवासनारूपा कर्मरूपा वा प्रकृतिरेव नियोजिका इति च ॥ भूतानि विषयाश्च कार्यपदेन सुखदुःखादयः कारणपदेन गृह्यन्ते ॥ स्वाभासानुविद्धांतःकरणद्वारा प्रकृतिधर्मस्य आत्मन्यारोपरूपाध्यासिकसंबन्धः संसारः ॥ अनेन श्लोकद्वयेन 'यतश्चय' १३. ४. दित्येतत् विवृतं ॥ पूर्वश्लोकेन 'यद्विकारी' १३. ४. ति विवृतं 'यतश्चय'दिति तु अनेन श्लोकेन इति केचित् ॥

तदात्मना स्वयं परिणमते ॥ पुरुषशब्दितो जीवस्तु प्रकृतिनिर्मितं शरीरमधिष्ठाय तन्निर्मितैरिंद्रियादिभिः सुखदुःखानां अहं सुखी अहंदुःखी इत्यनुभवे कर्ता भवति स एव संसारः ॥ १शरीरस्य इंद्रियाणां च क्रियाकर्तृत्वं दृश्यते ॥ तत्र हेतुः पुरुषाधिष्ठिता प्रकृतिः ॥ पुरुषाधिष्ठितदेहाकारपरिणतप्रकृत्याश्रया हि क्रियाः सर्वाः ॥ प्रकृत्या सर्वाः क्रिया जायन्ते ताभिरात्मा सुखंदुःखंचानुभवति स एव संसारः तस्य च२प्रकृतिसंबंधो हेतुः ॥ कार्यकारणकर्तृत्वे भोक्तृत्वे इति निमित्तसप्तमी ॥ प्रकृतिः कार्यकारणकर्तृत्वेन पुरुषस्य संसारकारणं भवति ॥ पुरुषः सुखदुःखानां भोक्तृत्वेन संसारस्य कर्ता भवति इति वा ॥ ३कार्यं च कारणं च कर्ता च कार्यकारणकर्तारः तेषां भावः कार्यकारणकर्तृत्वम् ॥ कार्यत्वं कारणत्वं कर्तृत्वं चेति यावत् ॥ तस्मिन् प्रकृतिः हेतु भवति ॥ कथमिति चेत् कार्यत्वकारणत्वकर्तृत्वादयो देहेंद्रियबुद्धिधर्माः तेषां पुरुषधर्मत्वे पुरुषतादात्म्यं प्राप्ता सती प्रकृतिः हेतुर्भवति ॥ तथा प्रकृतेः सुखदुःखभोक्तृत्वे पुरुषः हेतु भवति ॥ जानामि अहं सुखी अहं दुःखी इति भोक्तृत्वं चेतनधर्मं तस्य बुद्धिधर्मत्वे तत्तादात्म्यं प्राप्तः सन् पुरुषः हेतुर्भवति ॥ एवं प्रकृतिपुरुषयोरन्योन्यतादात्म्याध्यासमूलकः अन्योन्यधर्माध्यासः संसारः ॥ इति च ॥ २१ ॥

अर्जुन ॥ असंसारिणो जीवस्य संसारः प्रकृतिबन्धेन भवतीत्युक्तं भवति॥ मास्त्वेव संसारबंधहेतुत्वेन हेयः प्रकृतिबन्धः किंच स्वयंप्रकाशशुद्धचैतन्यस्वरूपस्य जीवस्य सुखदुःखाद्यनुभवः कथम् ॥

कृष्णः ॥ पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान् ॥

पुरुष इति ॥ पुरुषः प्रकृतौ तिष्ठतीति प्रकृतिस्थः सन् प्रकृतेः जायंते इति प्रकृतिजाः तान् गुणान् भुङ्क्ते ॥ हि प्रसिद्धं ॥

न केवलं प्रकृतिसंबंधेन दोष एव जीवस्य किंतु गुणोऽपि ॥ प्रकृतिसंबंधेन जीवो दुःखादीनिव सुखादीनपि भुङ्क्ते ॥ रागद्वेषादीनिव अमानित्वादीनपि शमदमा-

---

१. वि. ॥ २ द्वै ॥ जीवस्य शरीरेन्द्रियप्रवर्तकत्वे चित्प्रकृतिर्हेतुः जीवस्य सुखदुःखानुभवे परमपुरुषो भगवान् हेतुः ॥ उभयोरुभयत्र हेतुत्वसत्त्वेऽपि आधिक्यादेकत्रहेतुत्वव्यपदेशः अतो विशिष्योक्तिः॥ अतो हेतुरुच्यते इत्यस्य द्विवारमुक्तिः ॥ ३. अ ॥

देरूपेण भुङ्क्ते ॥ मास्तु दोषहेतुतया सः इत्युक्ते सुखादीनां अमानित्वादीनां चानुभवाय किं कुर्यात् पुरुषः ॥ तदनुभवो न स्यात् ॥ श्रोत्रादिभिः अश्राव्यादीनां श्रवणादिकं जायते तेन चाहं दोषी भवामीति कंटकवेधनादिना तेषां नाशने सत्कथाश्रवणभगवद्दिव्यरूपदर्शनादिकं कथंकारं घटेत ॥ 'शरीरमाद्यं खलु धर्मसाधन'मिति हि प्रसिद्धिः ॥ अतः प्रकृतिबंध आवश्यकः ॥ परंतु यथा स दोषहेतुर्न भवेत् भवेच्च गुणहेतुः तथा प्रयतितव्यम् ॥ १ स्वप्रकाशचैतन्यरूपो जीवः प्रकृतिनिर्मिते देहे अहमिति स्वस्वरूपाविवेकेन तादात्म्येन स्थितः सन् अत एव आत्मन्यारोपिततद्धर्मतत्कर्मवान् देहगुणान् बाल्यस्थौल्यादीन् इंद्रियगुणान् काणत्वखंजत्वादीन् प्राणगुणान् क्षुधितत्वादीन् मनोगुणान् समीचीनत्वादीन् बुद्धिगुणान् कर्तृत्वभोक्तृत्वादीन् सुखदुःखादिप्रत्ययांश्च स्वीयत्वेन भुङ्क्ते ॥ अन्यधर्मान् स्वधर्मत्वेनानुभवति ॥ प्रसिद्धमिदं वेदपुराणादिषु ॥ २ पुरुषः प्रकृतिसंबंधेन सुखदुःखादीननुभवति ॥ अनुभवस्य प्रत्यक्षसिद्धत्वात् नाध्यासिकसंबन्धेन तदनुभवः ॥ न वा मिथ्यात्वं सुखादीनां ॥ ३स्वानुभवैकसुखरूपो जीवः प्रकृतिसंबंधेन वैषयिकसुखदुःखादीन् भुंक्ते ॥

अर्जुनः॥'कार्यकारणकर्तृत्वे' इत्युक्तरीत्या प्रकृतिनिर्मितदेहेन्द्रियादिकमाश्रित्यैव गुणान् भुङ्क्ते ॥ न प्रकृतिसूक्ष्मरूपसंबंधमात्रेण ॥ सूक्ष्मरूपेण प्रकृत्या बद्धस्य गुणानुभवहेतुभूतनानादेहेन्द्रियादिसंबंधः कुतो भवति ॥

कृष्णः ॥ कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥ २२ ॥

कारणमिति । गुणैः सत्वादिभिः सङ्गः सम्बन्धः गुणेषु सुखादिषु सङ्गः अहंसुखीत्याद्यभिमानः अस्य जीवस्य सती च असती च सदसत्यौ सती चासौ असतीच सदसती सदसत्यौ च सदसती च सदसत्यः सदसत्यश्च ताः योनयश्च सदसद्योनयः तासु जन्मानि तेषु कारणं भवति ॥ २२ ॥

---

१ अ ॥ २ ऐं ॥ ३ नि ॥

जीवस्य सत्वगुणतमोगुणरजोगुणैः संगः सद्योनिषु असद्योनिषु सदसद्योनिषु च जननेहेतुः॥त्रिगुणात्मकप्रकृतिसंबद्धस्य तत्तद्गुणतारतम्येन तत्तज्जन्मनि तत्तद्विधतत्तत्सुखदुःखाद्यनुभवो भवति ॥१गुणेषु ...ः त्रिगुणात्मकप्रकृतौ अहमिति तादात्म्याध्यासः अस्य आत्मनः सदसद्योनिजन्मसु सत्वरजस्तमोगुणपरिणामसुखदुःखमोहानुभवरूपपूर्वाधोक्तगुणभोगे कारणं॥ गुणकार्येषु शब्दादिषु विषयेषु संगशब्दितः कामः गुणैः इन्द्रियैः संगः संबंधः इति वा अस्य सदसद्योनिजन्मसु कारणं इति च ॥ कामः सदसद्योनिजन्मसु अस्य संसारे कारणमिति च ॥ पूर्वपूर्वयोनिषु स्थितस्य तत्तद्योनिप्रयुक्तेषु सत्वादिगुणपरिणामेषु सुखदुःखादिषु संगशब्दितो यः कामः सः तत्तत्साधनभूतपुण्यपापरूपकर्मप्रवर्तनद्वारा तत्तत्पुण्यपापफलानुभवाय सदसद्योनिषु जन्महेतुर्भवति ॥ सद्योनयः देवादियोनयः ॥ असद्योनयः पश्वादिपापयोनयः ॥ सदसद्योनयः मनुष्ययोनयः ॥ उक्तरूपगुणसंगः नानादेहेन्द्रियादिसंबंधहेतुरात्मन इत्यर्थः हि ॥ २२ ॥

अर्जुनः ॥ द्वे ॥ प्रकृतिबंध आवश्यकः परन्तु स यथा दोषहेतुर्न भवेत् भवेच्च गुणहेतुः तथा प्रयतितव्यमिति सयुक्तिकमभिहितम् ॥ कोसौ प्रयत्नः येन स दोषहेतुर्न भवति भवति च गुणहेतुः तं ब्रूहि ॥

कृष्णः ॥ उपद्रष्टाऽनुमंता च भर्ता भोक्ता महेश्वरः ॥
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २३ ॥

उपद्रष्टेति ॥ अस्मिन् देहे वर्तमानः परः देहाद्भिन्नः विलक्षणः उत्तमश्च पुरुषः परमात्मा जीवः इति वा ॥ उपद्रष्टा अनुमन्ता भर्ता भोक्ता महांश्चासावीश्वरश्च महेश्वरः परमश्चासावात्मा च परमात्मा इत्यपिच उक्तः ॥ २३ ॥

यस्मिन् शरीरे जीवो वर्तते तस्मिन्नेव शरीरे परमात्माऽपि वर्तते किमर्थमिति चेत् ॥ धारणार्थं पोषणार्थं च ॥ तर्हि एकशरीरस्थत्वादुभयोः समानभोगप्राप्तिः॥ न हि गृहे दह्यमाने तद्गतयोरुभयोर्मध्ये एकस्य दाहः अन्यस्य नेति वक्तुं युक्तं इति चेत्

१. अ ॥

'नोभयोः समानो भोगः परमात्मनः १सामर्थ्यविशेषात् ॥ २'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' इति सूत्रं ॥ दह्यमानगेहगतयोरुभयोर्मध्ये अग्निस्तंभनशक्तिमान् न दह्यते तच्छक्तिरहितस्तु दह्यते इति प्रसिद्धमेव हि लोके ॥ ३ 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ॥ तयोरेकः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' इति श्रुतिश्च ॥ एकस्मिन् देहे द्वौ क्षेत्रज्ञौ पुरि शयनात् पुरुषशब्दवाच्यौ तयोरेको जीवः सोऽवरः पुरुषः परः पुरुषः परमात्मा ॥ सः अस्मिन् देहे मुख्यक्षेत्रज्ञत्वेन वर्तते इत्यपि तत्र तत्र तैस्तैरुक्तः ॥ मया च ४'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु' इत्यत्र उक्तः ॥ अमुख्यक्षेत्रज्ञो जीवः जडस्य देहस्येश्वरः॥ अतएव सः ५ 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः'' इत्यत्र प्रभुपदेन ६ 'नादत्ते कस्य चित्पापं न चैव सुकृतं विभुः' इत्यत्र विभुपदेन चोक्तः ॥ परमात्मा तु महेश्वरः ॥ जीव आत्मा परमात्मा तु परम आत्मा ॥ देहेऽस्मिन् मुख्यक्षेत्रज्ञत्वेन वर्तमानः परमात्मा तत्रतत्र महेश्वरः इति परमात्मा इति च उक्तः ॥ मयापि ७'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरं' इति ॥ ८'यो मामजमनादिं च वेत्ति लोकमहेश्वरं' इति च महेश्वरपदेन ९'आत्मैव ह्यात्मनो बन्धुः आत्मैव रिपुरात्मनः' ॥ १० 'बन्धुरात्माऽऽत्मनस्तस्य' इति जीवमात्मपदेनोक्त्वा ११'जितात्मनः प्रशांतस्य परमात्मा समाहितः' इति परमात्मपदेन च उक्तः ॥ उभावपि भोक्तारौ । १२ 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति सूत्रे परमात्मनः, १३ 'द्वा सुपर्णे'ति श्रुतौ जीवस्य च भोगोक्तेः॥ तत्र जीवः असारभोक्ता परमात्मा तु १४सारभोक्ता ॥ तस्य परमात्मनोऽत्र देहे किं कार्यमिति चेत् अनुमन्ता तत्तदनुगुणं प्रेरकः किं तस्य जीवस्येव कर्तृत्वं तत्कृतपुण्यपापलेपश्च विद्यते इति चेत् उपद्रष्टा उप जीवस्य समीपे स्थित्वा द्रष्टा॥ उप जीवस्य तत्तत्स्वाभिमानिदेवानां च उपरिष्टाद्वर्तमानः सन् द्रष्टा ॥ सर्वाधिकत्वेन स्थित्वा द्रष्टा ॥ १५'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतिः ॥ प्रकृतिः जीवं मद्वशो भवति वैषयिकसुखं अग्रे अमृतोपमं प्रदर्श्य आकर्षति ॥ यदि तया आकृष्यते जीवः तर्हि १६'महाशनो महापाप्मा' १७ 'आवृतं ज्ञान मेतेन' १८'ज्ञानमावृत्य देहिनं' इत्युक्तरीत्या महाशनेन महापाप्मना कामेन आवृतविवेक-

१. अत्र, 'सर्वज्ञाल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः ॥ स्वातंत्र्यपारतंत्र्याभ्यां संभोगो नेशजीवयोः ॥ इति गारुडवचनमनुसंधेयं ॥ २. २. १. ८. ३. मुं. ५. १. ४. १३. ३. ५. ५ १४. ६.५. १५. ७५. २९. ८. १०. ३. ९. ६. ५. १०. ६. ६. ११. ६. ७. १२.१.२.११. १३. मुं. ५.१. १४. अत्र, शुभंपिबत्यसौनित्यं नाशुभं सहरिः पिबेत् ॥ पूर्णानन्दमयस्तस्यचेष्टानज्ञायतेक्वचित् ॥ इति पाद्मवचनमनुसंधेयं ॥१५. श्वे ६. ११. १६. ३. ३७. १७. ३. ३९. १८. ३. ४०.

भवति ॥ शिष्टमन्यत् समानं १'सच यो यत्प्रभावश्च'त्येतद्वयं २ एतद्वयेन विवृतं पूर्व-श्लोकद्वयेन ३. 'यद्विकारि यतश्च य'दित्येत ४द्वयं क्रमेण विवृतं ॥ २३ ॥

वि ॥ पुरुषस्य स्वभावं शृणु ॥ अस्मिन् देहे विद्यमानः अयं पुरुषः, समीपे स्थित्वा दृश्यानां प्रदर्शकः उपद्रष्टा स इव प्रवृत्तस्य प्रवर्तकोऽनुमंता स इव ॥ मनो-बुद्धींद्रियादीनां विषयप्रदर्शकः देहादेः प्रेरकश्च ॥ देहस्य धारकः पोषकश्च ॥ सुखदुःखयोर्भोक्ता च ॥ नियंतृत्वधारकत्वशेषित्वादिभिः देहेन्द्रियमनांसि प्रति-महेश्वरश्च ॥ वक्ष्यते चायमीश्वरत्वेन ॥ ५'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः' इति॥ देहे अस्मिन् आत्मशब्दवाच्यदेहेंद्रियमनांसि प्रति परम आत्मा च॥ अनन्तरमेव ६' ध्यानेनात्मनि पश्यंती'त्यत्र देहे मनसि चात्मशब्दप्रयोगो दृश्यते ॥ परमात्मा इति महेश्वर इत्यपि उक्तश्च ॥ परः अनादिमत्परमित्यादिनोक्तस्वरूपः अपरिच्छिन्नज्ञाना-दिशक्तिः ॥ एतादृशात्मस्वभावानुसंधानाय प्रयत्नः कार्यः ॥ तथाऽनुसंधानलाभे तद्भवेन क्रमान्मुक्तो भवति ॥ शिष्टमन्यत्समानं ॥ २३ ॥

अर्जुनः ॥ किं प्रकृतिपुरुषतत्संबन्धतत्कृतगुणदोषादीनां वचने प्रयोजनं तेषां परिज्ञानं प्रयोजनमिति चेत् किं तस्मिन् परिज्ञाने प्रयोजनं ब्रूहि ॥

**कृष्णः ॥ य एनं वेत्ति पुरुषं प्रकृतिं च गणैः सह ॥**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २४ ॥**

य इति ॥ यः एनं पुरुषं प्रकृतिं च गुणैः सह वेत्ति जानाति ॥ स सर्वथा सर्वप्रकारैः येन केन वा प्रकारेणेति यावत् ॥ वर्तमानोऽपि भूयः पुनः नाभिजायते ॥ २४ ॥

७इमं ८पुरुषशब्देनोक्तं जीवं प्रकृतिशब्देनोक्तां जडप्रकृतिं च तत्तद्गुणैः सह उक्तरी-त्या यो ९जानाति स क्रमेणापरोक्षज्ञानमाप्य मुक्तो भवति पुनर्न जायते ॥ विधिमुल्लंघ्य

---

१. १३. ४. २. ज्ञेयमित्यादिसप्तकेनेति केचित् ॥ ३. १३. ४. ४. 'यतश्चय' दित्येवाविवृतं ॥ 'यद्विकारी' त्येतत्तु 'महाभूतानी' (१३. ६.) त्यनेनेति केचित् ॥ ५. १५. ८. ६. १३. २५. ७.द्वै. वि.॥ एनमिति पाठः॥ अ॥एवमिति पाठः॥ ८. द्वै ॥९.पुरुषं भगवंतं प्रकृतिं चेतनप्रकृतिशब्दितां लक्ष्मीं च तत्तद्गुणैः सह जानाति इति च ॥

येन केनापि प्रकारेण वर्तमानोऽपि अपुनर्भवं प्राप्नोति ॥ किंपुनः समीचीनेन प्रकारेण वर्तमानो भूयो न जायत इति॥ [1]इमं पुरुषं क्षेत्रज्ञशब्दितं जीवं सत्वादिगुणैः सहितां जडप्रकृतिं च जानन् मुक्तो भवति ॥ नानाविधदेहसंसर्गप्रयुक्तविचित्रक्लेशवानपि न पुनर्जायते ॥ किमुत देहसंसर्गप्रयुक्तक्लेशाभाववानलिकप्रवृत्तिः॥ तत्वविदः प्रारब्धकर्मवशात्तादात्विकक्लेशानुभवेऽपि नेतरपुरुषसाधर्म्येण जन्मांतरमनुमातुं युक्तं॥ [2]उक्तरीत्या क्षेत्रज्ञशब्दितं पुरुषं ब्रह्मैवाहं अयमहमस्मि इति साक्षात्करोति महदादिविकारसहितां प्रकृतिं शुक्तिरजतवन्मिथ्याभूतां अधिष्ठानापरोक्षेण बाध्यमानां च यो जानाति स प्रारब्धवशाद्विध्यतिक्रमेण वर्तमानोऽपि पुनर्न जायते ॥ किंपुनः सद्वृत्तः ॥ एतदर्थमेव प्रकृतिपुरुषयोः यथावदुपदेशः॥ संनिवेशविशेषविरहेण सूक्ष्मरूपेण वर्तमाना प्रकृतिः प्रकृतिरित्युच्यते ॥ सैव संनिवेशविशेषविशिष्टा देहाकारेण परिणता महदहंकारादिकार्यकारणसंघातरूपा क्षेत्रमित्युच्यते ॥ यथा संनिवेशविशेषरहिता भूमिः भूमिरिति सैव चतुरस्रत्रिकोणादिसंनिवेशविशेषमापादिता क्षेत्रमिति चोच्यते ॥ संनिवेशविशेषविशिष्टक्षेत्रशब्दितशरीरविशेषसंबन्धरहितः केवलं प्रकृतिसंसृष्टः पुरुष इत्युच्यते शरीरोपाधिना प्रत्यगात्मतां प्राप्तः क्षेत्रज्ञ इत्युच्यते ॥ प्रकृतिपुरुषावेव क्षेत्रक्षेत्रज्ञौ नान्यौ इति प्रकृतिपुरुषयोस्तत्वमुक्तरीत्या ज्ञातव्यं ॥ यो जानाति स प्रकृतेः हेयतां मत्वा तद्बन्धान्मोचयितुं समर्थं प्रभुमीश्वरं आश्रित्य तत्प्रसादेन प्रकृतिबन्धान्मुक्तो भवति ॥ २४ ॥

**अर्जुनः** ॥ प्रकृतिपुरुषौ यथावज्ज्ञात्वा साक्षात्कारद्वारा मुक्तो भवतीत्युक्तं॥ तस्य साक्षात्कारस्य साधनं ब्रूहि ॥

**कृष्णः** ॥ ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना ॥
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २५ ॥

अन्ये त्वेवमजानंतः श्रुत्वान्येभ्य उपासते ॥
तेऽपि चातितरंत्येव मृत्युं श्रुतिपरायणाः ॥ २६ ॥

ध्यानेनेति ॥ केचित् ध्यानेन आत्मना बुध्या मनसा वा आत्मनि देहे बुद्धौ

१. चि. ॥ २. अ. ॥ ज्ञानेन प्रारब्धेतरसर्वकर्मनाशः इत्यादिकं भाष्ये विस्तरेणोक्तं ॥

वा आत्मानं परमात्मानं जीवात्मानं वा पश्यन्ति साक्षात्कुर्वंति ॥ अन्ये सांख्येन सांख्यं ज्ञानं तेन योगेन पश्यन्ति ॥ अपरे कर्मैव योगः कर्मयोगः तेन च पश्यन्ति ॥ २५ ॥

अन्येत्विति ॥ एवं उक्तोपायैः अजानन्तः अन्ये तु अन्येभ्यः श्रुत्वा उपासते कर्मयोगादिभिराराधयन्ति ॥ श्रुतिः श्रवणं तदेव परं अयनं आश्रयः तरणमार्गो वा येषां ते श्रुतिपरायणाः तेऽपि मृत्युं मृत्युभूतं संसारं अतितरन्त्येव ॥ चशब्दः समुच्चये ॥ २६॥

उत्तमाः मध्यमाः मन्दाः मन्दतराश्च इति चतुर्विधाः अधिकारिणः॥ तत्र उत्तमाः निदिध्यासनशब्दितेन ध्यानयोगेन १ परमात्मानं आत्मना २ बुध्या आत्मनि ३देहे पश्यंति ॥ मध्यमास्तु तदशक्ताः श्रवणमननरूपपरोक्षज्ञानयोगेन ध्यानेन च पश्यंति ॥ अधमास्तु तत्राप्यशक्ताः अकाम्यकर्मयोगेन परोक्षज्ञानयोगेन ध्यानयोगेन च पश्यंति॥ इयं निष्पन्नकर्मयोगानां कर्मानुष्ठानदशा ॥ इमे त्रयः स्वयं विचारसमर्थाः॥ मंदतरास्तु स्वयं विचारासमर्थाः उक्तैः त्रिभिर्योगैः आत्मानं साक्षात्कर्तुमशक्ताः आचार्येभ्यः श्रुत्वा कर्मयोगेनाराधयंति ॥ इयं च कर्मयोगोपक्रमदशा ॥ ते कर्मयोगज्ञानयोगध्यानयोगक्रमेण पश्यंति सततश्रवणनिष्पन्नकर्मादियोगास्तेऽपि मृत्युभूतं संसारमतितरंत्येव ॥ किमुत स्वयंविचारसमर्थाः ॥ एवमधिका ४ रिभेदेन आत्मदर्शनं भवति ॥ २५ ॥ २६॥

अर्जुनः॥ 'प्रकृतिं पुरुष' मित्यादित्रिकेण प्रकृतिसंबंधाज्जीवस्य संसार इत्युक्तं जीवस्य प्रकृतिगुणसंसर्गात्सदसद्योनिषु जन्मेत्यप्युक्तं॥ किं प्रकृतिबंधमूलके संसारे सर्वत्र जीवः प्रकृतिसंसृष्ट एव वर्तते ॥ उत क्वचित् तद्वियुक्तोऽपि ॥ दृश्यते हि लोके पुमान् भार्यासंबंधमूलके संसारे क्वचित् तत्संसृष्टः क्वचित् तद्वियुक्तश्च ॥ अतस्तत्तत्वं ब्रूहि ॥

---

१. अ. वि. जीवात्मानं ॥ २. अ. वि. संस्कृतेन मनसा ॥ अ. परमात्मानं आत्मत्वेन पश्यंतीत्यन्ये ॥ ३. अ. बुद्धौ देहे वा ॥ वि. देहे स्थितं । ४. वि. 'तेपिचातितरंत्येवे'ति पञ्चमं पर्व ॥ इमे मन्दतमाः श्रवणमात्रनिष्ठाः कर्मयोगोपक्रमेऽप्यसमर्थाः कर्मयोगारंभक्रमेण पूर्वोक्तसाधनैर्मुच्यंते ॥ किमुतान्ये ॥ अपिशब्दादयं पर्वभेदो ज्ञायते इति भाष्यं ॥ छु. देवर्षयः देवाः राजर्षयः मनुष्याः इति चत्वारोऽधिकारिणः क्रमाद्बोध्याः ॥ इति च ॥

कृष्णः ॥ यावत्संजायते किंचित्सत्त्वं स्थावरजंगमम् ॥
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २७ ॥

यावदिति ॥ हे भरतर्षभ पार्थ स्थावरं च जङ्गमं च अनयोः समाहारः स्थावर-जङ्गमं तद्रूपं किंचित् सत्त्वं वस्तु यावत् संजायते तावत् तत् यद्यज्जायते तदखिलमिति यावत् ॥ क्षेत्रं च क्षेत्रज्ञश्च क्षेत्रक्षेत्रज्ञौ तयोः संयोगः क्षेत्रक्षेत्रज्ञसंयोगः तस्मात् तृतीयार्थेपञ्चमी ॥ तेन सहैव स्थितं विद्धि जानीहि ॥ क्षेत्रक्षेत्रज्ञसंयोगं अतति सदा गच्छतीति क्षेत्रक्षेत्रज्ञसंयोगात् ॥ तांतशब्दे द्वितीयांतमिदम् ॥ तादृशं विद्धीति वा ॥ क्षेत्रक्षेत्रज्ञसंयोगादेव तथा जातं विद्धीति वा ॥ १७ ॥

हे पार्थ संसारे सत्त्वशब्दितो १ जीवः तत्तत्कर्मवशात् स्थावरात्मना जङ्गमात्मना च २ जायते ॥ उभयत्राप्ययं प्रकृतिसंसृष्ट एव॥ न क्वापि संसारदशायां अयं प्रकृतिवियुक्तो वर्तते ॥ स्थावरात्मना जङ्गमात्मना च जातं यत् सत्त्वं तदात्मना जातो यो-जीवः तत् सत्त्वं तं जीवं क्षेत्रक्षेत्रज्ञसंयोगेन सहैव स्थितं विद्धि॥क्षेत्रक्षेत्रज्ञसंयोगं अतति सर्वदा गच्छति इति क्षेत्रक्षेत्रज्ञसंयोगात् ॥ प्रथमांतमिदं ॥ अस्मिन् शब्दे द्वितीयांतमत्रेदं क्षेत्रक्षेत्रज्ञसंयोगादिति ॥ सदा क्षेत्रक्षेत्रज्ञसंयोगसहितमित्यर्थः ॥ तादृशं वा जानीहि ॥ कुतोऽयं स्थावरात्मना जङ्गमात्मना च जायते इति चेत् प्रकृतिपुरुषसंयोगादेव तथा जायते ३ प्रकृतिपुरुषसंबन्धमूलकतत्तज्जन्मकृततत्तत्कर्मवशान्नानायोनिषु जायते ॥ इदमेवोक्तं मया ॥ ४ 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति ॥ ५ 'विसृजामि पुनः पुनः ॥ भूतग्राममिमं कृत्स्नं अवशं प्रकृतेर्वशात्' इति च ॥ स्थावरजङ्गमात्मकं यज्जडजातं जायते ॥ तत्सर्वं प्रकृतिपुरुषसंयोगादेव जायते ॥ प्रकृतिसंसृष्टपुरुषादृष्टवशात् तदुपभोगाय हि सृज्यते ॥ अतस्तदुपभोगरूपः संसारः प्रकृतिबन्धमूलकः ॥ ६ संसारं तन्निवर्तनोपायं च उक्तमपि पुनर्विविच्य ब्रवीति चेत् स्थावरं जङ्गमं वा यद्वस्तु जडमजडं वा जायते

१. द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जंतुषु इति कोशः ॥ २. वृक्षगुल्मलतावीरुत्तृणादिषु जैनमतप्रक्रियया केवलाचेतनत्वं न वाच्यं ॥ ३. छै. ॥ जडमजडं वा यावद्वस्तु जायते तत्सर्वं मुख्यक्षेत्रशब्दितचेतनप्रकृतिरूपलक्ष्म्याः मुख्यक्षेत्रज्ञशब्दितपरमात्मनश्च संयोगादेव जातं विद्धीति च ॥ ४. १३. २२. ५. ९. ८. ६. अ ॥

तत्सर्वं क्षेत्रक्षेत्रज्ञशब्दितप्रकृतिपुरुषयोस्संयोगात् जायते ॥ विद्यते इह सङ्गः प्रकृति पुरुषयोः क्षेत्रक्षेत्रज्ञशब्दितयोः विषयविषयिणोः भिन्नस्वभावयोः अन्योन्यधर्माध्यासरूपसंयोगलक्षणः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावमूलकः ॥ शुक्तिरज्ज्वादीनां रजतसर्पादिसंयोगवत् ॥ तस्मादेव सर्वमुत्पद्यते ॥ शुक्तिरजतरज्जुसर्पादिवत् ॥ स्वतः शुद्धस्य जीवस्य यः संसारः तस्य अनाद्यविद्यासंसर्गमूलकत्वं यदुक्तं १ 'प्रकृतिं पुरुषं चे'त्यादित्रिकेण तदेतदनेन प्रपञ्चितं ॥ २७ ॥

अर्जुनः ॥ २'यज्ज्ञात्वाऽमृतमश्नुत' इति ३'एतद्विज्ञाय मद्भावायोपपद्यत' इति ४'य एवं वेत्ति पुरुषं' 'न स भूयोऽभिजायते' इति च ज्ञानान्मोक्ष उक्तः ॥ तज्ज्ञानं कीदृशं ब्रूहि ॥ किंच ॥ मुख्यक्षेत्रज्ञत्वं परमात्मन उक्तं ॥ तथासति तस्य तारतम्यपारतन्त्र्यविनाशवज्जडाजडसंबन्धात्तारतम्यादिकं स्यात् ॥ अतः कथमहं ५ 'उपद्रष्टा' इत्यादिनोक्तं श्रद्दध्यां ॥ वद ॥

कृष्णः ॥ समं६ हि सर्वभूतेषु तिष्ठन्तं परमेश्वरम् ॥
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २८ ॥

सममिति ॥ यः परमात्मानं जीवात्मानं वा सर्वभूतेषु सर्वाणि च तानि भूतानि च सर्वभूतानि तेषु तिष्ठन्तमपि समं समं यथा तथा तिष्ठन्तमिति वा ॥ परमश्चासावीश्वरश्च परमेश्वरः । तं भूतेषु विनश्यत्स्वपि न विनश्यत् अविनश्यत् तं पश्यति जानाति स एव पश्यति जानाति ॥ हि प्रसिद्धं ॥ 'समं सर्वेषु भूतेषु' इति पाठान्तरम् ॥ २८ ॥

तारतम्योपेतेषु विषमेषु सर्वेषु शरीरेषु जडेषु ७चेतनेषु च ब्रह्मादिस्थावरान्तेषु तिष्ठन्तं तथाऽपि ८समं तारतम्यवैषम्यादिरहितं॥ समं यथा तथा तिष्ठन्तं विपरिणम-

१. १३. २०. २. १३. १३. ३. १३. १९. ४. १३. २४. ५. १३. २२. ६. अ. वि. समं सर्वेषु भूतेषु इति पाठः ॥ ७. छ. ॥ आब्रह्मस्तंबपर्यंतं जीवानां तारतम्यसद्भावात् ॥ ८. अ. ॥ सर्वत्र एकं ॥ त्रि ॥ ज्ञानैकाकारत्वेन समं ॥

मानेषु परिणामराहित्यादिकरूपेण विद्यमानं इति वा ॥ अस्वतन्त्रेषु भूतेषु तिष्ठन्तमपि १ परमेश्वरं परमस्वतंत्रं विनश्यत्सु भूतेषु तिष्ठंतमपि स्वयमविनश्यंतं २ आत्मानं एतादृशं यः वेत्ति स एव ज्ञानी ॥ तदेव ज्ञानं॥ तेन ज्ञानेन मोक्षः ॥ ३ 'उपद्रष्टे' त्यत्र उक्तरीत्या सामर्थ्यवैशेष्यात् न तारतम्यादिकं तस्य॥ यद्यपि सर्वेऽपि पश्यन्ति न केवल-मेवं पश्यन्नेव ॥ तथाऽपि अयमेव पश्यति यथावद्दर्शनात् ॥ इतरे पश्यन्तोऽपि न पश्यन्ति अनेकचन्द्रदर्शिवत् ॥ रज्जुसर्पदर्शिवच्च ॥ विपरीतं पश्यन् न पश्यतीति हि व्यपदिश्यते ॥ २८ ॥

अर्जुनः ॥ यथावदात्मानं पश्यन् पश्यति विपरीतदर्शी तु न पश्यतीत्युक्तं कुतो यथावद्दर्शनविपरीतदर्शनयोः स्तुतिर्निंदा च ॥

कृष्णः ॥ समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ २९ ॥

सममिति ॥ यः परमात्मानं जीवात्मानं वा सर्वत्र समवस्थितं सम्यगवस्थितं ईश्वरं पश्यन् पुरुषः आत्मानं स्वं परं वा आत्मना बुद्ध्यादिना न हिनस्ति हिंसां करोति ततः तस्मात् परां गतिं याति प्राप्नोति ॥ हि प्रसिद्धम् ॥ २९ ॥

सर्वत्र सम्यगवस्थितं ईश्वरं ४ आत्मानं ५ समं यः पश्यति स आत्मना बुद्ध्या मनसा स्वेन देहादिना वा आत्मानं स्वं न हिनस्ति नरकाद्यनर्थोत्पादनेन स्वस्य हिंसां न करोति ॥ ततः अहिंसनात् यथावद्दर्शनाद्वा परगतिशब्दितं ६ मोक्षमाप्नोति॥ यस्तु विपरीतं पश्यति स तेन विपरीतदर्शनेन आत्मानं हिनस्ति हिंसितो न परगतिं प्राप्नो

१ अ । तदभेदात् ॥ वि देहाद्ययमनोंस प्रति॥ २. द्व. ॥ परमात्मानं ॥ अ. वि. जीवात्मानं इदं प्रकरणाल्लभ्यते ॥ परमेश्वरमित्येव वा विशेष्यं ॥ ३. १३. २३. ॥ ४. द्व. परमात्मानं ॥ अ. वि. ॥ जीवात्मानं ॥ ५. द्व. सर्वत्र समं ॥ अ. वि. परस्परं स्वेन च समं ॥ ६. वि. 'अक्षरोऽक्षर' ८. २१ इत्यत्र परगतिशब्देनोक्तं यथावस्थितमात्मानं प्राप्नोति ॥

ति ॥ किंतु अत्यन्तकष्टं गतिमाप्नोति॥ १' असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः' इति श्रुतिः॥ २ सम्यक्दर्शी न हिनस्तीत्युक्त्या असम्यक्दर्शी हिनस्तीति प्रतीयते ॥ लोके अविद्वानात्मानं हिनस्ति वा न ३'न हि स्वस्व ५ हिनस्ती'ति श्रुतिः ॥ कथमुच्यते आत्मानं हिनस्तीति इति चेत् ॥ अज्ञोहि स्वतः शुद्धमात्मानं अन्यधर्मारोपेण तिरस्कुर्वन् ४ अशुद्धं करोति तदेव तस्य हिंसनं ॥ निर्दोषे पुंसि दोषारोपणं हिंसेति हि व्यपदिश्यते लोके ॥ आत्मस्वरूपापरिज्ञानेन निषिद्धं काम्यं च कर्म कृत्वा पुनःपुनर्जन्ममरणसंपादनात् आत्मशब्दितं देहमपि हिनस्ति ॥ हिंस्यमानकार्यकारणसंघातात्मकः खलु देहः॥ अतोऽज्ञः उभयथापि आत्महा भवति तेन सोऽनर्थमाप्नोति ॥ आत्मानं अन्यं प्राणिनं न हिनस्ति ॥ सर्वत्र ऐकात्म्यदर्शनात् ॥ किंतु कृपालुर्भवति ॥ ततः परां गतिं प्राप्नोति इति वा ॥ यस्मादेवं तस्मात् स्तुतिर्निन्दा च ॥ २९ ॥

**अर्जुनः** ॥ यथावदात्मानं पश्यन्नेव पश्यति अन्यस्तु न पश्यतीत्युक्तं ॥ किं तद्यथावद्दर्शनं सर्वत्र साम्यदर्शनं यथावद्दर्शनमिति ५'समं सर्वेषु भूतेषु' इत्यनेनोक्तमिति चेत् ॥ साम्यदर्शनं कथं यथावद्दर्शनं स्यात् तत्तत्कर्मतत्तत्कर्मफलभेदेन वैषम्यस्योपलभ्यमानत्वात् ॥ ब्रूहि ॥

**कृष्णः** ॥ प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ॥
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ ३०॥

**प्रकृत्येति** ॥ यः सर्वशः कर्माणि प्रकृत्यैव क्रियमाणानि पश्यति ॥ तथा आत्मानं अकर्तारं च पश्यति ॥ स एव पश्यति जानाति ॥ ३० ॥

---

१. ई ३.॥ २. अ.॥ ३. तै. सं ५. १. ७. १.॥ ४. अत्र 'योऽन्यथा संतमात्मानमन्यथा प्रतिपद्यते॥ किं तेन न कृतं पापं चोरेणात्मापहारिणा'॥ इति (भार. आदि. ९७. ७) वचनमनुसंधेयं॥ 'आत्मापहाररसिकेन मयैव दत्तमन्यैरथार्यमधुना विबुधैकनाथ॥ स्वीकृत्य धन्यतिमदीरा मां त्वदीयं चोरापनीतनिजनूपुरवत्त्वपादे' ॥ इति श्लोकश्चानुसंधेयः ॥ ५. १३. २८.

१परमात्मना २सर्वाणि कर्माणि प्रकृत्यैव स्वस्वभावेनैव स्वेच्छयैव स्वाधीनचेतनाचेतनप्रकृतिभ्यामेव तत्तज्जीवस्वभावेनैव क्रियमाणानि जानीयात् ॥ आत्मानं स्वात्मानं तेषु कर्तृत्वरहितं नाहं तेषु कर्तेति जानीयात् ॥ प्रकृत्य इति ल्यबंतं ॥ परमात्मना पूर्वकर्म अनुसृत्य क्रियंते कर्माणि तस्य हि एवं कुर्वीति प्रेरको नास्ति अतोऽकर्ता सः इति च जानीयात् ॥ इति यः पश्यति स एव पश्यति ॥ ईश्वरः तत्तज्जीवस्वरूपयोग्यतानुसारेण कर्माणि कारयित्वा पूर्वपूर्वकर्मानुसारेण उत्तरोत्तरकर्माणि कारयित्वा तद्भेदेन सुखदुःखादिरूपं फलं ददाति कर्मानुसारेण तथाकरणात् न वैषम्यं नियामकांतरराहित्यान्न स्वातन्त्र्यहानिः इति यत् ज्ञानं तत् सम्यक् ज्ञानमेव ॥ ३आत्मा न करोति नानुभवतिच्च ॥ किंतु चिदाभासानुविद्धा प्रकृतिरेव अन्तःकरणरूपेण परिणता सर्वैः ४ प्रकारैः कर्माणि करोति भुङ्क्ते ५ च तत्फलानि ॥ आत्मा तु न कर्ता नापि भोक्ता इति यः पश्यति सः पश्यति ॥ प्रकृतिः करोति लिप्यते च ॥ अतो विविधविचित्रतत्तत्कर्मतत्तत्फलभेदेन भेदो वैषम्यं च तस्या एव नाकर्तुरभोक्तुरात्मनः इति यद्दर्शनं तत्सम्यग्दर्शनमेव ॥ ६वस्तुतोऽकर्तुरभोक्तुरात्मनः कर्तृत्वभोक्तृत्वादिकं कर्मरूपाविद्याविघ्नकृतं प्रकृतिसंबन्धप्रयुक्तं न स्वरूपप्रयुक्तं ॥ आत्मा तु ज्ञानैकाकारतया सर्वत्र समएव अतः समत्वदर्शनं यथावद्दर्शनमेव ॥ इदमेवोक्तं मया ॥ ७ 'समं सर्वेषु भूतेषु तिष्ठन्तं यः पश्यति स पश्यती'ति ॥ ३० ॥

॥ द्वै ॥ अर्जुनः ॥ समं पश्यन् ततो याति परां गतिमित्युक्तं ॥ किं परमात्मनः सर्वत्र समत्वदर्शनमेवालं मुक्तिप्राप्तये ॥

कृष्णः ॥ यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३१ ॥

यदेति ॥ यदा भूतानां पृथक् भावः पृथग्भावः तं एकस्मिन् परमा[त्म]नि ब्रह्मणि वा प्रकृतिरूपे वस्तुनि वा तिष्ठतीत्येकस्थः तं अनुपश्यति जानाति ॥ ततः तस्मादेव विस्तारं च अनुपश्यति ॥ तदा ब्रह्म संपद्यते प्राप्नोति ॥ ब्रह्म भवति इति वा ॥३१॥

---

१. द्वै. ॥ २. ॥ सर्वशः सर्वाणि ॥ ३. अ. ४. सवशः सर्वैः प्रकारैः ॥ ५. चकारात् कर्मफलानुभवमपि प्रकृत्यैव क्रियमाणं पश्यति ॥ ६. वि ॥ ७. १३. २८.

न परमात्मनः समत्वज्ञानमेवालं किंतु सृष्टिस्थितिसंहारकर्तृत्वज्ञानमप्यावश्यकं अत एवोक्तं मया ॥ १'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' ॥ २'मयि सर्वमिदं प्रोतं' ३'मत्स्थानि सर्वभूतानि' ४'विसृजामि पुनः पुनः' ॥ ५'प्रभवः प्रळयः स्थानं निधानं बीजमव्ययं' ६'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ॥ इति मत्वा भजंते मां बुधा भावसमन्विताः' ॥ इत्यादिकं ॥ भूतानां स्थावरजङ्गमात्मकानां पृथक्भावः एकस्थः पृथक्स्थितानि परस्परं भिन्नानि भूतानि प्रळये विष्णोरुदरे तिष्ठन्ति ॥ सृष्टिकाले तत एव विस्तारः महदहंकारादिक्रमेण ब्रह्मरुद्रादिक्रमेण च जडाजडपदार्थविस्तारो भवति ॥ ७सृष्टानां च भूतानां पृथक् परमात्मनः सकाशात् परस्परं च भेदेन यो भावः सत्ता सः एकस्मिन् विष्णौ तिष्ठति तमाश्रित्य वर्तते ॥ इति यदा तारतम्यानुसारेण सृष्टिस्थित्यादिकं विष्णोः सकाशात् जगतो भवतीति पश्यति तदा ब्रह्म संपद्यते ॥ तमेव परमात्मानं विष्णुं प्राप्नोति ॥ मुक्तो भवति परगतिशाश्वतमुक्तिप्राप्तये अर्हो भवति ॥ ३१ ॥

अ॥ अर्जुनः॥ ८'समं सर्वेषु भूतेषु' ९'समंपश्यन् हि सर्वत्र' इति सर्वेषु भूतेषु आत्मनां समत्वमुक्तं॥ न त्वभेदः॥ कर्मतत्फलभेदेन दृश्यमानस्य भेदस्य प्रकृतिगतत्वोक्त्या १०'प्रकृत्यैव च कर्माणी'त्यनेन आत्मनामभेदोप्युक्त एवेति चेत् कर्मतत्फलभेदेन दृश्यमानवैषम्यस्य प्रकृतिगतत्वोक्त्या पूर्वोक्तं आत्मनां साम्यमेव दृढीकृतमनेनेति कुतो न स्यात् ॥ अतः अभेदः स्पष्टमात्मनां नोक्तः ॥ स एव हि वक्तव्यः ॥ अवश्यज्ञातव्यत्वात् ॥ उक्तं च त्वया ॥ ११'येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' ॥ इति १२'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि॥ ईक्षते' इति १३'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति' इति १४'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु' इति च ॥ किंच उक्तरीत्या आत्मनामभेदः उक्त एवास्तु ॥ तथापि भूतेषु समं सर्वत्र समं इत्याधाराधेयभावेनोक्त्या आत्मनां भूतेभ्यो भेदः परस्परमभेदः इति स्यात् सति चैवमद्वैतहानिः अतः सम्यग्विविच्य ब्रूहि ॥

---

१. ७. ६. २. ७. ७. ३. ९. ४. ४. ९. ८. ५. ९ १८. ६. १०. ८.
७. भूतपृथग्भावं एकस्थं इत्यनयोः उभयथा व्याख्या॥ ८. १३. २८. ९. १३. २९. १०. १३. ३०.
११. ४. ३५. १२. ६. २९. १३. ६. ३०. १४. १३. ३.

कृष्णः ॥ भूतानां आत्मनां पृथक्भावः एकस्थ ॥आत्मनां भेदभ्रमस्य अधिष्ठान-मेकं ब्रह्म ॥ ब्रह्मैव सर्वमिति ज्ञानाभावेन तदेकमपि अनेकजीवात्मना भाति ॥ वस्तुतः सर्वशरीरेषु आत्मा एक एव ॥ तथा पृथक्त्वेन भासमानं जडजातं एकस्मिन्[1]ब्रह्मण्येव कल्पितं तस्मिन्नेव स्थितं तस्मिन्नेव लीनं च॥ अतः कल्पितस्याधिष्ठानादनतिरेकेण अधिष्ठानभूतं ब्रह्मैव तत्॥ तथापि तस्मादधिष्ठानभूतात् [2]ब्रह्मण एकस्मादेव मायावशात् विस्तारः नानाभेदभिन्नानेकपदार्थावभासः इति शास्त्राद्यनुसारेण सर्वं ब्रह्म ब्रह्मैवाहम् इति यदा पश्यति तदा ब्रह्म संपद्यते भवति ॥ [3] 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतिः ॥ जडजातमखिलमात्मैव तत्र कल्पितत्वात् ॥ भेदेन प्रतीतिस्तु भ्रान्तिः भ्रमविषयभेदस्यानुवादः 'भूतेषु समं' 'सर्वत्र सम'मिति ॥ न तु वस्तुतो भेदोक्ति ॥ अत आत्मनां साम्यं भूतेभ्य परस्परंचाभेदएवेत्यवधारय ॥ यदा तदा इत्युक्त्या ज्ञानोत्पत्तिसमकालेव [4] 'मुक्ति'रित्यवेहि ॥ ३१ ॥

वि ॥ अर्जुनः ॥ वैषम्यप्रयोजकक्रियाभेदाभावेऽपि देवत्वमनुष्यत्वह्रस्वत्वदीर्घत्वकृशत्वस्थूलत्वादिभेदाद्वैषम्यमस्त्येव ॥ सति चैवं कथं साम्यदर्शनं यथावद्दर्शनं स्यात् ॥

कृष्णः॥ देवत्वमनुष्यत्वादिभेदोऽपि एकस्यां प्रकृतावेव वर्तते नात्मनि॥ कश्चित्पिता कश्चित्पुत्रः कश्चित्पौत्रः इत्येवं वैषम्यस्य विद्यमानत्वात् कथं साम्यं स्यादिति चेत् विस्तारः पिता पुत्रः पौत्रः प्रपौत्र इत्येवं विस्तारोऽपि तस्याः प्रकृतेरेव नात्मनः॥ अतः समा एवात्मानः इति यदा जानाति तदा ब्रह्म संपद्यते ब्रह्मसदृशो भवति॥ ब्रह्मेति द्वितीयांतं ब्रह्मसदृशं ज्ञानाकारं शुद्धात्मानं प्राप्नोति ॥ [5] 'परमं साम्यमुपैती'ति श्रुतिः ॥ [6] 'मम साधर्म्यमागताः' इति वक्ष्यते ॥ अतः साम्यदर्शनं सम्यग्दर्शनमेव अतो यदुक्तं तद्युक्तमेव ॥ ३१ ॥

द्वै. ॥ अर्जुनः ॥ [7] 'क्षेत्रज्ञं चापि मां विद्धि' [8] 'भूतेषु तिष्ठन्तं' [9] 'देहेऽस्मिन् पुरुषः परः' इत्युक्त्या परमात्मनः जीवशरीरे स्थितिः प्रतीयते ॥ सति चैवं

---

१. २ एकस्यां प्रकृतौ ॥ एकस्याः प्रकृतेः ॥ इति केचित् ॥ ३. बृ. ६. ४. ६. ॥ तै. आ. २ २. ४. जीवन्मुक्त्यवस्थाप्राप्तिः॥ ५. मुं ५ ३. ६. १४.२. ७. १३.३ ८. १३.२८. ९. १३ २३.

कर्तृत्वं भोक्तृत्वं च तस्य ॥ ततश्च चिताश्रमादिना सुखदुःखादिना च लेपः स्यात्॥ सामर्थ्यविशेषान्न समान... रित्युक्तमिति चेत् ॥ किं तत एव उत अन्यस्मादपि हेतोः ब्रूहि ॥

कृष्णः ॥ अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ॥

शरीरस्थोऽपि कौंतेय न करोति न लिप्यते ॥ ३२ ॥

अनादित्वादिति ॥ हे कौंतेय अर्जुन न विद्यते आदिः उत्पत्तिः उत्पत्तिकारणं वस्तु वा यस्य सः अनादिः तस्य भावः अनादित्वं तस्मात् , निर्गताः गुणाः सत्त्वादयः यस्मात् सः निर्गुणः तस्य भावः निर्गुणत्वं तस्मात् , न व्येति इत्यव्ययः न विद्यते व्ययः नाशः विकारो वा यस्य सः अव्ययः अयं परमश्चासौ आत्मा च परमात्मा ईश्वरः देहादिभ्यः परमः जीवात्मा वा शरीरे तिष्ठतीति शरीरस्थः शरीरस्थोऽपि न करोति न लिप्यते ॥ ३२ ॥

यत् त्रिगुणसंसर्गवत् तस्मादि यस्मादि तस्माज्जन्म अयं परमात्मा शरीरस्थोऽपि जीववत् न त्रिगुणसंसर्गवान् अतो न सादिः अतोऽव्ययः नाशरहितः ॥ एवं जीवविलक्षणत्वात् न करोति । न चिताश्रमादिना सुखदुःखादिना च लिप्यते ॥ उक्तहेत्वंतराच्च न जीववत्कर्तृत्वं सुखदुःखादिभोगश्च ॥ अतो युक्तमुक्तं ॥ कुतो मुख्यामुख्यौ क्षेत्रज्ञौ ईशजीवौ द्वौ परमात्मा एक एव अज्ञतया प्रतिशरीरं वर्तते इति कुतो न वाच्यमिति चेत् ॥ अयं परमात्मा शरीरस्थो जीवो न ॥ शरीरस्थशब्दार्थो योऽयं अपिशब्दाज्जडोऽपि न अनादित्वात् निर्गुणत्वात् अव्ययत्वात् कर्तृत्वात् लेपाभावाच्च ॥ जीवस्तु देहसंयोगरूपजन्मवान् सगुणः देहवियोगरूपमरणवान् अल्पात्त्वात् करोति लिप्यते च इति विरुद्धधर्मपञ्चकवत्त्वेन जीवाज्जडाच्च भेदः परमात्मनः ॥ अतः द्वौ क्षेत्रज्ञाविति युक्त॥ परमात्मनस्सर्वत्र साम्योक्तिरष्टाविंशे॥ तद्ज्ञानान्मोक्षोक्तिरेकोनत्रिंशे ॥ साम्यदृढीकरणं त्रिंशे॥ जगज्जन्मादिकर्तृत्वस्य तद्ज्ञानान्मोक्षस्य चोक्तिरेकत्रिंशे ॥ जीवात् जडाच्च भेदस्य शरीरस्थत्वेऽपि दोषाभावस्य चोक्तिर्द्वात्रिंशे ॥ इति विवेकः ॥ ३२ ॥

अ ॥ **अर्जुनः** ॥ १'आत्मानमकर्तार'मित्यात्मनः कर्तृत्वाभाव उक्तः वस्तुतः कर्तृत्वाभावेऽपि तस्य २'सर्वेषु भूतेषु तिष्ठन्त'मित्युक्तरीत्या सर्वशरीरस्थत्वेन शरीरादिगतकर्तृत्वादिना कर्तृत्वादिमत्वं स्यात् दोषलेशश्च स्यात् पवित्रस्यापि पञ्चगव्यादेः अपवित्रवस्तुसंसर्गात्तद्दोषेण दोषवत्त्वदर्शनात् ॥ एकापवित्रवस्तुसंसर्गादेव दुष्टं भवति किमुतानेकापवित्रवस्तुसंसर्गात् ॥ तथा एकशरीरसंबन्धादेवायमात्मा दुष्टो भवेत् किमुतानेकशरीरसंबन्धात् ॥ इति ॥

**कृष्णः** ॥ यत् सादि तस्य आदिशब्दितजन्मसत्त्वात् तदुत्तरभाविनः पञ्चापि विकाराः स्युः ॥ अयं तु अनादिः अतो जन्मनोऽभावेन तदुत्तरभाविनां विकाराणाम् अभावात् स्वरूपतोऽव्ययः ॥ यः सगुणः तस्य गुणतो व्ययात् विकारः स्यात् ॥ अयं तु गुणशब्दवाच्यैः सत्त्वादिभिः रूपादिभिः शब्दाकाशसुखदुःखादिभिः गुणकार्यभूताभिः प्राणादिभिः षोडशभिः कलाभिश्च रहितः निर्गुणकत्वात् अतो गुणतोऽप्यव्ययः। अतः शरीरे उपलभ्यमानोऽपि न करोति ॥ जले उपलभ्यमानोऽपि सूर्यः जले चलत्यपि यथा न चलति तद्वत् ॥ न च लिप्यते ॥ योऽहि करोति स लिप्यते ॥ कुर्वद्भिर्देहेंद्रियादिभिः संसर्गात् स्यादेवास्य कर्तृत्वादिकं ३'स्तेनो हिरण्यस्य सुरां पिबँश्च गुरोस्तल्पमावसन् ब्रह्महा च ॥ एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति' ॥ इति श्रुत्या पापिसंसर्गिणोऽपि पापित्वोक्तेः इति चेन्न पापिसंसर्गी पापी भवति ॥ न तु तदसंसर्गी तूष्णीं दूरस्थोऽपि ॥ स तु साक्षी भवति ॥ तद्वदयं साक्षी भवति ॥ न तु कर्तृत्वादिमान् ॥ कारणं भोगश्चोपलभ्यते तत्कथमिति चेत् ४'स्वभावस्तु प्रवर्तते' इत्युक्तमेव हि मया [illegible] ॥ अतउक्तं युक्तम् ॥ आत्मनः सर्वत्र साम्योक्तिरष्टाविंशे ॥ तज्ज्ञानफलोक्तिरेकोनत्रिंशे ॥ साम्यदृढीकरणं आत्मानात्मभेदोक्तिश्च त्रिंशे ॥ आत्मनां परस्परं जडाच्च भेदनिराकरणमेकत्रिंशे ॥

१. १३. ३०. २. १३. २८. ३. छां. ५. १०. ९. अत्र 'ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ॥ महापातकिनस्त्वेते तत्संयोगी च पञ्चमः' ॥ इति स्कन्दपुराणवचनं 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥ महान्ति पातकान्याहुः संसर्गश्चापि तैः सह' इति मनुवचनं 'ब्रह्महा मद्यपः स्तेनः तथैव गुरुतल्पगः ॥ एते महापातकिनो यश्च तैः सह संवसेत्' ॥ इति याज्ञवल्क्यवचनं च दर्शनीयम् ॥ ४. ५. १४.

शरीरस्थस्यापि कर्तृत्वाद्यभावोऽ[illegible]त्रिंशे इति विवेकः ॥ १'प्रकृत्ये' त्यत्र सजातीयात्मभेदनिराकरणात् २'यदा [illegible]पृथग्भावं' इत्यत्र विजातीयजडभेदनिराकरणात् ३'अनादित्वा'दित्यत्र स्वगतगुण[illegible]दभेदनिराकरणाच्च सजातीयविजातीयस्वगत भेदरहितं अखण्डैकरसं अद्वितीयं ब्रह्मेति सिद्धं ॥ स एवात्मा तयोरैक्यज्ञानान्मोक्ष इति तत्वं ॥ ३२ ॥

वि ॥ अर्जुनः ॥ कथं शरीरस्थस्यात्मनः शरीरधर्मभूतवृद्धिह्रासविपरिणामविनाशादिलेपाभावः ॥

कृष्णः ॥ ४'परमात्मेति चाप्युक्तो देहेऽस्मि'न्नित्यत्रोक्तरीत्या परमात्मशब्दितोऽयमात्मा शरीरस्थोऽपि न तद्वृद्धिह्रासादिविकारवान् ॥ ५'नत्वेवाहं' इत्याद्युक्तरीत्या अनादिः खलु सः ॥ उक्तं च मया ॥ ६'अनादि मत्परं ब्रह्म' इति ॥ यस्मादि तस्य खलु विकारास्संभवन्ति ॥ विकाराणां जननानन्तरभावित्वात् ॥ अतोऽव्ययः ॥ शरीरस्थोऽपि न करोति ॥ यस्सत्वादिगुणवान् सखलु करोति सात्विकादीनि कर्माणि ॥ अयं तु निर्गुणः अतोऽस्य स्वभावतः कर्तृत्वम् ॥ कर्तृत्वभोक्तृत्वादिकं तु शरीरसंबन्धप्रयुक्तं ॥ अतः शरीरस्थोऽपि शरीरधर्मैर्न लिप्यते च ॥ समत्वविषमत्वनियंतृत्वानियम्यत्वानित्यत्वानित्यत्वादिविरुद्धधर्मवत्वाद्देहात्मनोर्भेदानुसंधानेऽकिरणत्रिंशे ॥ स्वाकारानुदर्शनद्वारा संसारहेतुत्वमोक्षहेतुत्वाभ्यां विवेकानुसंधानेऽकिरकोनत्रिंशे ॥ साक्षात्क्रियाश्रयत्वतदभावाभ्यां विवेकानुसन्धानेऽक्तिंत्रिंशे ॥ परिणामित्वापरिणामित्वाभ्यांविवेकानुसंधानेऽकिरेकत्रिंशे ॥ उक्तस्यार्थस्य हेतूक्त्यास्थिरीकरणं द्वात्रिंशे ॥ इति विवेकः ॥ पार्थेदमवधारय ॥ ३२ ॥

अर्जुनः ॥ शरीरस्थोऽपि न लिप्यत इत्युक्तं ॥ तत्कथं । 'संसर्गजादोषगुणा भवन्ती'ति हि न्यायः ॥ ब्रूहि ॥

कृष्णः ॥ यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३३ ॥

---

१. १३. ३०. २ १३. ३१. ३. १३. ३२. ४. १३. २३. ५ २. १२ ६ १३. १३.

**यथेति** ॥ सूक्ष्मस्य भावः सौक्ष्म्यं तस्मात् सूक्ष्मत्वात् आकाशं सर्वं गतं सर्वगतं तादृशमपि यथा नोपलिप्यते तथा आत्मा परमात्मा जीवात्मा वा सर्वत्र देहे सर्वविधे देहे अवस्थितोऽपि नोपलिप्यते उपलेपः अन्यधर्मसंसर्गः ॥ ३३ ॥

आकाशस्य सर्वत्र व्याप्तत्वेऽपि न तैस्तैर्लेपः सूक्ष्मत्वात् ॥ न ह्याकाशः तत्तद्द्रव्य-गुणदोषैः सुगंधदुर्गंधादिभिः वर्षवातातपवह्निधूमरजःपंकादिभिश्च तत्तत्संगतोऽपि लिप्यते ॥ तथा १उत्तममध्यमाधमेषु सर्वेषु शरीरेषु सम्यक् स्थितोऽयं २परमात्मा आकाशादप्यतिसूक्ष्मतया न लिप्यते ॥ ३ 'सूक्ष्माच्च तत् सूक्ष्मतरं विभाती'ति श्रुतिः॥ 'संसर्गजा दोषगुणा भवन्ती'ति न्यायः स्थूलवस्तुविषयः ॥ संसर्गस्य संसर्गिणि संसर्ग्यन्तरस्वभावापादकत्वमनियतम् ॥ आकाशादौ व्यभिचारदर्शनात् ॥ अतो युक्तमुक्तम् ॥ ३३ ॥

**अर्जुनः** ॥ एकस्य अनेकक्षेत्रेषु क्षेत्रज्ञतया प्रकाशकत्वमुक्तम् ॥ तत्कथम् ॥

**कृष्णः** ॥ यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३४ ॥

**यथेति** ॥ हे भारत अर्जुन रविः सूर्यः एकोऽपि इमं कृत्स्नं सर्वं लोकं यथा प्रकाशयति तथा कृत्स्नं क्षेत्रं एकः क्षेत्रं अस्यास्तीति क्षेत्री क्षेत्रज्ञः प्रकाशयति ॥३४॥

यथा सूर्य एक एव ४ सन् कृत्स्नं लोकं प्रकाशयति ॥ तथा क्षेत्रस्थः ५ परमात्मा एक एव सन् सर्वाणि क्षेत्राणि प्रकाशयति ॥ पार्थ इदमवधेहि ॥ यथा सूर्यस्य प्रकाशकस्य न प्रकाश्यधर्मैः लेपः ॥ न च प्रकाश्यवस्तुभेदाद्भेदः ॥ तथा प्रकाश

१. सर्वत्र देहे इत्यन्वयः ॥ सर्वेत्यस्यार्थोऽयम् ॥ अद्वैतमते आत्मनोविभुत्वेन देहे सर्वत्र अवस्थितोऽपीति च वक्तुमौचितम्॥ २ अ. वि. जीवात्मा॥ ३. मुं. ५ ७ ४ ह्. सूर्यदृष्टान्तेन सूर्यइव परमात्मा एकएव न तु तस्य भेदः इत्युक्तं भवति । 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र' हि' इति (३. २. ११.) सूत्रं 'प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः, इति (१. ९. ४२. भागवतं ॥ अ ॥ सूर्य इव सर्वेषां शरीराणामात्मा एक एव न जीवभेदः॥ ५. अ. वि ॥ जीवात्मा ॥

कत्वात् क्षेत्रज्ञस्य न लेपः न च भेदः॥ १'सूर्यो यथा सर्वलोकस्य चक्षुः न लिप्यते चाक्षुषैर्बाह्यदोषैः॥ एकस्तथा सर्वभूतांतरात्मा न लिप्यते लोकदुःखेनबाह्यः' इति श्रुतिः ॥ ३४ ॥

वि.॥ अर्जुनः॥ अणुत्वादेकदेशे स्थितस्यात्मनः कथं आपादमस्तकं सर्वशरीरप्रकाशकत्वम् ॥

कृष्णः ॥ यथा रविरेकदेशे स्थितोऽपि स्वप्रभया कृत्स्नं जगत् प्रकाशयति ॥ तथा क्षेत्रिशब्दित आत्मा एकदेशे स्थितोऽपि स्वधर्मभूतज्ञानेन आपादमस्तकं सकलमपि शरीरं प्रकाशयति ॥ ३४ ॥

अर्जुनः॥ किमेतदध्यायोक्तप्रकृतिपुरुषादियाथात्म्यज्ञानस्य प्रयोजनं ॥ तद्ब्रूहि ॥

कृष्णः ॥ क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परं ॥ ३५ ॥

क्षेत्रेति ॥ क्षेत्रं च क्षेत्रज्ञश्च क्षेत्रक्षेत्रज्ञौ तयोः अन्तरं विशेषं भूतानां प्रकृतेः सकाशात् मोक्षो येन तत् अमानित्वादिसाधनं च ये एवं उक्तरीत्या ज्ञानमेव चक्षुः ज्ञान चक्षुः तेन विदुः जानन्ति ते परं ब्रह्म यांति प्राप्नुवन्ति ॥ ३५ ॥

ये उक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोः क्षेत्रक्षेत्रज्ञशब्दितयोः प्रकृतिपुरुषयोश्च अन्तरशब्दितं उक्तरूपं वैलक्षण्यं क्षेत्रज्ञस्यैव ज्ञेयत्वात् ज्ञेयं च ज्ञानार्थमेवोपदेशात् ज्ञानं च भूतानां प्रकृतेः सकाशात् मोक्षहेतुभूतं भूतेभ्यः प्रकृतेश्च २ मोक्षहेतुभूत भूतमयी या प्रकृतिस्ततो मोक्षहेतुभूतं अमानित्वादिसाधनजातं च शास्त्राचार्योपदेशजनितज्ञानरूपचक्षुषा यथावज्जानन्ति ॥ ते ३ परं ब्रह्म ४ प्राप्नुवन्ति ॥ एतदध्यायोक्तप्रकृतिपुरुषादिज्ञानस्य अमानित्वादिसाधनसामग्रीसंपादनद्वारा मोक्षप्राप्तिः फलं॥ अतो महाफलोऽयमध्यायः॥ अतः इममध्यायमसकृदनुसंधेहि ॥ स्यात्तेन ते मङ्गळम् ॥ ३५ ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणशर्मविरचिते क्षेत्रक्षेत्रज्ञविभागयो
गाध्यायार्थप्रदर्शकः त्रयोदशः प्रतिबिंबः ॥ १३ ॥

---

१ का.५. ११. २. अ॥ भूतानां प्रकृतेश्चविद्या मा ॥ तस्या मोक्षं अभावापादनप्रकारं भूतं कार्यभूतं जगत् प्रकृतिः कारणभूता तयोरभावगमनं ॥ ३. वि ॥ प्रकृतिबन्धरहितं शुद्धमात्मानं॥ ४. ये अ विदुः न जानंति ते परं अ यांति न प्राप्नुवन्ति ॥ ये अ विदुः ते अ परं इति छेदः ॥ अ इति न इत्यर्थकं ॥ इति च वार्थं ॥

सम्बन्धः ॥ १'प्रकृतिं पुरुषं चैव विद्ध्यनादी' इत्युक्त्वा २'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्' ३'पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्' ४'कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु' ५'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह' इत्यभिहिते ॥ ६'यावत्संजायते किंचित् सत्त्वं स्थावरजङ्गमं॥ क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ'॥ इत्यप्युक्तं भगवता ॥ प्रकृतिः कीदृशी तस्याः गुणाः के कति कीदृशाः के वा गुणानां गुणाः बन्धप्रकारः कः मोक्षोपायश्च कः कोऽसौ क्षेत्रक्षेत्रज्ञसंयोगः येन स्थावरजङ्गमात्मकं सर्वं जगज्जायते सर्वमेतद्विविच्य ज्ञातव्यमिति जाताभिलाषस्य पार्थस्य विदित्वा तदभिप्रायं स करुणावरुणालयो भगवान् अपृष्टएव तेन 'भूयोऽपि वक्ष्यामि' त्याह ॥

## श्रीभगवानुवाच ॥

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयस्सर्वे परां सिद्धिमितोगताः ॥ १ ॥

परमिति ॥ यत् ज्ञात्वा सर्वे मुनयः मननशीलाः संतः इतः देहबंधात् परां उत्कृष्टां सिद्धिं गताः तत् ज्ञानानां मध्ये उत्तमं परं ज्ञानं भूयः प्रवक्ष्यामि ॥ १ ॥

यत् ज्ञातव्यानां मध्ये उत्तमं परं उक्तादन्यत् तत् ज्ञायत इति ज्ञानं ज्ञातव्यं ते भूयः पुनः अतिविस्तरेण वा सम्यक् वक्ष्यामि ॥ ज्ञानतत्फलसाधनयज्ञदानतपःकर्मादिविषयाणां अनेकेषां ज्ञानानां मध्ये यत् ज्ञानं परवस्तुविषयकं अतः श्रेष्ठं उत्तममोक्षफलकं अत उत्तमं तत् ज्ञानं ते पुनः प्रवक्ष्यामि ॥ परं भूयः प्रवक्ष्यामि तच्च ज्ञानानां मध्ये उत्तममिति वाक्यभेदेन उत्तमत्वं विधीयते ॥ तच्च अवश्यज्ञातव्यताबोधनाय॥ ज्ञानसाधनानां मध्ये यत् परं उत्कृष्टविषयकं उत्तमं उत्तमफलकं तत् ज्ञायतेऽनेनेति ज्ञानं ज्ञानसाधनं ते प्रवक्ष्यामि ॥ ज्ञायतेऽनेनेति ज्ञानं उपदेशः ॥ ज्ञानानां मध्ये उत्तमं

१. १३. २०. २. १३. २०. ३. १३. २२. ४. १३. २२. ५. १३. २४. ६. १३. २७.

परं परमार्थसाधकं ज्ञानं उपद रूपं वचनं भूयः प्रवक्ष्यामि॥ ज्ञानानां अमानित्वादीनां यज्ञादीनां च ज्ञानसाधनानां म उत्तमं उत्तममोक्षफलप्रदं अतएव परं उत्कृष्टं ज्ञायतेऽनेनेति ज्ञानं ज्ञानसाधनं ज्ञान ं च परं ब्रह्म ते भूयः प्रवक्ष्यामि ॥ अमानित्वादिज्ञानसाधनेषु १'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी' इति भगवद्भक्तेरुक्तत्वात् भक्त्या प्रसन्नो भगवानेव ब्रह्मज्ञानसाधनं ॥ उक्तं च मया । २'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति ॥ ३'भवन्ति भावा भूतानां मत्त एव' इति च ४'मत्तः स्मृतिर्ज्ञानं' इति वक्ष्यते॥ इति वा ॥ इदं च ज्ञातव्यं ज्ञात्वा ज्ञानं चेदं प्राप्य ज्ञानसाधनं चेदं अनुष्ठाय ज्ञानरूपं ब्रह्म च साक्षात्कृत्य सर्वे मननशीलास्सन्तः इतः अस्मात् देहबन्धात् अस्मात् संसारमण्डलात् अस्मात् गुणत्रयात् उत्कृष्टां मोक्षरूपां सिद्धिं प्राप्ताः ॥ तत् ज्ञानं ते वक्ष्यामि ॥ प्रतिबन्धकज्ञानं तन्निवृत्तिद्वारा कार्यसिद्धेरन्तरङ्गसाधनं ॥ प्रतिबन्धकापथ्यज्ञानं अपथ्याचरणनिवृत्तिद्वारा आरोग्यसिद्धेरन्तरंगसाधनमनुभूयते ॥ तद्वत् ज्ञानतत्फलप्रतिबन्धकप्रकृतितद्गुणतत्कार्यविषयकज्ञानं तन्निवृत्तिद्वारा मोक्षसिद्धेरन्तरङ्गसाधनं भवति॥ अतो ज्ञानमिदं ज्ञानानामुत्तमं ॥ अतस्ते तत् प्रवक्ष्यामि ॥ शृणु तदादरेण ॥ १ ॥

कृष्णः ॥ इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२ ॥

इदमिति ॥ इदं वक्ष्यमाणं ज्ञानं उपाश्रित्य संपाद्य मम समानः धर्मः यस्य सः सधर्मा सधर्मणः भावः साधर्म्यं मोक्षं आगताः ये ते सर्गे सृष्टावपि नोपजायन्ते प्रळये न व्यथन्ति च न नश्यन्ति च ॥ २ ॥

वक्ष्यमाणज्ञानस्य मोक्षप्राप्तिः फलमित्युक्तं मोक्षे किं भवति इति चेत् इदं वक्ष्यमाणं ज्ञातव्यं ज्ञात्वा ज्ञानं संपाद्य ज्ञानसाधनं अनुष्ठाय ब्रह्मचापरोक्षीकृत्य मम सारूप्यं प्राप्ताः । मत्स्वरूपतां प्राप्ताः तेन च सर्वात्मत्वसर्वनियन्तृत्वसर्वभावाधिष्ठातृत्वादिमद्धर्मवत्त्वं प्राप्ताः । मत्साधर्म्यं प्राप्ताः । भवन्ति ॥ तेन च किं भवति इति चेत् ते महासृष्टावपि न जायन्ते महाप्रलयेऽपि न नश्यन्ति न व्यथामनुभवन्ति च कदाऽपि न तेषां उत्पत्तिविनाशौ ॥ तादृशं वक्ष्यमाणं ज्ञानं शृणु ॥ २ ॥

१. १३. ११. २. १०. १०. ३. १०. ५ ४. १५. १५.

**संजयः**॥ [१]वक्ष्यमाणं ज्ञात्वा इतः परां [२]सिद्धिं गताः इति वक्ष्यमाणं प्रशस्य तत्रादौ तावत् सूचीकटाहन्यायेन [३]"यावत्संजायते किंचि" दित्येतद्विवरीतुमाह ॥

**कृष्णः** ॥ मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहं ॥
संभवस्सर्वभूतानां ततो भवति भारत ॥ ३ ॥
सर्वयोनिषु कौंतेय मूर्तयस्संभवंति याः ॥
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

**ममेति** ॥ हे भारत अर्जुन महत् ब्रह्म प्रकृतिः मम योनिः भार्या ॥ तस्मिन् अहं गर्भं दधामि ॥ ततः तस्मात् सर्वाणि च तानि भूतानि च सर्वभूतानि तेषां संभवः उत्पत्तिः भवति ॥ ३ ॥

**सर्वेति** ॥ हे कौंतेय अर्जुन सर्वाश्च ताः योनयश्च सर्वयोनयः तासु याः मूर्तयः यानि शरीराणि संभवंति उत्पद्यंते तासां मूर्तीनां महत् ब्रह्म योनिः कारणं बीजं गर्भं प्रददातीति बीजप्रदः अहं पिता ॥ ४ ॥

देशकालानवच्छिन्नत्वात् स्वकार्येभ्योमहत्वाच्च महत् ॥ स्वकार्याणां पृथिव्यादिविकाराद्यरसादिना बृह्मणशब्दितवृद्धिहेतुत्वात् ब्रह्म यत् [४]'भूमिरापोऽनल' इत्युक्तजडप्रकृतिरूपं वस्तु तत् मम गर्भाधानस्थानतया भार्यास्थानीयं तस्मिन् जडप्रकृतिरूपवस्तुनि चेतनरूपं गर्भं निक्षिपामि॥ क्षेत्रक्षेत्रज्ञसंयोगो जगत्कारणत्वेनोक्तो न स्वतन्त्रः॥ किंतु मदधीनः ॥ तस्मात् अचेतनप्रकृतौ चेतनसंयोजनरूपात् गर्भाधानात् ब्रह्मादिस्तंबपर्यंतानां सर्वप्राणिनां सर्वशरीराणां च उत्पत्तिर्जायते ॥ पार्थेदमवधारय ॥ न केवलमादिसृष्टावेवैवं॥ किंतु सदा॥ देवगन्धर्वयक्षराक्षसमनुष्यपशुमृगपक्षिसरीसृपादियोनिषु यानि शरीराणि जरायुजांडजस्वेदजोद्भिज्जरूपाणि जायन्ते तेषां सर्वेषामपि शरीराणां जडप्रकृतिः योनिः कारणं॥ बीजशब्दितगर्भप्रदः पिता अहं॥ सर्वास्वपियोनिषु प्रकृतिं शरीरतया परिणमय्य तत्र चेतनं जीवं संयोजयामि ॥ यथा महेंद्रानुगृहीतायाः

---

१. छे. ल्यब्लोपनिमित्ता पञ्चमी ॥ इदं देहादिकं परित्यज्येत्यर्थः ॥ २. वि. परिशुद्धात्मस्वरूपप्राप्तिरूपां ॥ ३. १३. २७. ४. ७. ४.

मम शुद्धचिन्मात्रस्य योनिः प्रवेशस्थानं महद्ब्रह्मेत्येकं पदं ॥ महतः महत्तत्त्वस्य प्रथमविकारस्य ब्रह्म बृहकं वर्धकं अव्यक्तं तस्मिन् अहं चिदात्मा गर्भं स्वप्रतिबिंबरूपं दधामि अर्पयामि ॥ ततः मत्प्रतिबिंबगर्भिता या माया ततः सर्वभूतानां संभवो भवति ॥ तासां मूर्तीनां ब्रह्ममहत् इत्येकं पदं ॥ महतो ब्रह्म ब्रह्ममहत् राजदंतादिवत् महच्छब्दस्य परनिपातः प्रकृतिः माया योनिः अहं पिता ॥ इति च ॥

तदेवं १ 'यावत्संजायते किंचि'दिति श्लोकोक्तं विवृतम् ॥ ३ ॥ ४ ॥

संजयः ॥ एवं 'यावत्संजायते किंचित्' इत्युक्तं स्पष्टीकृत्य २ 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्यादिकं स्पष्टयितुमारभते भगवान् ॥

कृष्णः ॥ सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

सत्त्वमिति ॥ हे महाबाहो अस्य प्रकृतेः सकाशात् संभवः उत्पत्तिः येषां ते प्रकृतिसंभवाः सत्त्वं रजस्तम इति गुणाः देहे स्थितं न व्येतीत्यव्ययः न विद्यते व्ययः विकारः यस्येति वा अव्ययः तं देहिनं अव्ययमपि देहिनं जीवं निबध्नन्ति ॥ ५ ॥

हे पार्थ शृणु ॥ सत्त्वं रजः तमः इति त्रयो गुणाः प्रकृतिगुणाः प्रकृतेरुत्पद्यन्ते ॥ कार्यकारणयोरभेदात् प्रकृतिस्वरूपा एव ॥ गुणानां साम्यावस्था प्रकृतिः वैषम्येण परिणामात् ते प्रकृतिसंभवा गुणा उच्यन्ते ॥ ते गुणाः गुणाइव रज्जवश्च ॥ ते गुणाः देहकरणाकारे स्थितं देहिनं जीवं स्वतोऽव्ययमविकारमपि निबध्नन्ति ॥ स्वकार्यैः सुखदुःखमोहादिभिः विकारयन्ति । स्वतोऽव्ययं जीवं देहिनं कृत्वा तत्र देहे निबध्नन्ति इति वा ॥ देहतादात्म्येन तु अहंममाभिमानाभिनिवेशनं कृत्वा सुखदुःखमोहजन्ममरणादिभिः संयोज्य नाशयन्ति ॥ गुणबन्धोऽयं न महाबाहुनापि त्वया दूरीकर्तुं शक्यः ॥ महाबाहुना त्वया आक्रान्तो यथा त्वद्बन्धं दूरीकर्तुं न शक्नोति ॥ तथा गुणैरेभिराक्रान्तो न तद्बन्धं दूरीकर्तुं शक्नोति ॥ प्रकृतिः स्वसंसृष्टं जीवं स्वगुणैः

१. १३. २६. २. १३. २१. ३. चि ॥ न गुणाः प्रकृत्याम[illegible] अपि तु तदसाधारणधर्मभूताः [illegible] ॥

सत्वादिभिः बध्वा स्वायत्तीकृत्य संसारयति ॥ यथा योषा स्वसंसृष्टं पुमांसं स्वगुणैः सत्वादिभिः स्वायत्तीकृत्य संसारयति तद्वत् ॥ यथा कश्चित् कश्चित् स्वतन्त्रं अपराधवशात् स्ववशतामापादितं पुमांसं स्वहस्तस्थितैः पाशैः बध्वा स्ववशं नीत्वा अपराधानुगुणं खेदयति तद्वत् प्रकृतिः कर्मवशात् स्वसंसर्गमापादितं जीवं स्वगुणैस्त्रिभिः बध्वा स्ववशं नीत्वा कर्मानुगुणं १'कारणं गुणसङ्गोऽस्य' त्युक्तरीत्या नानायोनिषु जननद्वारा खेदयति ॥ अतः तन्मोक्षार्थं महान् यत्नः कार्यः ॥

अ ॥ नित्यशुद्धस्यात्मनो बन्धः कथमिति चेत् इवशब्दोऽध्याहार्यः ॥ निबध्नन्तीव न वस्तुतो बन्धः ॥ अनात्मनि देहे आत्मतादात्म्याध्यासः आत्मनि अनात्मभूतदेहतादात्म्याध्यासश्च वर्तते ॥ ताभ्यामन्योन्यास्मिन् अन्योन्यधर्माध्यासः ॥ स एव बन्धः सचाध्यासिक एव ॥ न सत्यः ॥ अतः निबध्नन्तीव ॥ न वस्तुतो बध्नन्ति ॥ वस्तुतो बन्धाभावश्च २'न करोति न लिप्यते' इत्यादिभिरसकृदुक्तः ॥

द्वै ॥ गुणास्त्रयः प्रकृतिसंभवाः चित्प्रकृतितः सृष्टिकाले विभज्यमानाः तदभिमानिन्यः श्रीभूदुर्गाख्यास्तिस्रो देव्यः जीवजातं निबध्नन्ति ॥ तत्र श्रीर्देवबन्धिका सत्वाभिमानिनी ॥ भूर्मनुष्यबन्धिका रजोऽभिमानिनी ॥ दुर्गा दैत्यबन्धिका तमोऽभिमानिनी ॥ इति विवेकः ॥ सर्वेषां गुणानां सर्वासां देवीनां सर्वजीवबन्धकत्वेऽपि क्षीरनीरन्यायेन प्राधान्यात् तत्तद्बन्धकत्वव्यपदेशः ॥ ५ ॥

**अर्जुनः** ॥ प्रकृतिः स्वगुणैः सत्वादिभिस्त्रिभिः पुरुषं निबध्नातीत्युक्तम् ॥ तत्र केन गुणेन कथं बध्नाति ॥ ब्रूहि ॥

**कृष्णः** ॥ तत्र सत्वं निर्मलत्वात् प्रकाशकमनामयम् ॥
सुखसङ्गेन बध्नाति ज्ञानसंगेन चानघ ॥ ६ ॥

---

१. १३ २२ २. १३ ३१.

तत्रेति ॥ न विद्यते अघं पापं यस्य सः अनघः हे अनघ निष्पाप अर्जुन तत्र तेषु त्रिषु गुणेषु मध्ये सत्त्वं सत्वगुणः निर्गतं मलं दोषः यस्मात्तत् निर्मलं तस्य भावः निर्मलत्वं तस्मात् प्रकाशयतीति प्रकाशकं ज्ञानजनकं ॥ न विद्यते आमयः येन यस्मादिति वा न विद्यते आमयः तद्रूपकार्यं यस्य इति वा अनामयं ॥ आमयशब्दितस्य रोगस्य दुःखस्य च विरोधि ॥ आरोग्यजनकं सुखजनकं च ॥ तत् सुखेन सखे वा सङ्गः तेन ज्ञानेन ज्ञाने वा सङ्गः तेन च देहिनं बध्नाति ॥ ६ ॥

तेषु त्रिषु गुणेषु सत्त्वं निर्मलं स्फटिकमणिवत् स्वच्छं॥ अतः प्रकाशकं ज्ञानजनकं अनामयं आमयो दुःखं तद्विरोधि दुःखनाशकं सुखजनकं च ॥ आमयो रोगः तद्विरोधि आरोग्यहेतुभूतं तत्, जीवात्मानं सुखेन ज्ञानेन च यः संबन्धः तेन बध्नाति ॥ सुखं ज्ञानं चोत्पाद्य अहं सुखी अहं ज्ञानी इत्यभिमानोत्पादनेन बध्नाति ॥ [1]सुखे ज्ञाने च अन्तःकरणधर्मे सति अहं सुखी अहं ज्ञानी इति अन्तःकरणधर्मयोस्तयोर्य आत्मन्यध्यासः स सङ्गः तेन बध्नाति॥ असुखिनं सुखिनमिव करोतीत्यादिरर्थः॥ [2]सुखे ज्ञाने च यः सङ्गः कामः तेन बध्नाति ॥ ज्ञानसुखयोर्विषये संगशब्दिते कामे जाते तत्साधनेषु लौकिकवैदिकेषु प्रवर्तते ॥ ततश्च तत्तत्फलानुभवसाधनभूतासु योनिषु जायते इति सत्वं सुखज्ञानसंगद्वारेण पुरुषं बध्नाति ॥ स्यान्नाम रजोगुणतमोगुणयोर्बंधकत्वं रञ्जकत्वात् मोहकत्वाच्च ॥ कथं निर्मलत्वात्प्रकाशकस्य अनामयस्य प्रकाशकत्वेन ज्ञानजनकस्य अनामयत्वेन सुखजनकस्य सत्वस्य बन्धकत्वमुच्यते बध्नातीति॥ कथं निबध्नन्तीति गुणत्रयस्य सामान्यतो बन्धकत्वोक्तिश्च इति चेत् सत्वगुणः स्वकार्यं सुखं ज्ञानं च उत्पाद्य तेन पुंसः अहं सुखी अहं ज्ञानी मम सुखसाधनमिदं इत्यादिरीत्या अहंममाभिनिवेशोत्पादनद्वारा बन्धको भवति॥ सत्वगुणकार्यभूतया दयया परमसात्विक आदिभरतः कस्मिंश्चित् कुरंगशावके संसक्तमनाः सदा तद्भावभावितः अन्ते च तं कलेवरं त्यक्त्वा [3]'यंयंवाऽपि' इति न्यायेन कुरङ्गतामाप॥ [4]'प्रसिद्धमेतत्॥ सत्वगुणेन हि स तादृशीं कष्टां दशामाप ॥ अतः सत्वगुणस्यापि बन्धकत्वं युक्तम्॥ हे पार्थ त्वं निष्पापोऽसि अतः प्रकृतिः स्वगुणैस्त्वां बध्वा न विनाशयेत्॥ मा भैषीः ॥ ६ ॥

---

१ अ ॥ २ श्रि ॥ ३ ८. ६. ४ भाग. ५. स्कं ८. अ ॥

कृष्णः ॥ रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवं ।
तन्निबध्नाति कौंतेय कर्मसंगेन देहिनं ॥

**रजइति** ॥ हे कौन्तेय अर्जुन रजः रजोगुणं रागः आत्मा स्वरूपं यस्य तत् रागात्मकं तृष्णा च सङ्गश्च तृष्णासङ्गौ समुद्भवतः अस्मादिति समुद्भवं तृष्णासङ्गयोः समुद्भवं इति वा तृष्णासङ्गयोः समुद्भवो येन यस्माद्वा इति वा तृष्णासङ्गसमुद्भवं च विद्धि ॥ तत् देहिनं कर्मभिः कर्मसु वा सङ्गः कर्मसङ्गः तेन निबध्नाति ॥ ७ ॥

तेषु त्रिषु गुणेषु रजोगुणः [१]रागात्मकः रागः कामः तत्स्वरूपः तं तादृशं जानीहि॥ तृष्णाशब्दितस्य अप्राप्ताभिलाषस्य प्राप्यमाणेष्वप्यर्थेषु अलंबुद्धिराहित्यस्य वा सङ्गशब्दितस्य आसङ्गशब्दितस्य वा प्राप्तार्थविषयकप्रीतिविशेषस्य च कारणभूतं च विद्धि ॥ तद्रजः तृष्णासङ्गजननद्वारा कर्मसु सङ्गशब्दितामासक्तिं जनयति ॥ तृष्णासङ्गाभ्यां हि कर्मस्वासक्तिर्भवति ॥ कर्मस्वासक्त्या क्रियाः करोति॥ ताभिश्च पुण्यपापरूपाभिः तत्तत्फलानुभवसाधनभूतासु योनिषु जायते॥ अतः तत् रजः तेन कर्मसङ्गेन देहिनं बध्नाति॥

अ ॥ कर्मसु प्रकृत्या क्रियमाणेषु अहंकरोमीत्यध्यासः सङ्गः तेन बध्नाति ॥ वस्तुतोऽकर्तारं कर्तारमिव करोति ॥ अप्राप्तं पुत्रभाग्यमभिलषितवतीं प्राप्तान् स्वदादीन् पुत्रान् रक्षन्तीं च कुन्तीं दृष्टान्तीकुरु ॥ ७ ॥

वि ॥ तत्र रजः रागात्मकं रागः योषित्पुरुषयोः अन्योन्यस्पृहा तस्य कारणभूतं कार्यकारणयोरभेदोपचारात् रागात्मकत्वोक्तिः ॥ रज्यते अनेनेति व्युत्पत्त्या रागशब्देन रागहेतुरुच्यते तदात्मकमिति यथाश्रुतं वा॥ तृष्णाशब्दितशब्दादिविषयस्पृहायाः सङ्गशब्दितपुत्रमित्रादिविषयस्पृहायाश्च कारणभूतं च विद्धि ॥ तत् कर्मसु आसक्तिमुत्पाद्य देहिनं बध्नाति ॥ ज्ञानसुखयोस्सङ्गे तदर्थक्रियाकरणप्रवृत्तिदर्शनात् सत्त्वेनापि कर्मसङ्गो जायते इति चेत् क्षीरनीरन्यायेन प्राधान्याद्व्यपदेशः ॥ सत्त्वे ज्ञानसुखयोः प्राधान्यं ॥ रजसि तु तत्तद्वस्तुस्वरूपस्य क्रियास्वरूपस्य च प्राधान्यं ॥ सुखमल्पमनल्पं वा भवतु मावा भूदिति विवेकः ॥ राजदाराभिलापदुष्पुत्रसंरक्षणव्यर्थक्रियादिषु व्यक्तमिदम् ॥ पार्थ इदं सम्यगवधारय ॥ ७ ॥

१. अ. रज्यतेऽनेनेति रागः इति व्युत्पत्त्या रागशब्दितसंगेरिकादिधातुवत् स्वात्मानं रञ्जयन् पूर्वं रागान्तरापादकः इति च ॥

कृष्णः ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनां ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

तमस्त्विति ॥ हे भारत अर्जुन तमस्तु विशेषसूचकस्तुशब्दः अज्ञानं जनयतीत्यज्ञानजं ॥ अज्ञानं प्रकृतिः माया तस्माज्जायत इति वा ॥ ज्ञानं यथावद् ज्ञानं न ज्ञानं अज्ञानं विपरीतज्ञानं तस्माज्जायत इति वा ॥ सर्वे च ते देहिनश्च सर्वदेहिनः तेषां मोहयतीति मोहनं मुह्यत्यनेनेति वा मोहनं तादृशं विद्धि ॥ तत् प्रमादः अनवधानं आलस्यं अनुद्यमः प्रमादश्च आलस्यं च निद्रा च प्रमादालस्यनिद्राः ताभिः निबध्नाति ॥ ८ ॥

तमस्तु [1]अत्यन्तपरिहरणीयं तत् अज्ञानं जनयति॥ अज्ञानं प्रकृतिर्माया [2]तस्माज्जातम्। ज्ञानं यथावज्ज्ञानं तद्विपरीतं अज्ञानं विपर्ययज्ञानं [3]तस्माज्जातम् सर्वप्राणिनां मोहकारित्वाद्विपरीतज्ञानजनकं तत् प्रमादशब्दितं अनवधानं तन्मूलकाकार्यकरणप्रवृत्तिं आलस्यशब्दितमनुद्यमं निद्राशब्दितं इन्द्रियाणामुपरमं च उत्पाद्य देहिनं निबध्नाति ॥ महाकुलप्रसूतं त्वां न तद्बाधेत महाकुलीनत्वात् क्षात्रियवीरत्वाच्च न तव प्रमादादिसंभवः बाह्येन्द्रियाणामुपरमः स्वप्नः ॥ मनसोऽप्युपरमः सुषुप्तिः ॥ द्वावपीमौ निद्रायाः प्रभेदौ ॥ ८ ॥

सञ्जयः ॥ सत्त्वादीनां बन्धनसाधनभूतेषु सुखसङ्गादिषु प्रधानान्याह ॥

कृष्णः ॥ सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥

१. तुशब्दार्थोऽयं २. अ. 'त्रयाणां गुणानां प्रकृतिजत्वाविशेषेऽपि तमसः प्रकृतिजत्वोक्तिः तद्विपरीतस्वभावानापत्त्या तद्योग्यताप्रकाशकत्वेन ॥ अनेकेषां देवदत्तपुत्रत्वेऽपि तद्विपरीतस्वभावानापत्त्या तद्योग्यताप्रकाशकस्य पुत्रस्य तत्पुत्रत्वोक्तिवत् ॥ वि ॥ विपरीतज्ञानकार्यं तत्कारणं च 'रजोगुणसमुद्भव' (३. ३७) इति वत् ।

सत्त्वमिति ॥ हे भारत सत्वं सत्वगुणः सुखे संजयति प्रवर्तयति ॥ संश्लेषयति वा ॥ रजः रजोगुणः कर्मणि सञ्जयति ॥ तमस्तु ज्ञानं आवृत्य आच्छाद्य प्रमादे आलस्यादौ च संजयति ॥९॥

सत्वं देहिनं सुखे प्रवर्तयति संश्लेषयति वा ॥ रजस्तु कर्माणि संजयति तमस्तु सत्वगुणकार्यं विवेकज्ञानमाच्छाद्य कर्तव्यकर्मविषये अनवधानपूर्वकं कर्तव्यविपरीतकर्मकरणे अपिशब्दपर्यायात् उतशब्दात् आलस्ये निद्रायां च सञ्जयति॥पार्थ त्वामिमानि प्रधानानि विद्धि॥ सत्वं सुखसङ्गप्रधानम् ॥ ज्ञानसङ्गस्तु सुखार्थः॥ अतः साधुगुणयुक्तत्वात्सत्वशब्दवाच्यम् ॥ रजः कर्मसङ्गप्रधानम् ॥ रागतृष्णासङ्गादयः कर्मसङ्गहेतुत्वात् कर्मणि विश्राम्यन्ति ॥ अतः रागजनकत्वेन रञ्जकत्वात् रजश्शब्दवाच्यम् ॥ तमः कर्तव्यविपरीतप्रवृत्तिसङ्गप्रधानं आलस्यनिद्रयोः कर्तव्याकरणज्ञातार्थविस्मरणहेतुत्वेन कर्तव्यविपरीतकर्मकरणप्रवृत्तौ पर्यवसानं ॥ अतः तमुधात्वर्थग्लान्युपलक्षितनानाक्लेशहेतुत्वात्तमश्शब्दवाच्यं ॥ यथा हि लोके स्त्रियः स्वसंबन्धं प्रापितं पुरुषं कटाक्षभ्रूभंगमंदहासविलासपरिहासकेलिपरिरम्भादिभिः सुखं प्रदर्श्य तेन तं स्ववशं नीत्वा रागतृष्णासंगवंतमाधाय नानाकर्मसु प्रवर्त्य स्वासक्तया तं वंचितविवेकमाधाय नानाकर्मकरणजनितश्रमजनितनिद्रालस्याभ्यां विवशीकृत्य कर्तव्यविपरीतप्रवृत्तिसंगिनं कृत्वा निबध्नाति ॥ तथेयं प्रकृतिः स्वसंसृष्टमात्मानं सत्वगुणेन सुखयंती रजोगुणेन कर्म कारयंती तमोगुणेन विवेकज्ञानमावृत्य विपरीतज्ञानमुत्पाद्य निद्रालस्याभ्यां विवशीकृत्य कर्तव्यविपरीतप्रवृत्तिसंगेन निबध्नाति ॥ अतः स्त्रीसंगइव प्रकृतिसंसर्गोऽपि ॥ स यथा गुणहेतुः स्यात् यथा च दोषहेतुर्न स्यात् तथा प्रयतितव्यं ॥ उक्तं च मया ॥ १ 'पुरुषः प्रकृतिस्थोहि भुंक्ते प्रकृतिजान् गुणा'नित्यत्र ॥ न केवलमज्ञमेव देहिनं प्रकृतिर्निबध्नाति ॥ किंतु परोक्षतो ब्रह्म जानंतं ज्ञानिनमपि॥ तत्र सत्वेन ऐहिकसुखे स्वर्गादिसुखे च संगमुत्पाद्य ब्रह्मापरोक्षज्ञानतत्सुखानुभूतिभ्यां च्यावयित्वा बहिर्मुखं करोति ॥ रजोगुणेन कर्मसंगमुत्पाद्य स्वस्वरूपानुभूतेः प्रच्याव्य कर्मठं करोति ॥ तमोगुणेन ज्ञानमावृत्य कर्तव्यविपरीतप्रवृत्तिमुत्पाद्य निद्रालस्यपरवशं कृत्वा ब्रह्मनिष्ठाविमुखं करोति ॥ अतः ब्रह्मापरोक्षसाक्षात्कारसुखमनुबुभूषुणा यत्नतः प्रकृतितद्गुणतत्कार्यातिक्रमणे प्रवर्तितव्यं ॥ उक्तं च मया ॥ २ 'आवृतं ज्ञानमेतेन

---

१. १३. २२. २. ३. ३९.

ज्ञानिनो नित्यवैरिणा ' ॥ १ 'एतैर्विमोहयत्येषः ज्ञानमावृत्य देहिनं'॥ २ 'पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम्' ॥ ३ 'शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ॥ कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः '॥ इत्यादि ॥ ९ ॥

**अर्जुनः** ॥ सर्वदा प्रकृतिबन्धो वर्तते ॥ वर्तन्ते च तस्यां सर्वदा त्रयो गुणाः न ते स्वस्वकार्याण्यनारभ्य तूष्णीं तिष्ठेयुः ॥ वेणीकृतकेशभागानामिव त्रयाणामपि गुणानां साम्येन प्रवृत्तौ समग्रो स्वस्वकार्यारम्भः स्यात् ॥ न प्रत्येकं कार्यारम्भः संभवेत् ॥ गुणत्रयकार्याणि तु परस्परं विरुद्धानि ॥ प्रकाशाप्रकाशयोः प्रवृत्यप्रवृत्योः ज्ञानाज्ञानयोः सुखदुःखयोः प्रवृत्त्यालस्ययोः प्रवृत्तिनिद्रयोश्च परस्परविरोधात् ॥ अतस्तेन तेन गुणेन तत्तत्कार्याणि कथं क्रियेरन् ब्रूहि ॥

**कृष्णः** ॥ रजस्तमश्चाभिभूय सत्वं भवति भारत ॥
रजस्सत्वं तमश्चैव तमस्सत्वं रजस्तथा ॥ १० ॥

**रजइति** ॥ हे भारत अर्जुन रजः रजोगुणं तमश्च तमोगुणं च अभिभूय परिभूय स्वस्वकार्यजननाक्षमं कृत्वा सत्वं सत्वगुणः भवति उद्रिक्तं भवति॥ सत्वं तमश्च अभिभूयैव रजः रजोगुणः भवति ॥ तथा सत्वं रजश्च अभिभूय तमः तमोगुणः भवति ॥ १० ॥

हे पार्थ कदाचित् रजोगुणं तमोगुणं च पराभाव्य सत्वगुणः स्वयं४उद्भूतो भवति तदा तत्कार्यं जायते ॥ तथा सत्वं तमश्चाभिभूय रजोगुण उद्भूतो भवति तदातत्कार्यं जायते ॥ तथा सत्वं रजश्चाभिभूय तमोगुण उद्रिक्तो भवति तदा तत्कार्यं जायते ॥ एवमेवेदं नात्र संशयः कार्यः ॥ गुणानां त्रयाणां उद्भवाभिभवशब्दितौ वृद्धिह्रासौ प्राणिनां प्राचीनशुभाशुभकर्मवशात् भगवन्निग्रहानुग्रहवशात् देहाप्यायनभूताहारभेदवशाच्च संभवतः ॥ अतः प्रत्येकं तेन तेन गुणेन तत्तत्कार्याणि क्रियन्त इति युक्तम् ॥ १० ॥

**अर्जुनः** ॥ गुणोऽयमिदानीमुद्भूतो वर्तते इति केन लिङ्गेन ज्ञायते ॥

१. ३. ४०. २. ३. ४१ ३. ५. २३. ४ वि. 'ततो देवा अभवन् परासुराः' (तै. सं २. ५. ४. २) इत्यादिष्विव भवतीत्यस्यैव उद्रिक्तो भवतीत्यर्थो ज्ञेयः ॥

कृष्णः ॥ सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ॥
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमित्युत ॥ ११ ॥

सर्वेति ॥ अस्मिन् देहे सर्वाणि च तानि द्वाराणि च सर्वद्वाराणि तेषु सर्वेन्द्रियेषु ज्ञानं प्रकाशः ज्ञानरूपः प्रकाशः प्रकाशः ज्ञानं प्रकाशरूपं ज्ञानमिति वा यदा उपजायते ॥ प्रकाशे इति सप्तमी ॥ प्रकाशनिमित्तं ज्ञानं यदा उपजायत इति वा ॥ तदा सत्वं विवृद्धं इति विद्यात् जानीयात् ॥ उतशब्दोऽप्यर्थे ॥ ज्ञानं सुखं च यदा जायते इति वा सत्वं विवृद्धं रजस्तमश्च ह्रासमापन्नं विद्यादिति वा तदन्वयः ॥ ११ ॥

अस्मिन् देहे श्रोत्रचक्षुस्स्पर्शनरसनघ्राणाख्येषु वक्ष्यते च १ 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव चे'ति ॥ अन्तः करणप्रवृत्तिद्वारेषु उक्तं च मया २'सर्वद्वाराणि संयम्ये'ति ॥ इन्द्रियेषु तत्तद्विषययाथात्म्यनिश्चयज्ञानरूपः प्रकाशः ज्ञानं नैर्मल्यरूप-प्रकाशश्च इति वा यदा जायते तदा तेन लिङ्गेन ३ सुखादिलिङ्गेनापि सत्वस्य विवृद्धिं इत-रयोर्ह्रासं ४ च जानीयात् ॥ ५प्रकाशे इति छेदः ॥ निमित्तसप्तमी ॥ वस्तुयाथात्म्यप्रका-शनिमित्तं ज्ञानं यदा जायते तदा सत्वं विवृद्धमिति जानीयात् ॥ तेन लिङ्गेन तस्य तस्मिन्नेव देहे सत्वं विवृद्धमिति जानीयात् ॥ नान्यस्मिन् देहे ॥ किमेकस्य युगपदनेके देहाः संभवन्ति इति चेत् योगबलेन युगपद्गृहीतानेकदेहस्य सौभरेर्योगिनः युगपद-नेके देहा अवर्तन्त ॥ तत्र प्रतिदेहं गुणानां वृद्धिह्रासयोर्लिङ्गभेदः ॥ नत्वेकस्मिन् देहे उपलब्धेन लिङ्गेन देहान्तरे तल्लिङ्गकगुणवृध्यादेरूहसंभवः ॥ अतः देहेऽस्मिन् सत्वं विवृद्धमिति जानीयादित्युक्तम् ॥ सर्वद्वाः एषु इति छेदः ॥ सर्वेषां कार्याणां द्वारभूतं प्रकाशात्मकं ज्ञानम् ॥ न हि ज्ञानेन विना कस्यापि कार्यस्य सम्भवः ॥ जानाति इच्छति यतते इति हि न्यायः ॥ तत् यदा उपजायते तदा एषु गुणेषु सत्वं ६ अति-शयेन विवृद्धं जानीयात् ॥ इति वा ॥ ११ ॥

---

१. १५. ९. २. ८. १२ ३ उतशब्दोऽप्यर्थकः ॥ ४. उतशब्दश्चशब्दार्थे ॥ ५. वि
६ उतशब्दोऽतिशयार्थकः ॥

कृष्णः ॥ लोभः प्रवृत्तिरारम्भः कर्मणामशमस्स्पृहा ॥
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

लोभइति ॥ हे भरतर्षभ अर्जुन लोभः प्रवृत्तिः कर्मणां आरम्भः शमस्याभावः अशमः कर्मणां अशमः इति वा स्पृहा एतानि रजसि रजोगुणे विवृद्धे सति जायन्ते॥ १२॥

लोभः महति धनागमादौ विद्यमानेऽपि पुनः पुनः वर्धमानोऽभिलाषः ॥ देशे काले पात्रे करणीयस्य द्रव्यविनियोगस्य करणेऽनिच्छा वा न्यायेन अन्यायेन वा परद्रव्याणामादित्सा वा ॥ अशक्यनिरर्थककार्यकरणप्रवृत्तिः ॥ काम्यनिषिद्धकर्मणां आरम्भः करणं ॥ आरम्भ इत्युक्त्वा नैकस्यापि कर्मणः यथावत्समाप्तिर्जायत इति सूच्यते ॥ अशमः इन्द्रियाणां मनसश्च अनुपरतिः॥ कर्मणां अशम इति वा ॥ सामान्यतः दृष्टश्रुतसर्वविषयेषु 'इदं मे भूया' दितीच्छा येनकेनाप्युपायेन परद्रव्याणामादित्सा वा स्पृहा ॥ हे पार्थ एतानि रजोगुणे अभिवृद्धे जायन्ते ॥ एतानि यदा जायन्ते तदा रजोगुणं विवृद्धं जानीयात् ॥ १२ ॥

कृष्णः ॥ अप्रकाशो ऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

अप्रकाश इति ॥ हे कुरुनन्दन अर्जुन प्रकाशस्याभावः अप्रकाशः प्रवृत्तेः अभावः अप्रवृत्तिश्च प्रमादः मोहश्चैव एतानि तमसि तमोगुणे विवृद्धे सति जायन्ते ॥ १३ ॥

अप्रकाशः ज्ञानकारणे सत्यपि तत्तद्विषयज्ञानाभावः ॥ अप्रवृत्तिः प्रवृत्तिकारणे सत्यपि प्रवृत्त्यभावः आलस्यं वा॥ प्रमादः कर्तव्यानवधानपूर्वकमकर्तव्यकरणप्रवृत्तिः॥ मोहः विपरीतज्ञानं १ निद्रा वा ॥ एतानि तमोगुणे प्रवृद्धे एव जायन्ते ॥ एतानि यदा जायन्ते तदा तमोगुणं विवृद्धमेव जानीयात् ॥ सत्त्वादिगुणाभिवृद्धिलिङ्गान्युक्तानि उक्तेन तेनतेन लिङ्गेन तस्यतस्य गुणस्य अभिवृद्धिः किमर्थं ज्ञेया इति चेत् तत्तदभिवृद्धिलिङ्गभूतगुणदोषान् ज्ञात्वा लिङ्गैरेतैः इदानीमहं राजसोऽस्मि इदानीमहं तामसोऽस्मि

१ [illegible] इति [illegible] ॥

इति ज्ञात्वा नैवं मया भवितव्यं ... सात्विकेनैव भवितव्यं इत्यालोच्य रजोगुणतमोगुणविवृद्धिलिङ्गभूतदोषनिरसनाय सत्वगुणविवृद्धिलिङ्गभूतगुणसंपादनाय च प्रयत्नतो राजसतामसदुष्टजनसहवासराजसतामसाहारसेवनादिदूरीकरणपूर्वकं सात्विकसाधुजनसहवाससात्विकाहारसेवनादिभिः रजोगुणतमोगुणाभिभवपूर्वकं सत्वगुणविवर्धनाय चेति जानीहि ॥ १३ ॥

अर्जुनः ॥ तत्तद्गुणविवृद्धिलिङ्गज्ञानं रजोगुणतमोगुणाभिभवपूर्वकं सत्वगुणविवर्धनायेत्युक्तम् ॥ सत्वगुणविवर्धनस्य प्रयोजनं किं ब्रूहि ॥

कृष्णः ॥ यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥

यदेति ॥ देहं बिभर्तीति देहभृत् देही सत्वे सत्वगुणे प्रवृद्धे सति यदा प्रलयं मरणं याति प्राप्नोति तदा सः उत्तमं विदन्तीत्युत्तमविदः तेषां न विद्यते मलो दोषः येषु ते अमलाः निर्मलाः तान् लोकान् देहान् समूहान् भुवनानि वा प्रतिपद्यते प्राप्नोति॥१४॥

हे पार्थ सत्वगुणविवर्धनस्य तत्कार्यभूतसुखज्ञानादेरनुभवः प्रयोजनमिति विदितमेव ॥ अन्यदपि प्रयोजनं ब्रवीमि ॥ परत्र समीचीना स्थितिः सर्वापेक्षिता सा च मरणकालिकसत्वगुणाभिवृद्ध्यधीना ॥ अतो मरणकाले सत्वगुणेनाभिवृद्धेन भाव्यम् । मरणं च अतर्कितमेवोपनमति ॥ न तु प्राक् ज्ञायते ॥ न हि यमः त्वामहमेतेषु दिनेषु प्रेषयिष्यामीति निवेद्य दूतान् प्रेषयति ॥ अपितु अनिवेद्यैव ॥ अविदिता अतर्किता हि मृतिर्भवति लोके ॥ सत्वगुणविवर्धनेन सदा सात्विकतया स्थितौ सत्वगुणविवृद्धिकाल एव मरणं संपद्येत ॥ तदधीना च पारत्रिकी समीचीना स्थितिर्लभ्येत ॥ सत्वगुणाभिवृद्धिकाले मृतस्यात्मनः कागतिर्भवतीति चेत् ॥ शृणु ॥ सत्वगुणे प्रवृद्धे सति यदा कदा वा मरणं भवतु ॥ न तत्र चिन्ता कार्या ॥ यस्मिन् काले देही मृतिं प्राप्नोति [1] तदव्यवहितकालएव उत्तमतत्वविदां ज्ञानयोगाभ्यासं

---

१. मरणफलप्राप्त्योरेककालत्वासंभवादव्यवहितकालस्तदित्यनेनोच्यते ॥

कुर्वतां निवृत्तिकर्माण्याचरतां ज्ञानिनां निर्मलान् लोकान् देहाम् प्राप्नोति ॥ तत्कुले जन्मलाभाय तद्देहं प्राप्य तत्र स्थित्वा ततो मातृशरीरमनुप्राप्य ततो जायते ॥ १'रेतःसिग्योगोऽथ' ॥ २ 'योनेः शरीरं' इति सूत्रे ॥ आत्मयाथात्म्यविदां समूहान् वा प्राप्नोति ॥ तत्कुले जायते ॥ जनित्वा च तेषां कुले मोक्षसाधनज्ञानतत्साधनानिवृत्तिकर्मस्वधिकरोति ॥ उत्तमा ब्रह्मविष्णुमहेश्वराः तद्विदां तदुपासकानां प्राप्याः ये लोकाः तान् उत्तमविदां ब्रह्मादीनां ये लोकाः तान ब्रह्मलोकादीन् वा तत्प्राप्तिसाधनज्ञानकर्मसंपादनौपयिके कुले जनित्वा तत्संपादनद्वारा ३ प्राप्नोति ॥ अतः सदा सात्त्विकतयाऽवस्थानाय सत्त्वगुणविवर्धनमावश्यकं ॥ तु शब्दो मरणस्यास्य विशेषसूचकः ॥ १४ ॥

अर्जुनः ॥ रजोगुणतमोगुणविवृद्धिकाले संभवतो मरणस्य किं फलम् ॥

कृष्णः ॥ रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

रजसीति ॥ रजसि रजोगुणे प्रवृद्धे सति प्रलयं मरणं गत्वा कर्मसु सङ्गः कर्मसङ्गः कर्मसङ्गः एषामस्तीति कर्मसङ्गिनः तेषु जायते ॥ तथा तमसि तमोगुणे प्रवृद्धे सति प्रलीनः प्रलयं गतः मूढाश्च ताः योनयश्च मूढयोनयः तासु जायते ॥ १५ ॥

रजसि प्रवृद्धे मरणं प्राप्य काम्यकर्मानुष्ठानपराणां ४ कुले जनित्वा तादृशकर्मस्वधिकरोति ॥ तथा तमसि प्रवृद्धे प्रलयशब्दितमरणं प्राप्तः काम्यमकाम्यं वा पुरुषार्थसाधनं कर्म कर्तुं सर्वथाऽनुपयुक्ते निषिद्धकर्मानुष्ठानपराणां दैत्यानां तत्तुल्यानां वा ५ कुले जनित्वा तादृशकर्मस्वधिकरोति ॥ ईदृशफलकत्वाद्रजोगुणतमोगुणौ सर्वथा सर्वदा ह्रासं प्रापणीयौ ॥ यद्यपि प्राणिनां पारत्रिकी शुभाशुभगतिः पूर्वपुण्यपापकर्मानुसारिणी ॥ तथापि पूर्वपुण्यपापकर्मानुसारेण तत्तद्गुणाभिवृद्धिकालिकी मृतिर्भवति ॥ तदनुसा

१ ३. १. २८ २. ३. १. २९ ३. देवलोकेषु देवतया जायते इति केचित् ॥ ४. मनुष्यलोके मनुष्यतया जायत इति केचित् ॥ ५. असुरादियोनिषु जायते इति केचित् ॥

रेण उक्तरीत्या शुभाशुभगतिर्भवति॥ पूर्वपुण्यपापरूपकर्माणि मरणकाले तत्तद्गुणविवर्धनद्वारा परत्र शुभाशुभगतिप्राप्तिसाधनानि भवन्ति ॥ अत उक्तं युक्तम् ॥ १५ ॥

**अर्जुनः** ॥ किं तत्तद्गुणवृद्धिकालिकमरणानुसारेण तत्रतत्र जन्मनः फलम् ॥ ब्रूहि ॥

**कृष्णः ॥ कर्मणस्सुकृतस्याहुः सात्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखं अज्ञानं तमसः फलम् ॥ १६ ॥**

**कर्मण इति** ॥ सु समीचीनं यथा तथा कृतं सुकृतं तस्य सात्विकस्य कर्मणः सत्वेन जातं सात्विकं निर्गतं मलं यस्मात् तत् निर्मलं निर्दुःखं सुखं मोक्षसुखं फलं आहुः वदन्ति ॥ रजसः राजसस्य कर्मणस्तु दुःखं दुःखमिश्रं स्वर्गसुखं फलं आहुः ॥ तमसः तामसस्य कर्मणः अज्ञानं अज्ञानप्रचुरं निद्रालस्यादिकं फलं आहुः ॥ १६ ॥

निवृत्तिकर्मानुष्ठानपराणां कुले जातः फलसङ्गादिरहितं १ सात्विकं कर्म सम्यक् करोति तेन च सत्वगुणप्राचुर्यहेतुकज्ञानजन्यं मलशब्दितदुःखसंबन्धरहितं सात्विकं मोक्षसुखं प्राप्नोति ॥ काम्यकर्मानुष्ठानपराणां कुले जातः फलसङ्गादिसहितं २राजसं काम्यं कर्म करोति तेन दुःखमिश्रं २ ऐहिकसुखं स्वर्गादिसुखं च प्राप्नोति ॥ निषिद्धकर्मानुष्ठानपराणां कुलेजातः तादृशं ३ तामसं कर्म करोति तेन अज्ञानप्रचुरपश्वादियोनिषु जनित्वा अविवेकप्रायं तामसं निद्रालस्यादिसुखं प्राप्नोति ॥ •दुःखमिश्रसुखे दुःखशब्दप्रयोगः, दुःखस्य आधिक्यात् ॥ अज्ञानप्राचुर्यमूलके दुःखे अज्ञानतत्कार्यवाचकाज्ञानशब्दप्रयोगः, तयोस्तद्धेतुत्वात् ॥ आलस्यस्य निद्राधिक्यस्य च तदानीं सुखतया भासमानत्वेऽपि दुःख एव पर्यवसानम् ॥ पूर्वस्मिन् जन्मनि कृतानां सात्विकादिकर्मणां औत्कट्ये अव्यवधानेनैव ४ तत्तत्फललाभः ॥ अनौत्कट्ये तु उक्तरीत्या तत्तज्जन्म प्राप्येति विवेकः ॥ सात्विकादीनि कर्माणि सात्विकादीनि सुखानि च

---

१. सुकृतस्य सात्विकस्य ॥ २. रजसः राजसस्य ॥ ३. तमसः तामसस्य ॥ ४. अत एव देवयोनिषु जायते श्वसूकरादियोनिषु जायते इत्यादिपूर्वदलेऽकव्याख्यानं केषांचित् ॥

अष्टादशे १ 'नियतं संगरहितं' इत्यादिना २ 'यत्तदग्रे विषमिव' इत्यादिना च वक्ष्यते॥ रजःफलं तमःफलं च दुःखरूपमेवेति सूचयितुं तुशब्दः ॥ १६ ॥

**अर्जुनः** ॥ सात्विकादिकर्मकरणद्वारा सात्विकसुखादिप्राप्तिः फलमित्युक्तं ॥ कुतो हेतोः सात्विकादिकर्मसु प्रवृत्तिर्जायते॥ ब्रूहि ॥

**कृष्णः** ॥ सत्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतो ऽज्ञानमेव च ॥ १७ ॥

**सत्वादिति** ॥ सत्वात् सत्वगुणात् ज्ञानं सञ्जायते ॥ रजसः रजोगुणात् लोभ एव च सञ्जायते ॥ तमसः तमोगुणात् प्रमादश्च मोहश्च प्रमादमोहौ भवतः जायेते अज्ञानं चैव भवति ॥ १७ ॥

सत्वात् प्रवृद्धात् विवेकज्ञानमुत्पद्यते ॥ तेन ज्ञानद्वारा मोक्षसाधने अकाम्ये कर्मणि प्रवर्तते ॥ रजोगुणात् प्रवृद्धात् लोभः विषयसुखाभिलाषातिशय एव समुत्पद्यते न तु सत्वगुणकार्यं किमपि ॥ तेन विषयसुखानुभवसाधने काम्ये कर्मणि प्रवर्तते ॥ तथा तमोगुणात् प्रवृद्धात् प्रमादमोहौ जायेते ॥ अज्ञानं निद्रालस्यादिकं चैव जायते ॥ न तु रजःकार्यं नापि सत्वकार्यं जायते ॥ तेन समीचीने कर्मण्यप्रवृत्तः निषिद्धे पश्वादियोनिषु जन्मप्रापके कर्मणि प्रवर्तते॥ अज्ञानस्य सर्वदोषमूलत्वात् पृथगुपादानम्॥ ततश्च तत्तत्फलसाधनतत्तत्कर्मकरणेन तत्तत्फलप्राप्तिः ॥

**वि** ॥ पूर्वोक्तसात्विकादिफलानि कानि इति चेत् आत्मापरोक्षज्ञानं लोभशब्दोक्ता ३ 'गतागतं कामकामा लभंते' इत्युक्ता परंपरा प्रमादमोहज्ञानाभावप्रचुरपश्वादियोनिप्राप्तिश्च क्रमात्पूर्वोक्तानि फलानि ॥ १७ ॥

**सञ्जयः** ॥ सत्वादिषु सद्यः प्रवृत्तिनिवृत्तिजननाय तत्तत्फले अवान्तरविशेषसत्वेऽपि तत्तदनुभवस्थानैक्यादिदमस्य फलमित्यैकरूप्येणोक्तिरिति बोधनाय च पूर्वोक्तं सत्वादीनां फलभेदं ऊर्ध्वमध्याधोभावेनाह भगवान् ॥

---

१. १८. २३. २ १८. ३७. ३. ९. २१.

**कृष्णः ॥ ऊर्ध्वं गच्छन्ति सत्वस्थाः मध्ये तिष्ठन्ति राजसाः ॥**
**जघन्यगुणवृत्तिस्थाः अधो गच्छन्ति तामसाः ॥ १८ ॥**

ऊर्ध्वमिति ॥ सत्वे सत्वगुणे तिष्ठन्तीति सत्वस्थाः ऊर्ध्वं गच्छन्ति ॥ रजसः इमे राजसाः मध्ये तिष्ठन्ति ॥ जघन्यः अन्त्यः निहीनो वा जघन्यश्चासौ गुणश्च जघन्यगुणः जघन्यगुणस्य वृत्तिः व्यापारः जघन्यगुणवृत्तिः तस्यां तिष्ठन्तीति जघन्यगुणवृत्तिस्थाः जघन्यगुणे वृत्तिः स्थितिः येषां ते जघन्यगुणकार्येण द्यूतेन चौर्यादिना वा वृत्तिः जीवनं येषां ते च जघन्यगुणवृत्तयः तेषु तिष्ठन्तीति जघन्यगुणवृत्तिस्थाः तमसः इमे तामसाः अधः गच्छन्ति ॥ १८ ॥

सत्वमविहाय वर्तमानाः सत्वस्थाः सदा सत्वप्रधानाः ॥ 'ष्ठा गतिनिवृत्ता'विति धातुः ॥ ब्रह्मलोकादिकं ऊर्ध्वस्थानं गच्छन्ति ॥ राजसाः रजःप्रधानाः मध्ये ऊर्ध्वाधश्शब्दवाच्यस्थानयोर्मध्ये स्वर्गभूमिरूपे तिष्ठन्ति ॥ न तेषामूर्ध्वमधोवा गतिः ॥ जघन्यः अंत्यः निकृष्टश्च गुणः तमोगुणः तस्य १ वृत्तयः कर्माणि तानि अविहाय वर्तमानाः तामसाः तमःप्रधानाः अधः नरके गच्छन्ति ॥ देवयोनिं गच्छन्ति मनुष्ययोनौ तिष्ठन्ति पश्वादियोनिं गच्छन्ति इति वा ॥ अतः सत्वे प्रवर्तितव्यं रजस्तमोभ्यां निवर्तितव्यम् ॥ सात्विका इत्यनुक्त्वा सत्वस्था इत्युक्त्वा सदा सत्वमविहाय स्थातव्यमिति सूच्यते ॥ जघन्यगुणवृत्तिस्था इति विशेषणेन तमःप्राचुर्यात् ये निद्रालवः अलसाश्च तेषां सत्वरजःफलालाभमात्रं न तु संपूर्णस्य तमःफलस्य प्राप्तिः ॥ ये तु तामसाः तामसानि कर्माणि सदा कुर्वन्तो वर्तन्ते तेषां २संपूर्णतमःफलप्राप्तिरिति सूच्यते ॥ तमःप्राचुर्यवत् तमःप्रचुरतामसजनसहवासोऽपि बाधकः इति बोधयितुं तद्विशेषणम् ॥ कथमिति चेत् ॥ जघन्ये गुणे तमसि वृत्तिः येषां ते जघन्यगुणकार्येण द्यूतेन चौर्यादिना वा वृत्तिः जीवनं येषां ते च जघन्यगुणवृत्तयः

---

१. वृत्तस्था इति पाठान्तरम् ॥ २. वि. अधो गच्छन्ति अन्त्यजत्वं ततस्तिर्यक्त्वं ततः क्रिमिकीटादित्वं ततः स्थावरत्वं ततो गुल्मलतात्वं ततश्च शिलाकाष्ठलोष्ठतृणादित्वं गच्छन्तीत्यर्थः ॥

तामसाः तेषु तिष्ठन्ति ये ते जघन्यगुणवृत्तिस्थाः तामससंसर्गिणः तेऽपि अधो गच्छन्ति ॥ १ पापिसंसर्गिणोऽपि पापित्वमुपपादित मधस्तात् ॥ प्रभुप्रसादापादकं कर्म ये कुर्वन्ति ते स्वस्थानादुत्कृष्टस्थानं अन्यत्र नीताः प्राप्नुवन्ति ॥ ये प्रभुप्रकोपापादकं कर्म कुर्वन्ति ते स्वस्थानान्निकृष्टं स्थानं अन्यत्र नीताः प्राप्नुवन्ति ॥ ये तु प्रसादस्य प्रकोपस्य वा अनापादकं स्वीयतादात्विकसुखमात्रापादकं कर्म कुर्वन्तो वर्तन्ते ते नान्यत्र उपरि अधो वा नीयन्ते ॥ अपितु स्वस्थान एव अल्पसुखवन्तास्तिष्ठन्तीति लौकिकोद्योगादौ स्पष्टोऽनुभवः ॥ अतोऽत्र सात्विकाः गच्छन्ति राजसाः तिष्ठन्ति तामसाः गच्छन्तीत्युक्तम् ॥ तदेवं २ ' सत्वं रजस्तम ' इत्यादिभिश्चतुर्दशभिः श्लोकैः ३' कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ' इत्यादिकं विवृतम् ॥ १८ ॥

**अर्जुनः** ॥ प्रकृतिः प्रकृतेर्गुणाः गुणानां गुणाः गुणैः प्रकृतेर्बन्धकत्वप्रकारः प्रकृतिगुणबद्धस्य तत्तद्गुणोद्रेकेण फलभेदः इत्यादिकं अभिहितं भवता॥ किमर्थमभिहितमेतत् ॥ ज्ञानार्थमिति चेत् किमेतद्ज्ञानस्य प्रयोजनम् ॥ ब्रूहि ॥

कृष्णः ॥ नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

नान्यमिति ।। द्रष्टा चेतनो जीवः गुणेभ्यः अन्यं ४ कर्तारं यदा नानुपश्यति गुणेभ्यः परं विलक्षणं ५ अकर्तारं आत्मानं क्षेत्रज्ञं च यदा वेत्ति स तदा मयि भावः स्थितिः मम भावः मम भावः स्वभावश्च मद्भावः तं अधिगच्छति प्राप्नोति ॥ ६ द्रष्टा गुणेभ्यः अन्यं जीवं अस्वतन्त्रकर्तारं परमात्मानं च गुणेभ्यः परं विलक्षणं उत्तमं च यदा वेत्ति तदा सः मद्भावं अधिगच्छति॥ अतः स एव ना पुरुषः ॥ अन्यस्तु पशुः ॥ १९ ॥

द्रष्टा जीवः एतदध्यायार्थविचारकुशलस्सन् सुखदुःखमोहादिरूपतत्तत्कार्यकर्तृभ्यो गुणेभ्यः सत्वादिभ्यः अन्यं कर्तारं यदा नानुपश्यति ॥ गुणा एव कर्तारः आत्मा तु अकर्ता ॥ उक्तं च मया ॥ ७' गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते ' इति ॥

---

१. (५९ पुटे) २. १४. ५. ३. १३. २२. ४. द्वै. परिणामिकर्तारम् ॥ ५. द्वै. जीवं अपरिणामिकर्तारं परमात्मानं च स्वतन्त्रकर्तारम् ॥ ६. द्वै ॥ ७. ३. २८.

१'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥ अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ' इति ॥ २' प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ॥ यः पश्यति तथाऽऽत्मानं अकर्तारं स पश्यती 'ति च ॥ इति यः स्वविवेकानुसारेण शास्त्राचार्योपदेशानुसारेण च निश्चिनोति ॥ तथा गुणेभ्यः तत्कार्येभ्यो देहेन्द्रियादिभ्यश्च परं विलक्षणं अकर्तारं आत्मानं क्षेत्रज्ञं च यदा वेत्ति तदा स मम परब्रह्मणो भावः तं ३ परब्रह्मात्मतां मम यो भावः स्वभावः तं ४ मत्साम्यं वा प्राप्नोति ॥ एतदज्ञानस्य फलं मोक्षः मोक्षफलकज्ञानार्थमेतदखिलमभिहितं मया ॥

**द्वै** ॥ द्रष्टा जीवः गुणेभ्यः अन्यं परिणामिकर्तारं यदा नानुपश्यति गुणेभ्यः परं विलक्षणं अन्यं परमात्मानमेव कर्तारं वेत्ति यः सः मयि भावं स्थितिं तद्रूपं मोक्षं प्राप्नोति ॥ गुणाः जगतः परिणामिकर्तारः घटस्य मृदिव ॥ परमात्मा तु अपरिणामिकर्ता घटस्य कुलाल इव इति जानन् मोक्षमाप्नोति ॥ उक्तरीत्या गुणा एव कर्तारः नान्यः कर्ताऽस्तीति भाति ॥ तथा न मन्तव्यं ॥ किन्तु गुणेभ्यः अन्यं जीवं अस्वतन्त्रकर्तारं ईशं च स्वतन्त्रकर्तारं जानीयात् ॥ न केवलं जीवः परमात्मा च गुणेभ्योऽन्यः किंतु गुणतत्कार्येभ्यः सर्वेभ्यः उत्तमश्च इति च जानीयात् ॥ इति योऽनुपश्यति वेत्ति च सः ना पुरुषः अन्यस्तु पशुः ॥ स ना इति कुतः स्तूयत इति चेत् ॥ सः मद्भावं प्राप्नोति अतः स्तूयते ॥ इदमेवोक्तं मया॥ ५'य एवं वेत्ति पुरुष'मित्यादिना ॥ इति च॥ प्रकृतिं तद्गुणान् तत्कार्याणि जीवं परमात्मानं च यथावद्ज्ञात्वा मोक्षमाप्तुं एतदखिलमभिहितं मया ॥ अतस्त्वमेतदखिलं यथावज्जानीहि ॥ १९ ॥

**अर्जुनः** ॥ उक्तरीत्या प्रकृतितत्कार्यादीनां ज्ञानात् मद्भावप्राप्तिरूपोमोक्ष इत्युक्तं ॥ किं तदज्ञानात् प्रकृतिसंसृष्टस्य त्वद्भावप्राप्तिः सह प्रकृत्या ॥ उत तद्विनिर्मुक्तस्य ॥ ब्रूहि ॥

**कृष्णः** ॥ गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुत ॥ २०

१. ३. २७. २. १३. ३०. ३. अद्वै ॥ ४. वि ॥ वि. आत्मनः स्वतःपरिशुद्धस्वभावस्य पूर्वपूर्वकर्ममूलगुणसङ्गनिमित्तं विविधकर्मसु कर्तृत्वम् ॥ आत्मा स्वतस्त्वकर्ता अपरिच्छिन्नज्ञानैकाकारः इत्येवमात्मानं यदा पश्यति ॥ तदा मद्भावमधिगच्छति ॥ ५. १३. २४.

गुणानिति॥ देहे समुद्भवः प्रकटीभावः येषां ते देहसमुद्भवाः देहे प्रकटीभूताः तान्॥ देहः समुद्भवः कार्यं येषां ते समुद्भवन्त्यस्मादिति समुद्भवाः देहानां समुद्भवाः देहानां समुद्भवः येभ्यस्ते इति वा देहसमुद्भवाः तान् देहोत्पत्तिकारणभूतान्॥ देहरूपः समुद्भवः परिणामः येषां ते देहसमुद्भवाः तान्॥ देहात्मना परिणतान्॥ देहात् देहात्मना परिणतप्रकृतेः समुद्भवो येषां ते देहसमुद्भवाः तान्॥ एतान् त्रीन् गुणान् सत्वरजस्तमोगुणान् अतीत्य अतिक्रम्य जन्म च मृत्युश्च जरा च दुःखं च जन्ममृत्युजरादुःखानि तैः विमुक्तः सन् अमृतं मोक्षं ब्रह्म शुद्धात्मानं वा अश्नुते प्राप्नोति॥ २०॥

देही आत्मा देहे समुद्भवः प्रकटीभावः तं प्राप्तान् देहे प्रकटीभूतान् देहोत्पत्तिकारणभूतान् देहरूपेण समुद्भूतान् देहात्मनापरिणतप्रकृतितः समुद्भूतान् उक्तान् त्रीन् सत्वरजस्तमोगुणान् अतीत्य तदात्मकप्रकृतिबन्धान्मुक्तः अतः जन्मना मरणेन जरया तज्जन्यदुःखैः तदितरनानाविधसांसारिकदुःखैश्च निःशेषं मुक्तः अमृतशब्दितं [१]मोक्षं [२]परब्रह्म प्रकृतिबन्धरहितं [३]शुद्धमात्मानं प्राप्नोति॥ न प्रकृतिसंसृष्टस्य मद्भावः॥ तत्संसर्गस्य मद्भावप्राप्तिविरोधित्वात्॥ तस्मान्मोक्षो हि मोक्षः॥ उक्तं च मया॥ [४]'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति॥ सात्विकाहारादिसेवनेन फलाभिसंधिरहितभगवदाराधनरूपकर्मानुष्ठानेन च रजस्तमसी सर्वात्मनाऽभिभूय उत्कृष्टसत्वनिष्ठः कर्तृभ्यो गुणेभ्यः परमन्यमात्मानं यथावत् वेत्ति॥ तेन ज्ञानेन प्रकृतिबन्धान्मुक्तः सन् मोक्षमाप्नोति॥ इयमेव एवमुक्ता मद्भावप्राप्तिः॥ पूर्वोक्तस्यैव विवरणमेतत्॥ २०॥

सञ्जयः॥ न प्रकृतिसंसृष्टस्य भगवद्भावप्राप्तिः किंतु प्रकृतितद्गुणविमुक्तस्यैवेत्युक्तं भगवता॥ निशम्य तत् प्रकृतिगुणातिक्रमणोपायजिज्ञासया गुणात्ययोपायः कः इति तदुपायानुष्ठाने श्रद्धातिशयजननाय गुणातीतलक्षणजिज्ञासया गुणातीतलक्षणं किमिति च पृच्छति भगवन्तं पार्थः॥

---

१ छ॥ २. अ॥ ३ वि॥ ४. ७. १४.

अर्जुनउवाच ॥

कैर्लिङ्गैस्त्रीन् गुणानेतान् अतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥

कैरिति ॥ हे प्रभो समर्थ श्रीकृष्ण एतान् त्रीन् गुणान् अतीतः कैः लिङ्गैः युतः सहितः भवति ॥ सः कः आचारः यस्य सः किमाचारः भवति ॥ किमाचारः एतान् त्रीन् गुणान् अतिवर्तते इति वा ॥ कथं च केनोपायेन च एतान् त्रीन् गुणान् अतिवर्तते अतिक्रामति ॥ २१ ॥

हे प्रभो एतान् सत्वादीन् गुणान् अतिक्रान्तः कैर्लिंगैर्युतो भवति गुणातीतस्य लक्षणानि कानि ॥ गुणानतीतः किमाचारो भवति अस्य स्वरूपावगतेर्लिङ्गभूताचारः कीदृशः ॥ लिङ्गशब्देन आन्तरशमदमाद्यसाधारणधर्माः आचारशब्देन असाधारणबाह्य कर्मानुष्ठानादयश्चोच्यन्ते ॥ स्वस्मिन् गुणात्ययज्ञानाय आन्तरलिङ्गप्रश्नः ॥ परेषु गुणात्ययज्ञानाय बाह्याचारप्रश्नः इति विवेकः ॥ किं यथेष्टाचारः उत नियताचारः ॥ किमाचारः त्रीन् गुणानतिवर्तते ॥ गुणात्ययहेतुभूतबाह्याचारः कः इति वा ॥ कथं केनोपायेन त्रीन् गुणान् अतिवर्तते ॥ गुणात्ययहेतुभूत उपाय[१]श्च कः इति त्रयः प्रश्नाः ॥ उचितोपायविधानेन प्रकृति तद्गुणेभ्यो मोचयितुं समर्थोऽसि दयया मां मोचय ॥ २१ ॥

सञ्जयः ॥ कैर्लिङ्गैरिति प्रथमप्रश्नस्योत्तरमाह ॥

॥ श्रीभगवानुवाच ॥

कृष्णः ॥ प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥ २२ ॥

प्रकाशमिति ॥ हे पाण्डव अर्जुन प्रकाशं च प्रवृत्तिं च मोहं चैव संप्रवृत्तानि एतानि न द्वेष्टि ॥ निवृत्तानि एतानि न कांक्षति ॥ यः सः गुणातीत उच्यत इति चतुर्थेनान्वयः ॥ २२ ॥

---

१. कथं त्वेतानिति पाठान्तरम् ॥

गुणातीतः प्रकाशप्रवृत्ति 'हाख्यानि सत्वरजस्तमःकार्याणि संप्रवृत्तानि दुःखबुध्या न द्वेष्टेव निवृत्तानि तानि सुखबुध्या न कांक्षति पुनर्मे भूयासुरिति नापेक्षत एष ॥

द्वै ॥ सत्वरजस्तमोगुणाः द्विविधाः सूक्ष्माः स्थूलाश्च॥ तत्र स्थूलेभ्यः लौकिकविषयेषु प्रकाशप्रवृत्तिमोहा जायन्ते ॥ सूक्ष्मेभ्यः परमात्मविषये ते जायन्ते ॥ न द्वेष्टि न कांक्षतीतिस्थूलगुणजन्यप्रकाशादिविषयम् ॥ सूक्ष्मगुणजन्यभगवद्विषयप्रकाशप्रवृत्योः कांक्षायाः भगवद्विषयमोहे द्वेषस्य च सत्वात् ॥ भगवद्विषये एतानि त्रीणि न द्वेष्टि किंतु मोहमेकमेव द्वेष्टि त्रीणि न कांक्षति किंतु प्रकाशप्रवृत्ती एव कांक्षति ॥ यद्वा पुरुषान्तरविषये त्रीणि न द्वेष्टि मोहमेव द्वेष्टि मोहं न कांक्षति ॥ त्रीणि न कांक्षति ॥ किंतु प्रकाशप्रवृत्ती एव कांक्षति ॥ प्रकाशप्रवृत्ती न द्वेष्टि ॥

वि ॥ अनिष्टतत्साधनप्रापकाणि त्रीणि न द्वेष्टि ॥ इष्टतत्साधनप्रापकाणि त्रीणि न कांक्षति ॥

अयं गुणातीतः इति वा य एवं स गुणातीत उच्यत इति चतुर्थश्लोकस्थेन वा अन्वयः ॥ विक्षेपकेषु गुणकार्येषु प्राप्तेषु निवृत्तेषु च रागद्वेषाभावो गुणातीतस्य लिङ्गमांतरं स्वेनैव संवेद्यमित्युक्तंभवति ॥ परमधार्मिकस्य पाण्डोस्तनूजोऽसि ॥ अतस्त्वं गुणानेतानत्येतुं शक्नोषि ॥ २२ ॥

सञ्जयः ॥ कैर्लिङ्गैरिति प्रथमप्रश्नस्य उत्तरमुक्त्वा किमाचार इति द्वितीयप्रश्नस्योत्तरमाह भगवान् ॥

कृष्णः ॥ उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणावर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥

उदासीनेति ॥ यः उदासीनेन तुल्यं उदासीनवत् आसीनः उपविष्टः सन् गुणैः सत्वादिगुणैः न विचाल्यते ॥ यः गुणाः सत्वादिगुणाः वर्तन्ते इत्येव अवतिष्ठति ॥ नेङ्गते न चलति ॥ यः उदासीनस्य परमात्मनः वदः उदासीनवदः आचार्यः तस्मिन् आसीनः सन् न गुणाः अगुणाः तैः अगुणैः आचार्यस्य दोषैः न विचाल्यते ॥ गुणाः आचार्यस्य ज्ञानबोधनशक्त्यादयः वर्तन्त एव इति अवतिष्ठति ॥ नेङ्गते न चलति ॥ २३ ॥

यः द्वयोर्विवदमानयोः कस्यापि पक्षमनाश्रित्य रागद्वेषरहिततया किमप्यकुर्वन् किमप्यवदन् केवलं तूष्णीमास्ते स उदासीनः ॥ तद्वत् रागद्वेषादिरहितः ॥ गुणातीतोऽयं भगवदाराधनरूपं कर्म शरीरयात्रानिर्वहणौपयिकं वा कर्म करोति ॥ कथमस्य औदासीन्यमुच्यते इति चेत् ॥ नायमुदासीन एव किन्तु रागद्वेषादिराहित्येन उदासीनसदृशः अत एव उदासीनतयाऽऽसीन इत्यनुक्त्वा 'उदासीनवदासीन' इत्युक्तम् ॥ नवमे नवमे 'उदासीनवदासीन'मित्यत्र मयोक्तं वतिप्रत्ययप्रयोगकृत्यमनुस्मर ॥ गुणैः सत्वादिभिः तत्कार्यैः सुखदुःखमोहादिभिश्च अयं स्वानुष्ठेयानुष्ठानात् स्वध्येयध्यानात् स्वज्ञेयज्ञानाच्च न प्रच्याव्यते ॥ गुणा एनमेभ्यो न च्यावयन्ति ॥ कथमेवमवस्थातुं शक्यं योगक्षेमनिर्वहणचिन्ता च्यावयेत् खल्वेनमिति चेत् गुणाः तत्तत्कार्यनिर्वाहकाः वर्तन्ते प्रवर्तन्ते किं मया करणीयमस्ति [1]इत्येव निश्चित्य [2]अवतिष्ठति सुस्थस्तिष्ठति ॥ न रागद्वेषाभ्यां तत्तन्मूलककार्याणि कर्तुमीहते ॥ न कुत्राप्यनावश्यके कार्ये प्रवर्तते ॥ उक्तं च मया ॥ [3]'प्रकृतेः क्रियमाणानि गुणै'रिति ॥ [4]'गुणा गुणेषु वर्तन्ते' इति ॥ [5]'प्रकृत्यैव च कर्माणि' इति च ॥ एतादृशो यः स गुणातीत उच्यते ॥ [6]गुणातीतस्य परसंवेद्यं बाह्यमाचाररूपं लिङ्गमिदम् ॥ [7]अनेन यत्नतः सम्पादितेन साधनेन गुणातीतो भवेत् ॥

उत् सर्वस्मात् जगत उत्कृष्टत्वेन आसीनः परमात्मा तस्य वदः तदुत्तमतत्वोपदेष्टा आचार्यः तस्मिन् आसीनः सदा तत्समीपे उपविश्य तत्वार्थं शृण्वन् ॥ अगुणैरिति छेदः ॥ तस्य आचार्यस्य अगुणैर्दोषैः विद्यमानैः असूयया आरोपितैर्वा न विचाल्यते ॥ गुरुभक्तितः तन्मुखात्तत्वार्थश्रवणेच्छातश्च न प्रच्याव्यते ॥ यथा तथा वा भवत्वयमाचार्यः नास्य दोषो मया चिंतनीयः ॥ गुरोर्दोषाणामावरणात्खलु शिष्यः छात्र इत्युच्यते ॥ गुरोर्दोषाणामावरणं छत्रं तत् शीलं यस्य सः छात्रः इति हि निरुक्तिः ॥ कुतो न चलतीति चेत् ॥ यैः गुणैः अयमाचार्यतया वृतः ते गुणाः ज्ञानतत्वज्ञानबोधनचातुरीप्रमुखाः वर्तन्ते नैकोऽपि तेष्विदानीमपगतः इत्येव निश्चित्य गुरौ भक्तिमत्तया सम्यक् तिष्ठति न चलति ॥ यः ईदृशः स गुणातीत उच्यते ॥ अयं गुणातीतस्य बाह्याचारः अनेन गुणातीतो भवेत् ॥ २३ ॥

---

१. इत्येवमिति पाठान्तरम् ॥ २. अवतिष्ठते अवतिष्ठतीत्यार्षम् ॥ ३. ३. २७. ४. ३. २८ ५. १३. ३०. ६. किमाचारोभवतीति व्याख्यानानुरोधेन ॥ ७. किमाचारोगुणानतिवर्तते इति व्याख्यानानुरोधेन ॥

कृष्णः ॥ समदुःखसुखस्स्वस्थस्समलोष्टाश्मकाञ्चनः ॥

तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दाऽऽत्मसंस्तुतिः ॥ २४ ॥

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ॥

सर्वारम्भपरित्यागी गुणातीतस्स उच्यते ॥ २९ ॥

समेति ॥ यः दुःखं च सुखं च दुःखसुखे समे दुःखसुखे यस्य सः समदुःखसुखः॥ स्वस्थः स्वस्थचित्तः ॥ स्वेन स्वरूपेण तिष्ठतीति स्वेच्छयैव तिष्ठतीति स्वस्मिन् आत्मस्वरूपे परमात्मनि वा तिष्ठतीति वा स्वस्थः ॥ इति च ॥ लोष्टः पांसुपिण्डश्च अश्मा शिला च काञ्चनं च लोष्टाश्मकाञ्चनानि समानि लोष्टाश्मकाञ्चनानि यस्य सः समलोष्टाश्मकाञ्चनः॥ प्रियं च अप्रियं च प्रियाप्रिये तुल्ये प्रियाप्रिये यस्य सः तुल्यप्रियाप्रियः ॥ धीरः धैर्यवान् धिया रमत इति धीरः इति वा ॥ आत्मनः संस्तुतिः आत्मसंस्तुतिः निन्दा च आत्मसंस्तुतिश्च निन्दात्मसंस्तुती तुल्ये निन्दात्मसंस्तुती यस्य सः तुल्यनिन्दात्मसंस्तुतिः ॥ मानश्च अपमानश्च मानापमानौ तयोः तुल्यः ॥ मित्रं च अरिश्च मित्रारी तयोः पक्षौ मित्रारिपक्षौ तयोः तुल्यः ॥ सर्वे च ते आरम्भाश्च सर्वारम्भाः सर्वकर्माणि सर्वारम्भान् परित्यजतीति सर्वारम्भपरित्यागी ॥ सः गुणान् अतीतः गुणातीतः उच्यते ॥ २४ ॥ २९ ॥

सुखदुःखे गुणातीतस्य समे ॥ अत एव स्वस्थोऽयं ॥ सदा निर्विकारतया स्वरूपेण तिष्ठति स्वेच्छयैव तिष्ठति वा ॥ स्वस्मिन्नात्मवस्तुनि स्वतन्त्रत्वात् स्वशब्दवाच्ये परमात्मनि च निष्ठया तदन्यत्र विरक्तः ॥ अतः १ समानि लोष्टः पांसुपिण्डः अश्मा पाषाणः कांचनं सुवर्णं एतानित्रीण्यस्य ॥ समदुःखसुखत्वात् प्रियाप्रिये सुखदुःखसाधने तुल्ये अस्य ॥ कथमस्य समदुःखसुखत्वादिकं संपद्यते इति चेत् धीरः तादृशधैर्यवान् धीमान्वा ॥ धिया रमत इति धीर इति निरुक्तिः ॥ धीरः समदुःखसुखो भवति ॥ उक्तं च मया ॥ २ 'समदुःखसुखं धीर'मिति ॥ अत एव तुल्ये निन्दा स्वस्य सम्यक्स्तुतिश्चास्य ॥ अत एव स्तुतिनिंदाकृतौ मानोऽपमानश्च तुल्यावस्य ॥

---

१. अत्र, 'धनानि शिष्यैस्सह तंडुलेन दत्तानि देव्या सह देशिकेन्द्रः ॥ विलोक्य गेहाद्बहिराक्षिपद्यः समाश्रये तं समलोष्टरुक्मं' इति वैभवप्रकाशिकाश्लोकोऽनुसन्धेयः ॥ २. २. १५.

अत एव मित्रस्य शत्रोश्च पक्षयोस्समः॥ निंदास्तुतिभ्यां शोकहर्षयोरनुभवेन हि तत्कर्त्रोः शत्रुत्वं मित्रत्वं च॥ निंदास्तुत्योः समस्य शत्रुमित्रपक्षयोस्समत्वमुपपद्यते॥ गुणातीतस्य सर्वत्र समबुद्धेरस्य प्रियाप्रियमित्रामित्रादिभेदो लोकदृष्ट्या ॥ सर्वावैष्णवकर्मपरित्यागी निषिद्धसर्वकर्मपरित्यागी सर्वकाम्यकर्मपरित्यागी सर्वसांसारिककर्मपरित्यागी देहयात्रामात्रव्यतिरेकेण सर्वकर्मपरित्यागी सर्वोद्यमपरित्यागी वा ॥ निन्दास्तुती वाचिकव्यापारौ [१]मानापमानौ तु कायिकमानसिकव्यापारौ ॥ लोके निन्दायाः स्वविषयतानुसन्धानमकृत्वा खलो मूढो निन्दति चेत् निन्दतु का हानिः इति निन्दके [२]'अवजानन्ति मां मूढा' इत्याद्युक्तन्यायेन मूढत्वमारोप्य तत्रोदासीनो भवति॥ स्तुतौ तु स्वविषयतामनुसंधाय स्तावके विद्वत्त्वमारोप्य स्तुवारश्चैव ते जानंति ते मम परं भावं तादृशमहामहिमवान् किलाहं इति तां स्तुतिं शतगुणीकृत्य प्रहृष्टो भवति इत्यर्थस्य सूचनाय स्तुतेः आत्मसंबंधित्वोक्तिः ॥ इदं च गुणातीतस्य [३] आचारांतरं॥ यान्येव गुणातीतस्य बाह्यानि आन्तराणि च लिङ्गानि तानि गुणानत्येतुमिच्छोः यत्नसाध्यानि साधनानि ॥ अतएव प्रश्न उत्तरं च ॥ इयं च रीतिः [४]'स्थितप्रज्ञस्य का भाषा'॥ [५]'प्रजहाति यदा कामा'निति प्रश्नोत्तरयोः स्पष्टा ॥ विस्पष्टं प्रतिपादिता च तत्र ॥ यद्यपि लक्षणानि 'स्थितप्रज्ञस्य का भाषे'ति पृष्टानि ॥ उक्तानि च 'प्रजहातियदाकामा'नित्यादिना ॥ तथापि तत्र ज्ञानिनो लक्षणानि कानीत्येवं प्रश्नः ॥ ज्ञानिनो लक्षणानीमानीत्युत्तरम् ॥ अत्र तु ज्ञानेन गुणानतीतस्य लक्षणानि कानीति प्रश्नः ॥ गुणानतीतस्य लक्षणानीमानीत्युत्तरं इति विवेकः ॥ [६]'समदुःखसुखं धीरं' [७]'समदुःखसुखः क्षमी ॥' [८]'उदासीनो गतव्यथः' ॥ [९]'सर्वारंभपरित्यागी'॥ [१०]'युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः'॥[११]'समः शत्रौ च मित्रे च तथा मानापमानयोः' ॥ [१२]'शीतोष्णसुखदुःखेषु तथा मानापमानयोः'॥ [१३]'तुल्यनिन्दास्तुतिर्मौनी'॥ इत्याद्युक्त्या क्वचिच्छब्दतः [१४]'सुखदुःखे समे कृत्वा'॥ [१५]'तत्तत्प्राप्य शुभाशुभं॥ नाभिनन्दति न द्वेष्टि'॥[१६]'न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियं'॥[१७]'स्थिर-

---

१. मानावमानयोरिति पाठान्तरम् ॥ २. ९. ११. ३. धीरइत्यंतमान्तरं लिङ्गम् ॥ 'तुल्यनिन्दात्मसंस्तुति'रित्यादिकम्बाह्यलिङ्गम् ॥ 'समदुःखे'त्यादिकं सर्वं बाह्याचाररूपलिङ्गपरमिति केचित् ॥ ४. २. ५४. ५. २. ५५. ६. २. १५. ७. १२. १३. ८. १२. १६. ९. १२. १६. १०. ६. ८. ११. १२. १८. १२. ६. ७. १३. १२. १९. १४. २. ३८. १५. २. ५७. १६. ५. २०. १७. १२. १९.

मतिः' ॥ १'समबुद्धिर्विशिष्यते' ॥ २'शुभाशुभपरित्यागी' ॥ इत्याद्युक्तया क्वचिदर्थतश्च पुनरुक्तिः तत्तत्प्रकरणानुगुणाभिप्रायभेदकल्पनात् समाधेया ॥ तत्वविषये पुनरुक्तिर्न दोषाय तद्बोधने महातात्पर्यात् इत्युक्तं (१२. १९.) मधस्तात् ॥ २४ ॥ २५ ॥

**अर्जुनः** ॥ कथमेतानि उपायभूतानि साधनानि संपाद्य गुणानत्येतुं शक्यते ॥ अशक्यसाधनानीमानि साधनानि ॥ किं वाऽहं करिष्यामि का वा गतिर्मम ब्रूहि ॥

**कृष्णः** ॥ मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥

मां चेति ॥ यः न विद्यते व्यभिचारः यस्य सः अव्यभिचारः तेन भक्तिरेव योगः भक्तियोगः तेन मां च मामेव सेवते ॥ सः एतान् गुणान् सम्यक् अतीत्य ब्रह्मण इव भूयं भवनम् ब्रह्मणि भूयं ब्रह्मणः भूयं भावः ब्रह्मत्वं ब्रह्मणः भूयं भावः स्वभावः तस्मै कल्पते अर्हो भवति ॥ २६ ॥

हे पार्थ ३अव्यभिचारेण भक्तियोगेन मामेव यः सेवते स एतान् गुणान् सम्यक् अतीत्य ४ब्रह्मभावशब्दितमोक्षाय अर्हो भवति ॥ अयमेव इतरसाधनसंपादनाय उपायो भवति ॥ भक्त्या मां भज अहमेव साधनानो मानि प्रापयामि ॥ अतो मा भैषीः ॥ मद्भक्तिस्सर्वपुमर्थसाधनी ॥ उक्तं च मया ॥ ५'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति ॥ २६ ॥

**अर्जुनः** ॥ त्वां सेवमानस्य त्वद्भावप्राप्तिः स्यान्नाम ॥ ६ब्रह्मभावप्राप्तिः कुतः ब्रह्मणः तव च कः सम्बन्धः ब्रूहि ॥

**कृष्णः** ॥ ब्रह्मणो हि प्रतिष्ठाऽहं अमृतस्याव्ययस्य च ॥
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

---

१. ६. ९ २. १२. १७ ३. तत्र तदन्यत्र च वृत्तिर्व्यभिचारः तद्रहितेन ॥ ४. 'मायामेतां तरन्ति ते' इत्युक्तरीत्या त्रिगुणात्मकप्रकृतिबन्धनान्मोक्षः ॥ ह्रै. ब्रह्म लक्ष्मीः तस्येव भवनं प्रियत्वम् ॥ तस्मिन् भवनं तत्समीपप्राप्तिरिति वा तस्मै ॥ तत्समीपं प्राप्य तयानुगृहीतः परमात्मोत्मीति तत्त्वम् ॥ अद्वै. ब्रह्मत्वम् ॥ वि. ब्रह्मणः भूयं भावः स्वभावः ब्रह्मसाम्यं तस्मै ॥ ५. ७. १४ ६. द्वै. लक्ष्मीसमीपप्राप्तिः ॥ अ. परब्रह्मत्वप्राप्तिः ॥ वि. परब्रह्मसाम्यप्राप्तिः ॥

ब्रह्मण इति ॥ अहं ब्रह्मणः लक्ष्म्याः प्रतितिष्ठति अस्यामिति प्रतिष्ठा आधारः न व्येतीति वा न विद्यते व्ययः विकारः नाशो वा यस्य इति वा अव्ययः तस्य अमृतस्य मुक्तस्य च प्रतिष्ठा ॥ शश्वत् भवः शाश्वतः तस्य फलतः शाश्वतस्य धर्मस्य निवृत्तिधर्मस्य च प्रतिष्ठा ॥ एकमेव अन्ते यस्य तत् एकान्तं एकान्तमेव ऐकान्तिकं तस्य सुखस्य च प्रतिष्ठा ॥ अहं सगुणं ब्रह्म न विद्यते मृतं नाशः यस्य यस्माद्वा अमृतं तस्य अव्ययस्य निर्विकारस्य च शाश्वतस्य नित्यस्य धर्मस्य ज्ञानरूपधर्मप्राप्यस्य च सुखरूपस्य एकान्तः नियमः तत्संबन्धि ऐकान्तिकं नियतं सर्वदेशकालव्याप्तं तस्य च तादृशस्य ब्रह्मणः निर्गुणब्रह्मणः प्रतिष्ठा ॥ अहं निर्गुणं ब्रह्म ब्रह्मणः सगुणस्य प्रतिष्ठा इति वा ॥ अहं अमृतस्य मोक्षसाधनस्य अव्ययस्य च ब्रह्मणः वेदस्य प्रतिष्ठा शाश्वतस्य धर्मस्य अकाम्यकर्मणश्च ऐकान्तिकस्य स्वरूपभूतमोक्षसुखस्य च प्रतिष्ठा इति वा ॥ अहं ब्रह्मणः प्रतिष्ठा अव्ययस्य अमृतस्य मोक्षस्य च प्रतिष्ठा शाश्वतस्य धर्मस्य ज्ञानस्य निवृत्तिकर्मणो वा च प्रतिष्ठा ऐकान्तिकस्य सुखस्य मोक्षसुखस्य च प्रतिष्ठा इति वा ॥ अहं अव्ययस्य अमृतस्य च ब्रह्मणः शुद्धात्मनः प्रतितिष्ठति अनयेति प्रतिष्ठा प्राप्तिहेतुः ॥ आश्रयो वा ॥ शाश्वतस्य धर्मस्य कैवल्यशब्दितविलक्षणमोक्षस्य च ऐकान्तिकस्य मोक्षसुखस्य च प्रतिष्ठा ॥ हि प्रसिद्धम् ॥ हि यस्मात् एवं तस्मात् यः मां सेवते सः ब्रह्मभूयाय कल्पते इति पूर्वेण वाऽन्वयः ॥ २७ ॥

द० ॥ ब्रह्मशब्देनोक्ताया लक्ष्म्या अहं प्रतिष्ठाशब्दित आधारः ब्रह्मादिजगत इव तस्या अपि मदाश्रितत्वात् मत्सेवया तदनुग्रहस्सम्भवति॥ न च तदर्थं सैव सेव्या ॥ [1]'क्लेशोऽधिकतरस्तेषा'मित्युक्तरीत्या तत्सेवाया क्लेशसाध्यत्वात् ॥ कथं त्वदाश्रया सा बद्धस्य जगतोऽप्याधारस्त्वम् ॥ नित्यमुक्ता हि सा इति चेत् ॥ न केवलमहं बद्धस्यैव जगत आश्रयः किंतु निर्विकारतया अव्ययशब्दितस्य [2]अमृतशब्दितस्य च मुक्तवर्गस्यापि आश्रयः ॥ फलतः शाश्वतस्य शाश्वतमोक्षफलकस्य धर्मशब्दितनिष्कामकर्मणश्च अहमाश्रयः ॥ तदपि मदधीनम् ॥ इदमस्मादधिकमित्युत्तरोत्तराधिक्यगणने नास्मान्मोक्षसुखादधिकं सुखलभ्यते इदमेकमेव अंते गण्यते ॥ अतः ऐकान्तिकस्य असमोत्तमस्य मोक्षसुखस्य चाहमाश्रयः ॥ यः साधनभूतया भक्त्या मां सेवते तस्य निष्कामे कर्मणि प्रवृत्तिमुत्पाद्य तदनुष्ठाप्य तेन चित्तशुद्धिमुत्पाद्य श्रवणमन-

1. १२. ५. 2. अमृतं मोक्षः तद्वान् अमृतः समुदायैकवचनम् ॥

नादिजन्यज्ञानद्वारा साध्यभूतया भक्त्या संयोज्य उक्तसाधनसामग्रीमनायासेन प्रापय्य तया च त्रिगुणात्मकप्रकृतिबन्धान्मोचयित्वा लोकमातुर्लक्ष्म्याः परमानुग्रहभाजनं कारयित्वा तद्द्वारा मत्समीपं प्रापय्य मुक्तकोटावनुप्रवेश्य शाश्वतमोक्षसुखं प्रापयामि ॥ अतो मामुपास्व ॥ तर च तेन भवजलनिधिं ॥ गुणानां बंधकत्वं ज्ञात्वा तत्तरणाय प्रवृत्त्यर्थं गुणतत्त्वकार्योपदेशः ॥ प्रवाहागाधतायां ज्ञाते हि तरणाय नौकासंपादने प्रवृत्तिर्जायते ॥ २७ ॥

अ ॥ ब्रह्मणो निर्गुणस्य सगुणब्रह्मभूतोऽहं प्रतिष्ठा आधारः ॥ प्रतितिष्ठति अस्यामिति प्रतिष्ठा इति निरुक्तिः ॥ सगुणं ब्रह्मापि निर्गुणस्य प्रतिष्ठितत्वात् सगुणमेव ब्रह्म उपाधिविनिर्मोकेण निर्गुणब्रह्मतया निश्चीयते ॥ प्रतिष्ठा शक्तिर्वा ॥ प्रतितिष्ठति अनयेति व्युत्पत्तेः ॥ शक्त्या हि प्रवर्तते लोकः ॥ तद्वत् शक्तिभूतेन मन्मयात्मना सगुणब्रह्मणा निर्गुणं ब्रह्म प्रवर्तते ॥ शक्तिशक्तिमतोरभेदो लोके प्रसिद्धः ॥ सगुणब्रह्मभूतः शक्तिभूतश्चाहमेव निर्गुणं ब्रह्म न तु मत्तोऽन्यत् ॥ निर्गुणं ब्रह्म कीदृशमिति चेत् नाशराहित्यात् अमृतं विकाराराहित्यात् अव्ययं नित्यत्वात् शाश्वतं ज्ञानलक्षणधर्मप्राप्यत्वात् धर्मशब्दितं आनन्दरूपत्वात् सुखं सर्वदेशकालव्यापित्वात् [1]ऐकान्तिकम् ॥ तादृशस्य तस्य निर्गुणस्य सगुणोऽहं प्रतिष्ठा ॥ अतो मद्भजनात्तत्प्राप्तिर्युक्ता ॥ सगुणनिर्गुणयोरभेदान्निर्गुणं ब्रह्म अहमेव ॥ अहं निर्गुणं ब्रह्म सगुणस्य ब्रह्मणः प्रतिष्ठा आधारः रजतस्येव शुक्तिः ॥ शुक्तौ रजतमिव सगुणं ब्रह्म निर्गुणे मयि कल्पितम् ॥ सगुणं ब्रह्म कीदृशमिति चेत् अमृतमित्यादि पूर्ववत् ॥ तादृशस्य सगुणस्य ब्रह्मणः निर्गुणोऽहं प्रतिष्ठा ॥ सर्वसगुणब्रह्मारोपाधिष्ठानं निर्गुणं ब्रह्म अहमेव ॥ मम निर्गुणपरब्रह्माभेदात् मद्भजनेन तत्प्राप्तिर्युक्ता ॥ अहं सोपाधिको निरुपाधिकस्य प्रतिष्ठा अहं निरुपाधिकः सोपाधिकस्य प्रतिष्ठा ॥ तथाऽहं अव्ययस्य अमृतशब्दितमोक्षस्य च प्रतिष्ठा ॥ मत्प्राप्तिरेव मोक्ष ॥ तथा फलतः शाश्वतस्य मोक्षफलकस्य ज्ञानलक्षणधर्मस्य निष्कामधर्मस्य वा च प्रतिष्ठा ॥ मद्रूपयकं ज्ञानमेव ज्ञानं मत्प्रीत्यर्थं कर्मैव कर्म ॥ ऐकांतिकस्य मोक्षसुखस्य च अहं प्रतिष्ठा ॥ मदनुभवसुखमेव मोक्षसुखं तादृशोऽहम् ॥ अतो मामुपास्व ॥ कथं सगुणब्रह्मोपासनं निर्गुणब्रह्मसुखोल्लासद्वारा तत्प्राप्तिहेतुर्भवतीति चेत् एव ॥ नटगृहीतपांचालीसत्यभामादिभूमिकादर्शनतत्तद्वचश्श्रवणसमुपजातपरमानंदवञ्चितविवेकैः प्रेक्षकैः समर्पितं वसनाभरणादि कृतं स्तोत्रादि स्वरूपेण तिष्ठतः तस्य

---

१. एकश्चासौ अन्तः निर्णयः स च एकान्तः एकप्रत्ययः तद्विषयस्य । नानात्वेन भासमानत्वेऽपि वस्तुन एकत्वात् अखण्डैकप्रत्ययगोचरता इति यावत् ॥

मुखोल्लासद्वारा नाटकोत्तरमानंतरं भूमिकामपनीय स्थितः तस्य दर्शनभाषणादिजन्य-सुखप्राप्तिहेतुर्भवति॥ तद्वत् निर्गुणब्रह्मभूमिकाभूतसगुणब्रह्मदर्शनश्रवणाद्येनादि स्वरूपेण स्थितः निर्गुणस्य ब्रह्मणः सुखोल्लासद्वारा उपासकमुमुक्षुश्रितसंसारनाटकोत्तरमानंतरम् भूमिकाभूतोपाधिराहित्येन स्थितः तस्य निर्गुणस्य प्राप्तिं साधयति ॥ न हि भूमिकायामिव नटस्वरूपे स्निह्यति जनः ॥ अविद्यमानाकर्षकगुणगणप्रदर्शनेन वशीक्रियते नटेन लोकः॥ तद्वत् अविद्यमानारोपिताकर्षकरूपशीलदयादाक्षिण्यादिसगुणगतसुगुणगणप्रदर्शनेन वशीक्रियते निर्गुणेन ब्रह्मणा लोकः ॥ अतो मद्भजनेन तत्प्राप्तिर्युक्ता॥ अत एव मां यस्सेवते स ब्रह्मभूयाय कल्पत इत्युक्तम् । उक्तं च मया ॥ १'तेषामहं समुद्धर्ता' इति ॥ अहं अमृतस्य निवृत्तिधर्मज्ञानोभयप्रदर्शनद्वारा अमृतशब्दितमोक्षसाधनस्य अव्ययस्य अनादित्वादनंतत्वाच्च नित्यस्य अपौरुषेयत्वादप्रामाण्यशंकाकलंकशून्यस्य च स्वतःप्रमाणभूतस्य ब्रह्मणः वेदस्य प्रतिष्ठा तात्पर्येण पर्यवसानस्थानम्। उक्तं च मया ॥ २'यदक्षरं वेदविदो वदन्ती'ति॥ ३ सर्वे वेदा यत्पदमामनन्ती'ति श्रुतिः॥ काम्यधर्मवत् फलदानेन नाशाभावात् शाश्वतस्य मोक्षफलप्रदस्य निवृत्तिधर्मस्य च प्रतिष्ठा परमप्राप्यं फलम् ऐकांतिकस्य अव्यभिचरितस्य स्वरूपभूतमोक्षसुखस्य च प्रतिष्ठा आश्रयः अहमेव मोक्षसुखस्वरूप अतो मामुपास्व ॥ वेदवेद्यं कर्मयोगज्ञानयोगाभ्यां प्राप्यं मोक्षसुखस्वरूपं यन्निर्गुणं ब्रह्म तदहमेव॥ अतो मद्भजनेन तत्प्राप्तिः पूर्वं युक्ता युक्ता॥ इति वा ॥ प्रकरणेऽस्मिन् वसिष्ठोक्ताः सप्तापि भूमिकाः अवरोहणक्रमेण प्रतिपादिताः तत्र निष्कामधर्मेण शुद्धचित्तस्य ऐकांतिकसुखलाभहेतुज्ञानयोग्यता जायते इति या शुभकर्मसम्यग्ज्ञानेच्छा सा शुभेच्छा नाम प्रथमा भूमिका॥ सेह ४'शाश्वतस्य च धर्मस्ये'त्यनेनोक्ता॥ शुभेच्छावतो मद्दर्शनकामस्य श्रवणमननादिरूपो वेदांतविचारो विचारणा नाम द्वितीया भूमिका ॥ सेह ५ ब्रह्मणो हि प्रतिष्ठाऽह'मित्यनेनोक्ता ॥ कृतश्रवणादिकस्य वृत्त्यन्तरानन्तरितेन भक्तियोगेन तैलधारावदविच्छेदेन भगवति मनःप्रणिधानं तनुमानसा नाम तृतीया भूमिका ॥ सेह ६'अव्यभिचारेण भक्तियोगेने'त्यनेनोक्ता॥ कृतनिदिध्यासनस्य यत् साक्षात्कारापरपर्यायं अपरोक्षज्ञानं सा सत्वापत्तिर्नाम चतुर्थी भूमिका सेह ७'मानापमानयोस्तुल्यः तुल्यो मित्रारिपक्षयोः' इत्यनेनोक्ता॥ अपरोक्षज्ञानी हि द्वैतं मरुमरीचिकाह्रदसमानं पश्यन् तत्र मानापमानयोर्वा मित्रारिपक्षयोर्वा तुल्य एव भवति॥एतादृशस्य ब्रह्मज्ञानिनः समाधौ व्युत्थानेऽपि विषयेष्वसंसक्तिर्भवति सा असंसक्तिर्नाम पञ्चमी भूमिका॥सेह जीवन्मुक्तव्यवस्थारूपा ८'समदुःखसुखः' इत्या-

१. १२. ७. २. ८. ११. ३. का. २. १५. ४. १४. २७. ५. १४ २७. ६. १४. २६. ७ १४. २५. ८ १४ २४.

दिना १'तुल्यनिंदात्मसंस्तुति 'रित्यन्तेनोक्ता॥ लब्धपञ्चमभूमिकस्य विना परप्रयत्नं स्वयं व्युत्थानाभावेनोपवेशनरूपा पदार्थाभावनी नाम षष्ठी भूमिका॥ सेह २'उदासीनवदासीन' इत्यादिनोक्ता॥ लब्धसप्तभूमिकस्य स्वतः परतो वा व्युत्थानाभावेन तन्मयतया परिपूर्णानंदस्वरूपेणावस्थानं तुरीयगा नाम सप्तमी भूमिका॥ सेह नित्यसमाधिरूपा ३'प्रकाशं च प्रवृत्तिं चे'त्यादिनोक्ता॥ इति ज्ञातव्यम्। उक्ताश्चेमाः सप्त भूमिकाः तृतीये ४'यस्त्वात्मरति'रित्येतद्व्याख्यानावसरे स्पष्टमुपपादिताः॥ २७॥

**वि**॥ अहं अव्ययस्य अमृतस्य च ब्रह्मणः परब्रह्मसमानस्य शुद्धात्मनः प्रतिष्ठा तत्प्राप्तौ हेतुः॥ प्रतितिष्ठति प्राप्नोति अनयेति प्रतिष्ठा इति निरुक्तिः॥ आश्रयो वा॥ तथा अतिचिरकालवर्तित्वेन शाश्वतस्य धर्मस्य कैवल्यशब्दितस्य इन्द्रप्रजापतिभोगापेक्षया अतिशयितस्य ऐश्वर्यस्य च अहं प्रतिष्ठा॥ तथा ऐकांतिकस्य ज्ञानिप्राप्यस्य नित्यस्य मोक्षसुखस्य च अहं प्रतिष्ठा॥ शुद्धात्मस्वरूपस्यापि मदेकनिर्वाह्यत्वात् प्रस्तुतं ब्रह्मभूयं मद्भजनैकलभ्यम्। अतो मद्भजनेन तत्प्राप्तिर्युक्ता॥ न केवलमहं तस्यैव निर्वाहकः किंतु सर्वेषामपि पुरुषार्थानां॥ अतस्तादृशं मामुपास्व॥ मद्भजनमतिमङ्गलम्॥ २७॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते गुणत्रयविभागयोगाख्यार्थप्रदर्शकः चतुर्दशः प्रतिबिंबः॥ १४॥



---

१. १४. २४. २. १४. २३. ३. १४. २२. ४. ३. १७.

|| श्रीः ||

|| श्रीगुरुभ्यो नमः ||

## || अथ पञ्चदशोऽध्यायः ||

---

अर्जुनः || अव्यभिचारेण भक्तियोगेन मां यः सेवते सः गुणान् समतीत्य ब्रह्मभयाय कल्पत इत्युक्तम् || त्वां यः सेवते सः त्वद्भावाय कल्पतां ब्रह्मभावाय कथं कल्पत इत्याशङ्कित, यस्य ब्रह्मणो भावाय कल्पत इत्यभिहितं तस्य ब्रह्मणः अहं प्रतिष्ठा इत्युक्तम् गुणानामत्ययः कः ब्रह्मभावप्राप्तिः का || भक्तियोगः कः माहात्म्यज्ञानपूर्वक-सुदृढस्नेहो भक्तिरितिचेत् किं तदतिशयितं माहात्म्यं यदज्ञानपूर्वकसुदृढस्नेहो भक्तिः || गुणानतीत्य ब्रह्मभूयाय कल्पते इत्यनेन गुणात्ययात् पूर्वं गुणबन्धः अज्ञानमोहादिभिः रागद्वेषादिभिः सुखदुःखादिभिश्च संसारे भ्राम्यतीत्युक्तं भवति || स च संसारबन्धः कीदृशः योऽयं भक्तियोगशस्त्रेण छेद्यः इत्यादिकं सम्यक् विविच्य उपदिश्य मामुद्धर ||

### || श्रीभगवानुवाच ||

ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययम् ।
छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् || १ ||

ऊर्ध्वेति । ऊर्ध्वाः विष्णुचिदचित्प्रकृतयः मूलानि यस्य सः ऊर्ध्वं उत्कृष्टं ब्रह्म मूलं यस्य सः ऊर्ध्वः उत्कृष्टः चतुर्मुखः मूलं यस्य सः इति वा ऊर्ध्वमूलः तं अधः तदवराः शाखाः यस्य सः अधश्शाखः तं न विद्यते व्ययः नाशः यस्य सः अव्ययः तं छंदांसि वेदाः यस्य पर्णानि पत्राणि तं अश्वत्थं प्राहुः वदन्ति || यः तं अश्वत्थं वेद सः वेदं वेत्तीति वेदवित् वेदतात्पर्यज्ञः इत्यर्थः || १ ||

द्वै || भावाः द्विविधाः चेतना अचेतनाश्च || उत्तमवाचिना ऊर्ध्वशब्देन चेत-नेषूत्तममेकं अचेतनेषूत्तममेकं च ग्राह्यम् || चेतनेषु उत्तमा लक्ष्मीः चित्प्रकृतिशब्द-

ता ॥ अचेतनेषु उत्तमा जड्प्रकृतिरचित्प्रकृतिशब्दिता । उभाभ्यामुत्तमः सर्वोत्तमो भगवान्नारायणः ॥ स च ब्राह्मः । एते त्रय ऊर्ध्वाः प्रकृतिनिर्मितजगद्वृक्षस्य मूलानीव॥ एभ्यः त्रिभ्यः अधः अवराः पञ्च भूतानि महदहंकारबुद्धयश्चेत्यष्टौ पदार्थाः तदभिमानिनः ब्रह्मादयो देवाश्च अस्य जगद्वृक्षस्य शाखा इव॥ जगद्वृक्षोऽयमश्वत्थः । किमर्थं जगतो वृक्षत्वकल्पना इति चेत् छेद्यत्वसूचनेन छेदनसाधनशास्त्रसंपादनप्रवृत्त्युत्पादनाय ॥ किं तच्छेदनमावश्यकमिति चेत् कस्य चित् प्राप्तव्यमेकमभिलषितं स्थानमुद्दिश्य स्वगृहान्निर्गत्य गच्छतः पथि यदि सुमहानेको वृक्ष तिर्यक् पतितः स्यात् तर्हि स तमच्छित्वा ततः परं गन्तुं न शक्नोति ॥ छित्त्वैव गन्तव्यस्थानं प्राप्नोति ॥ तद्वत् प्राप्तव्यं मोक्षस्थानमुद्दिश्य तन्मार्गे श्रवणमननादौ गच्छन् पुरुषः प्रकृतिप्राकृतसमुदायं तिर्यक्पतितवृक्षवत् गमनप्रतिबन्धकं भक्तिविरक्तिरूपेण शस्त्रेण छित्त्वैव तस्मिन्मार्गे यावद्गन्तव्यं तावद्गत्वा प्राप्तव्यं मोक्षस्थानमाप्नोति अतः तच्छेदनमावश्यकं इत्यर्थस्य बोधनाय वृक्षत्वकल्पना ॥ अस्तु नाम वृक्षत्वकल्पना अश्वत्थवृक्षत्वेन कल्पना कुतः इति चेत् रूपकविधया यः कश्चन महान् वृक्ष उपमानीकरणीयः ॥ यदि वटतिन्त्रिणीचूतादय उपमानीक्रियेरन् तर्हि तत्तद्वाचकपदप्रयोगः कर्तव्यः स्यात् ॥ वटादिशब्दप्रयोगः प्रकृतस्य विवक्षितस्य जगद्वृक्षस्य अविश्वसनीयतारूपे प्रकृते विवक्षिते अर्थे नोपयुज्येत ॥ अतोऽश्वत्थवृक्षत्वेन कल्पना ॥ अश्वत्थवृक्षस्य उपमानीकरणे तद्बोधनाय कृतः अश्वत्थशब्दप्रयोगः श्वः न तिष्ठतीति व्युत्पत्त्या अश्ववत् अतिवेगेन गमनशीलतया वर्तत इति व्युत्पत्त्या वा जगतो नश्वरत्वेन अविश्वसनीयतारूपेऽर्थे उपयुज्यते ॥ अतएव १'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थ सनातन' इति श्रुतावपि अश्वत्थवृक्षत्वेन निरूपणम् ॥ अव्ययोऽयं वृक्षः प्रतिक्षणं नाशसत्त्वेऽपि २'धाता यथापूर्वमकल्पयत्' ॥ ३'समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च' इत्याद्युक्तरीत्या प्रतिकल्पं नामरूपसाम्येनावस्थानात् प्रवाहरूपेण नित्यः ॥ उक्तं च मया ॥ ४'हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते' इति॥ जगद्वृक्षोऽयं काममोक्षरूपादिफलः ॥ लोके पर्णोत्पत्तिः फलोदयं ब्रूते ॥ जगद्वृक्षस्य कामरूपं मोक्षरूपं च फलं वेदा ब्रुवते ॥ अतो जगद्वृक्षस्य वेदाः फलबोधकत्वेन पर्णस्थानीयाः ॥ एतादृशं जगद्वृक्षं श्रुतयः तज्ज्ञाश्च प्राहुः ॥ तं अवश्यं जानीयात् ॥ प्रतिबन्धकत्वेन च्छेदनस्यावश्यकतां ज्ञात्वा छे-

---

१. काठ ६. १. २. ना. १. १४. ३ १. ३ ३०. सूत्रम् ॥ ४. ९. १०.

दनसाधनशस्त्रसम्पादनप्रवृत्त्यर्थं छेद्यमवश्यं हि ज्ञातव्यम् ॥ यो जानाति इमं वृक्षं स एव वेदतत्वज्ञः नान्यः अवश्यज्ञातव्यार्थज्ञानवान् हि ज्ञानीत्युच्यते ॥ वेदः ज्ञेयः प्राप्यश्च परमात्मा तं विद्वान् तेन तं प्राप्तवांश्च भवेत् ॥ १ ॥

कृष्ण ॥ अधश्चोर्ध्वं प्रसृतास्तस्य शाखाः गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥

अधश्चेति ॥ तस्य अश्वत्थस्य शाखाः अधः ऊर्ध्वं च प्रसृताः संवृत्ताः गतिमन्तः इति वा ॥ गुणैः प्रवृत्ताः गुणप्रवृत्ताः । विषयाः प्रवाला इव यासां ताः विषयप्रवालाः ॥ मनुष्याणां लोकः मनुष्यश्चासौ लोकश्च इति वा मनुष्यलोकः तस्मिन् कर्म अनुसृत्य बध्नन्तीति कर्मैव अनुबन्धः कारणं कर्मानुबन्धः सः एषां अस्तीति वा कर्माणि अनु पश्चात् बंधुं शीलं एषामस्तीति वा कर्मैव अनुबन्धः पश्चाद्भावि फलं कर्मानुबन्धः स एषामस्तीति वा कर्माण्येव अनुबन्धीनि इति वा कर्मानुबन्धीनि मूलानि अधः ऊर्ध्वं च अनुसन्ततानि संवृत्तानि ॥ २ ॥

जगद्वृक्षस्य शाखाः याः पूर्वोक्ताः ताः महदहंकारादयोऽष्टौ पदार्थाः तदभिमानिनश्च ॥ तस्य वृक्षस्य शाखास्थानीयाः ते स्वापेक्षया अपकृष्टे कार्यभूते शरीरादौ स्वापेक्षया उत्कृष्टे कारणभूते अव्यक्ते च सूक्ष्मरूपेण संबन्धवन्तः ॥ ताश्च शाखाः सत्वादिगुणैः प्रवृद्धाः ॥ प्रधानमूलेन काण्डवृद्धिः अवान्तरमूलैः शाखावृद्धिः ॥ अत्र सत्वादिगुणानां अवान्तरमूलत्वात् तैः शाखास्थानीयमहदहंकारादिपरिणामवृद्धिः ॥ पल्लवाश्च तासां शाखानां विषया एव ॥ तात्कालिकसुखहेतुत्वाविमर्दासहत्वसाम्यात् ॥ मूलानि विष्णुः जडाजडप्रकृती सत्वरजस्तमांसि च इत्येतद्रूपाणि अधःशब्दोक्तशाखास्थानीयेषु महदहंकारादिषु जडेषु महदहङ्काराद्यभिमानिदेवताप्रभृतिषु चेतनेषु च अनुसन्ततानि संवृत्तानि ॥ सर्वत्र तेषामनुसन्ततत्वे सर्वेषां साम्येन स्थितिः स्यात् इति चेत् ॥ तानि मूलानि मनुष्यलोके कृतं कर्म अनुसृत्य बध्नन्ति ॥ तत्तज्जीवकर्मानुसारेण तत्र तत्र तेषां सम्बन्धात् न सर्वेषां साम्येन स्थित्यापत्तिः ॥ २ ॥

कृष्णः ॥ न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ॥

नेति ।। अस्य अश्वत्थस्य रूपं स्वरूपं इह लोके तथा नोपलभ्यते न ज्ञायते ।। अन्तः नोपलभ्यते ।। आदिश्च नोपलभ्यते ।। संप्रतिष्ठा स्थितिः मध्यमावस्था च नोपलभ्यते ।। सम्यक् प्रतितिष्ठति अस्यामिति प्रतिष्ठा आश्रयः सा च नोपलभ्यते इति वा ।। सम्प्रविष्टइति पाठान्तरं ।। आदिकर्ता च नोपलभ्यते ।। अन्तकर्ता च नोपलभ्यते ।। सर्वत्र अन्तः प्रविष्टोऽपि ईश्वरः नोपलभ्यते ।। ३।। ।।

**अस्य जगद्वृक्षस्य रूपं यथा वर्तते तथा इह लोके नोपलभ्यते न ज्ञायते दुरवगमत्वात् ॥ प्रतिक्षणपरिणामित्वेन यथावस्थितस्वरूपेण स्थित्यसंभवात् ॥ अस्य वृक्षस्य आदिः उत्पत्तिः नोपलभ्यते ॥ अन्तः नाशः नोपलभ्यते ॥ संप्रतिष्ठा स्थितिश्च नोपलभ्यते ॥ आदिकर्ता अन्तकर्ता अन्तः १ प्रविष्टश्च विष्णुः तादृशोऽपि सः नोपलभ्यते ॥ एतादृशो जगद्वृक्षः ॥ ३॥ ॥**

**अ ॥ कृष्णः॥ ऊर्ध्वं उत्कृष्टं ब्रह्म संसारवृक्षस्य अव्यक्तमायाशक्त्या मूलं ॥ उक्तं च मया २' मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरं मिति ॥ अधः अवराः ब्रह्मादयः महदहङ्कारादयश्च शाखाः संसारवृक्षस्य ॥ अधः ऊर्ध्वादधोऽधः सोपानस्थानीयाः अव्यक्तमहदहङ्कारपंचतन्मात्राषोडशविकारहिरण्यगर्भविराट्प्रजापतिसुरगन्धर्वासुर - नरतिर्यक्स्थावररूपाः शाखा इव यस्य सोऽधःशाखः ॥ तादृशः सोऽयं अश्वत्थः नश्वरत्वात् श्वो न तिष्ठति ॥ प्रवाहतोऽनादिरनन्तश्च ॥ मूढानामनाद्यनन्तत्वेन भासमानश्च ॥ वक्ष्यते च ॥ 'न रूपमस्येह तथोपलभ्यत' इति ॥ अस्य संसारवृक्षस्य कर्मकाण्डात्मकाः वेदाः तत्ववस्तुच्छादनात् रक्षणाच्च पर्णानि ॥ पर्णानि हि वृक्षगतफलपुष्पादिकं छादयन्ति वृक्षं रक्षन्ति च ॥ ३" ध्रुवा द्यौर्ध्रुवा पृथिवी ॥ ध्रुवं विश्वमिदं जगत् ॥ ध्रुवा ह पर्वता इमे ॥ ध्रुवो राजा विशामयं " इत्याद्यर्थवादेन वृक्षगतं अनित्यत्वदुःखरूपत्वादिदोषजातं छादयन्तः कर्मतत्साधनतत्फलप्रकाशनेन रक्षन्तः नित्यत्वादिप्रतिपादनेन शोभयंतो वेदाः पर्णानि॥ पर्णानि हि वृक्षगतदोषजातं छादयन्ति वृक्षं रक्षन्ति शोभयन्ति च॥ कर्मफलैः छायास्थानीयैः सर्वजनसमाश्रयणीयतामापादयन्तो वेदाः वृक्षस्यास्य पर्णानि ॥ पर्णानि हि छायामुत्पाद्य तया वृक्षस्य सर्वजनसेव्यतामापादयन्ति ॥ पर्णसंघातवत् शोभाहेतुत्वात् वेदाः तदुपलक्षिताः यज्ञादयश्च वृक्षस्यास्य पर्णानि ॥ एतादृशं संसारवृक्षं वेदाः प्राहुः ॥ तं**

१. न च संप्रविष्टः इति पाठान्तरम् ॥ २. ९. १०. ३ तै. ब्रा. २. ४. २. ८.

यः वेद स एव वेदवित् ॥ वेदोक्तस्य समूलस्य सशाखस्य साग्रस्य संसारवृक्षस्य परिज्ञानात् ॥ यः मिथ्यात्वेन जानाति स एव वेदतात्पर्यज्ञः ॥ अज्ञास्त्वेतं वृक्षं सत्यत्वेनजानन्ति ॥ हेयत्वज्ञानेन तदुच्छेदनाय छेदनोपायिकशास्त्रसम्पादनप्रवृत्त्यर्थं अत्र ह्यवज्ञातव्योऽयं संसारवृक्षः ॥ संसारस्य वृक्षत्वेन रूपणमत्र केनावगम्यते इति चेत् मूलशाखापर्णानां प्रदर्शनात् वृक्षवाचकाश्वत्थशब्दप्रयोगाच्च वृक्षत्वेन रूपणमवगम्यते ॥ किमर्थं वृक्षत्वेन रूपणमिति चेत् प्राप्तव्यप्राप्तिप्रतिबन्धकत्वेन छेदनावश्यकतासूचनार्थम् ॥ कथं वृक्षत्वरूपणमात्रेण च्छेदनावश्यकतासूचनम् ॥ न हि वृक्षत्वमात्रेण च्छेदनीयता ॥ न हि वृक्षाः वृक्षत्वमात्रेण च्छिद्यन्ते ॥ किंतु मार्गे तिर्यक् पतितः गमनप्रतिबन्धक एव वृक्षः छिद्यते ॥ इति चेत् मार्गे तिर्यक्पतित[1]महाश्वत्थवृक्षत्वरूपणमेवात्र विवक्षितम् ॥ तत्कुतोऽवगम्यते इति चेत् 'ऊर्ध्वमूलमधःशाख'मित्युक्तेरवगम्यते ॥ ऊर्ध्वमूलत्वं अधःशाखत्वं च उन्नमितनदीकूलसंरोपितमहावातोन्मूलिततिर्यक्पतितवृक्षस्यैव संभवति ॥ दृश्यते च मार्गे तिर्यक्पतितस्य महतो वृक्षस्य मूलानि नदीकूलोपरि ॥ शाखाश्चाधः पथि ॥ स च वृक्षः अवश्यच्छेद्यः ॥ अच्छित्वा च तं परत्र गन्तुं न शक्यते ॥ तद्वदमुं वृक्षं छित्त्वैव मोक्षस्थानमासातव्यम् ॥ अतोऽयं ज्ञेयः छेद्यश्च ॥ ऊर्ध्वं आदिकारणं लिङ्गशरीरं मूलं यस्य तादृशं अधः अवराः हस्तपादाद्यवयवाः शाखाः यस्य तादृशं छन्दांसि वासना एव पर्णानि आच्छादनस्थानीयानि यस्य तादृशं दुःखरूपमपि फलवासनाभिः सुखरूपतयाऽवभासमानं सूक्ष्मशरीरमूलकं करचरणाद्यवयवशाखाविशिष्टं स्थूलदेहरूपं अश्वत्थवृक्षमाहुः ॥ यस्तं वेद स वेदवित् इति वा ॥ ऊर्ध्वः सूक्ष्मरूपेण सृष्टः सूक्ष्मप्रपञ्चः मूलं यस्य तादृशं अधः शाखास्थानीयाः ब्रह्मेन्द्रादिलोकाः यस्य तादृशं छन्दांसि वेदाः यस्य पर्णानीव प्रकाशकाः तादृशं ब्रह्मांडात्मकस्थूलप्रपञ्चरूपं अश्वत्थं प्राहुः ॥ तं यः वेद स वेदवित् इति वा ॥ १ ॥

कृष्णः ॥ तिर्यक्पतितस्य वृक्षस्य शाखाः काश्चित् अधः काश्चित् ऊर्ध्वं च प्रसृता दृश्यन्ते ॥ मूलानि कानिचित् ऊर्ध्वमुद्गतानि कानिचित् अधस्सङ्गतानि च दृश्यन्ते ॥ पूर्वं ऊर्ध्वमूलत्वं अधःशाखत्वं च सामान्यतो निरूपितम् ॥ विशेषममुं निरूपयितुं तस्यैव संसारवृक्षस्य पूर्वोक्तावयवकल्पनापेक्षया अपरा अवयवकल्पनोच्यते ॥ संसारवृक्षस्य शाखाः अधः ऊर्ध्वं च प्रसृताः ॥ कास्ताः शाखा इति चेत्

१. गङ्गातरङ्गनुद्यमानोत्तुङ्गतत्तीरात्तिर्यङ्निपतितं अधोन्मूलितं मारुतेन महान्तमेकमश्वत्थमुपमानीकृत्य रूपककल्पनेति द्रष्टव्यम् ॥

ज्ञानकर्मफलभूताः पुण्यपापफलभूताः आब्रह्मस्तंबपर्यंतं देहाः शाखाः उपशाखास्थानीयाः ताः मनुष्यादिस्थावरांतमधः मनुष्येभ्यः ब्रह्मपर्यंतं ऊर्ध्वं च प्रसृताः ॥ ताश्चावश्यं छेदनीयाः ॥ न हि तच्छेदनमंतरेण वृक्षच्छेदनं सम्भवति ॥ यथा विविधविचित्रानेकदेहसम्बंधो न स्यात् तथा प्रयतनीयम् ॥ न हि तासां छेदनं सुशकम् ॥ वृक्षस्य सात्त्वत्वादिगुणैः प्रवृद्धा हि ताः ॥ तद्वत् इमे देहाः गुणैः सत्त्वादिभिः तत्कार्यैः कामक्रोधादिभिः पुण्यपापादिभिश्च उपर्युपरि वर्धंते न क्षीयंते ॥ अतो महता प्रयत्नेन च्छेदनीयाः ॥ ताश्च शाखाः विषयप्रवालाः शाखाभ्यः पल्लवानीव विषयाः देहेभ्यः अंकुरीभवन्तीव ॥ पल्लवानि शाखाग्रसंबद्धानि दृश्यंते ॥ शब्दस्पर्शरूपरसगन्धरूपा विषयाः शाखाग्रस्थानीयाभिः इन्द्रियवृत्तिभिः संबन्धा अनुभूयन्ते॥ विषयाः पल्लवानीव आपातरमणीयाः विमर्दासिहाश्च ॥ इंद्रियवृत्तिभिः सम्बद्धा विषयाः कामक्रोधाद्युत्पादनद्वारा तत्तत्कर्माणि कारयंतः उपर्युपरि देहान् वर्धयन्ति॥ कुतः शाखाः गुणैर्वर्धंते इति चेत्॥ मूलानि तत्तद्भोगजनितरागद्वेषादिवासनालक्षणानि धर्माधर्मप्रवृत्तिकारणानि अधः चशब्दात् ऊर्ध्वं च प्रसृताः याः शाखाः अधमाः उत्तमाश्च देहाः तेषु लिङ्गदेहेषु अनुसन्ततानि अनुप्रविष्टानि तानि [1]मनुष्यदेहे कर्म [2]अनुबन्धुं पश्चाज्जनयितुं शीलं येषां तानि तादृशानि॥ मनुष्यश्चासौ लोकः देहः स च मनुष्यलोकः इति व्युत्पत्तिः॥ शाखाः पूर्वकल्पनोक्ताः ब्रह्मेंद्रादयो जीवाः तेषु अवराः दुष्कृतिनः अधः पश्वादियोनिषु जायन्ते । उत्तमाः सुकृतिनः ऊर्ध्वं देवादियोनिषु जायन्ते॥ तत्रतत्र देहान् प्राप्नुवन्ति ॥ शाखास्थानीयोत्तमाधमजीवसंबद्धोच्चावचदेहाः गुणप्रवृद्धाः विषयप्रवालाः इति वा ॥ अन्यत् समं ॥ सर्वत्र विषयेषु कामान् जनयन्त्यः कर्माणि कारयंत्यः तत्तद्भोगजनितरागद्वेषादिवासनाः लिङ्गदेहेषु सातत्येन तिष्ठन्ति ॥ ताः कामान् जनयन्ति॥ कामाश्च कर्माण्युच्चावचानि कारयन्ति ॥ कर्माणि च पुनःपुनः शरीराण्युत्पादयंति ॥ एवं वासनादिभिः कामादिभिः पुण्यपापादिभिश्च सर्वतः शरीरपरम्परा वर्धते ॥ ततः संसारवृक्षारूढानां विषयसुखाशापाशबद्धानां जननमरणदुःखप्रवाहपातं विना न कथञ्चित् न क्वचित् न कदाचिदपि मोक्षः सिध्यति ॥ अतोऽवान्तरमूलैस्सह [illegible]सनाभ्यः कर्माणि कर्मभ्यो वासना इत्यनवरतसन्तानोऽयं संसारवृक्षः प्रयत्नेन छेदनीयः॥ तस्य पूर्वकल्पनोक्ताः करचरणाद्यवयवरूपाः शाखाः अधः ऊरुजानुपादादिरूपेण ऊर्ध्वं करोदरवक्षोग्रीवामुखादिरूपेण प्रसृताः इति वा ॥ अन्यत्समं ॥ तस्य

१. आगवर्गे इति वा ॥ २. कर्म अनुबन्धः पश्चाज्जनि फलं तद्वन्ति ॥

पूर्वकल्पनोक्ताः शाखास्थानीयाः लोकाः अधः देवपितृमनुष्यलोकादिरूपेण ऊर्ध्वं महर्जनस्तपोलोकादिरूपेण प्रसृताः ॥ अतः पाताळादौ ऊर्ध्वं च स्वर्गादौ मूलानि यक्षरक्ष प्रभृतीनि देवगंधर्वादीनि च अनुसन्ततानि सम्यक् विस्तृतानि तानि मनुष्य-लोके कर्माणि कृत्वा इतरलोकेषु तत्फलं भुञ्जत इत्यर्थः ॥ इति वा ॥ २ ॥

कृष्णः ॥ अस्य संसारवृक्षस्य रूपं 'ऊर्ध्वमूलमधःशाख'मित्यादिनोक्तम् स्वरूपं यथा वर्तते तथा इह लोके केनापि न ज्ञायते १'ध्रुवा द्यौ 'रित्यादिप्ररोचनश्रुत्या नित्यत्वेन सुखरूपत्वेन च यथा वर्णितं तथा केनापि नोपलभ्यते ॥ अस्य शुक्तिरजत-रज्जुसर्पादेरिव स्वरूपं यथा पूर्वमज्ञानदशायां उपलभ्यते तथा ज्ञानदशायां सम्यग्दृशा वीक्ष्यमाणं इह जीवत्येव देहे नोपलभ्यते॥ तेनास्य शुक्तिरजतादेरिव मिथ्यात्वं सिद्धम् ॥ अस्य वृक्षस्य अन्तः पर्यवसानं नोपलभ्यते॥ आदिश्च नोपलभ्यते॥ संप्रतिष्ठा स्थितिः मध्यावस्था सा च नोपलभ्यते॥ अस्य अन्तः नोपलभ्यते आदिश्च नोपलभ्यते॥ उपादानस्य मूलाज्ञानस्य आद्यन्तशून्यत्वादयमप्याद्यन्तशून्यः ॥ संप्रतिष्ठा लयस्थानं च भूमिरिव वृक्षस्य नोपलभ्यते ॥ यद्ययं ब्रह्मणो विकारः तर्हि ब्रह्मणि लीयेत ॥ नचाय ब्रह्मणो विकारः ॥ तस्य निर्विकारत्वात् ॥ किंतु अज्ञानमस्योपादानं तस्मिंश्च ज्ञानेन नष्टे समूलस्यास्योच्छेदो भवति ॥ प्रतिष्ठाशब्दितस्य लयस्थानस्य मूलाज्ञानस्य ब्रह्मज्ञानेन नाशो न पुनरस्य प्ररोहः ॥ अतो दुरुच्छेदोऽयं संसारवृक्षः अवश्यच्छेद्यश्च ॥ २॥ ॥

वि ॥ संसारवृक्षस्य सर्वेषामुपरि वर्तमानत्वेन ऊर्ध्वशब्दोक्तः परमेष्ठी मूलं तस्मात् अवरत्वेन अधःशब्दोक्ताः देवगंधर्वयक्षादयः नरपशुमृगपक्षिक्रिमिकीटपतंग-स्थावरान्ताः शाखाः ॥ तिर्यक्पतिताश्वत्थवृक्षतुल्यत्वात् नश्वरत्वाच्च अश्वत्थशब्दवाच्यो वृक्षोऽयं ॥ अयं संसारवृक्षः प्रवाहतो नित्यः ॥ एतमश्वत्थं श्रुतय एतादृशमाहुः ॥ अस्य संसारवृक्षस्य कर्मकाण्डात्मकाः वेदाः यथावस्थितस्वरूपाच्छादनेन २'वायव्य श्वेतमालभेत भूतिकामः' ३'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादि-फलप्रतिपादनेन च वर्धकतया पर्णानि ॥ पर्णानि हि छादयन्ति वर्धयन्ति च वृक्षम् ॥ पर्णैर्हि वृक्षो वर्धते ॥ संसाराख्यमश्वत्थवृक्षं यो वेद स वेदवित् ॥ अतोऽयमवश्यं ज्ञातव्यः ॥ छेद्यवृक्षस्वरूपज्ञानं छेदनोपायज्ञानोपयोगि ॥ छेदनोपायं ज्ञात्वा तत्संपादनप्रवृत्त्यर्थं संसारवृक्षोऽयमवश्यं ज्ञातव्यः ॥ १ ॥

---

१. तै. ब्रा. ३. ४. ३. ८. २. तै. सं. २. १. १. १. ३. तै. सं. २. २. १. १.

कृष्णः ॥ तस्य संसारवृक्षस्य शाखाः अधश्चोर्ध्वं १च प्रसृताः॥ शाखास्थानीयाः जीवाः तैस्तैः कर्मभिः अधश्च मनुष्यपश्वादिरूपेण ऊर्ध्वं च गन्धर्वयक्षदेवादिरूपेण २ प्रसृता भवन्ति ॥ ताश्च गुणप्रवृद्धाः विषयप्रवालाः ॥ अधश्चोर्ध्वं च प्रसृतेः किं मूलमितिचेत् ॥ अधः विद्यमाने मनुष्यलोके अनुबन्धीनि कर्माण्येव मूलानि अनुसन्ततानि ॥ ३मनुष्यलोके क्रियमाणानि कर्माण्येव अधश्चोर्ध्वं च प्रसृतेः कारणानि ॥ मनुष्यत्वावस्थायां कृतैर्हि कर्मभिः अधः मनुष्यपश्वादयः ऊर्ध्वं च देवादयो भवन्ति॥२॥

कृष्णः ॥ इह लोके अस्य संसारवृक्षस्य चतुर्मुखमूलत्वं मनुष्याग्रत्वं मनुष्यत्वे कृतैः कर्मभिः अवान्तरमूलभूतैः पुनरप्यधश्चोर्ध्वं च प्रसृतशाखत्वं इत्यादिकं स्वरूपं यथा निर्दिष्टं यथा च वर्तते तथा संसारिभिर्नोपलभ्यते ॥ अस्य नाशः नोपलभ्यते ॥ आदिश्च नोपलभ्यते ॥ गुणसङ्गः आदिरिति गुणेष्वसङ्गः अन्त इति न ज्ञायते ॥ अज्ञानमस्याश्रय इति न ज्ञायते ॥ संप्रतिष्ठा आश्रयः ॥ सं प्रतितिष्ठत्यस्यामिति संप्रतिष्ठा इति व्युत्पत्तिः ॥ अस्यां योजनायां पूर्वोक्तं सर्वमप्यूह्यम् ॥ ३॥ ॥

अर्जुनः ॥ किमर्थमुक्तरूपस्याश्वत्थवृक्षस्य निरूपणम् कृतम् ॥ ज्ञानार्थमिति चेत् किं तज्ज्ञानस्य प्रयोजनम् ॥ छेदनीयस्य तस्य ज्ञानेन च्छेदनोपायिकशस्त्रसंपादनप्रवृत्युत्पादनं प्रयोजनं इति चेत् किं तच्छस्त्रं येनायं वृक्षः छेद्यः छित्वा च किं कर्तव्यम् ॥ ब्रूहि ॥

कृष्णः ॥ अश्वत्थमेनं सुविरूढमूलं असङ्गशस्त्रेण दृढेन छित्वा ॥ ३ ॥

ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ॥

तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

---

१. अध श्चोर्ध्वं चेति पाठः । २. पूर्वोक्तं नैमित्तिकसृष्टिप्रक्रियया ॥ इदं तु नित्यसृष्टिप्रक्रियया ॥
३. मनुष्यलोक एव कर्माधिकारज्ञापनायेदम् ।

अश्वत्थमिति ॥ सु सम्यक् विशेषेण रूढानि सुविरूढानि सुविरूढानि मूलानि यस्य सः सुविरूढमूलः तं एनं असङ्ग दृढेन सङ्गस्याभावः असङ्गः एव अशब्दवाच्ये परमात्मनि सङ्गः असङ्गः असङ्ग एव शस्त्रं असङ्गशस्त्रं तेन छित्वा ततः छेदनानन्तरं यस्मिन् गताः भूयः पुनः न निवर्तन्ति न निवर्तन्ते तत् पदं ज्ञायते प्राप्यते च इति पदं ज्ञेयं प्राप्यं स परं ब्रह्म मोक्षस्थानं शुद्धात्मस्वरूपं वा परिमार्गितव्यं विचार्य ज्ञातव्यं प्राप्यं च ॥ ततः परमिति पाठान्तरम् ॥ ३ ॥

तमेवेति ॥ यतः यस्मात् पुराणी पुरातनी अनादिकालप्रसृता प्रवृत्तिः उक्तरूपाश्वत्थवृक्षप्रवृत्तिः प्रसृता जाता तमेव आद्यं पुरुषं परमात्मानं प्रपद्ये प्रपद्येत ॥ प्रपत्तिः शरणागतिः तां कुर्यात् ॥ शरणं व्रजेदित्यर्थः ॥ इति शब्दमध्याहृत्य प्रपद्ये इति परिमार्गितव्यमिति वा ॥ पपद्येत इति पाठान्तरम् ॥ प्रपद्येयत इति पाठे पपद्य इयतः इति च्छेदः ॥ तं प्रपद्य शरणीकृत्य इयतः एतावतः अज्ञाननिवृत्यादेः प्रयोजनस्य प्रवृत्तिः पुराणी प्रसृता अनादिकालतो जाता ॥ इति च ॥ ४ ॥

[1]सुष्ठु विविधरूढमूलोऽयं अश्वत्थः ॥ कर्मवासनाः कर्माणि च अवान्तरमूलानीत्युक्तम् ॥ तानि च मूलानि सम्यक् विविधं रूढानि अतो दृढेनैव शस्त्रेण च्छेद्यः ॥ किं तच्छस्त्रं येनासौ च्छेद्य इति चेत् दृढेन असङ्गशस्त्रेण च्छेदनीयोऽयं वृक्षः॥ कोसावसङ्ग इति चेत् ॥ [2]विषयेषु सङ्गशब्दितरागवर्जनलक्षणवैराग्यरूपः ॥ किं विषयवैराग्यमात्रेण उक्तरूपाश्वत्थवृक्षच्छेदनं भवतीति चेत् ॥ अशब्दवाच्ये परमात्मनि सङ्ग-

---

१. छे. सुष्ठु विशेषेण रूढप्रबलाविष्णुसिदचित्प्रकृतिरूपप्रधानबन्धमूलः सत्त्वरजस्तमोगुणावान्तरमूलः ज्ञानासिना छेत्तव्यः ॥ छेदनं क्वचित् नाशनं क्वचित् दूरीकरणं क्वचित् विविच्य विमर्शनम् ॥ २. अ. देहादितादात्म्यबुद्धिः सङ्गः तद्वर्जनं असङ्गः इति च ॥

शब्दितभक्तिरूपो योऽसङ्गः तेन च शस्त्रेण च्छेद्यः॥ १तदुभयरूपशस्त्रैकच्छेद्योऽयमश्वत्थवृक्षः ॥ न सङ्गः असङ्गः ए सङ्गः अ सङ्गः इति व्युत्पत्तिः ॥ भक्तिविरक्त्योः रावश्यकत्वं उक्तं मया॥ २'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते' ३'इन्द्रियार्थेषु वैराग्यं' इति च॥ ४'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी' इति ५'आत्मविनिग्रह' इति च॥ यदि भक्तिविरक्ती अदृढे स्यातां तर्हि तद्रूपशस्त्रेण वृक्षोऽयं छेत्तुं न शक्यते ॥ न हि अदृढेन शस्त्रेण सम्यक् रूढमूलो वृक्षः छेत्तुं शक्यते ॥ अतो भगवति भक्त्या अन्यत्र विरक्त्या च सुदृढया भवितव्यम् ॥ सुदृढं चेत् शस्त्रं तेन रूढमूलोऽपि वृक्षः ६अनायासेन च्छेत्तुं शक्यः॥ अतः दृढेन असङ्गशस्त्रेण उक्तरूपमश्वत्थवृक्षं छित्वा ततः अनन्तरं ततः असङ्गात् हेतोः ७ज्ञेयं प्राप्यं च परं ब्रह्म तत्स्थानं शुद्धात्मस्वरूपं वा अन्वेष्टव्यम् विचार्य ज्ञातव्यम् ॥ ८'सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इति श्रुतिः ॥ तद्ब्रह्म ९तस्माज्जगद्वृक्षादूर्ध्वं व्यवस्थितम् ॥ १०तस्य जगद्वृक्षस्य आश्रयभूतम् ॥ तद्ब्रह्म प्राप्ताः न पुनर्निवर्तन्ति न पुनर्निवर्तते ॥ ११'न च पुनरावर्तते न च पुनरावर्तते' इति श्रुतिः ॥ सूत्रं च १२'अनावृत्तिः शब्दादनावृत्तिः शब्दा'दिति ॥ उक्तं च मया ॥ १३'मामुपेत्य पुनर्जन्म'॥ १४'मामुपेत्य तु कौन्तेय'॥ १५'यं प्राप्य न निवर्तन्ते' इत्यादि॥ भक्तिविरक्तिभ्यां उक्तरूपाश्वत्थवृक्षच्छेदनमकृतवता ब्रह्म विचार्य ज्ञातुं न शक्यम् ॥

१. अत्र, "सतां प्रसंगान्मम" इत्यादयः ( २० पुटे ) श्लोकाः अनुसन्धेयाः ॥ दृष्टश्रुतात्मद्र्विणानुचिन्तया ॥ इति पाठान्तरम् ॥ 'शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सम्यग्विमृशेषु हेतुः॥ असङ्ग आत्मव्यतिरिक्तवस्तुनि दृढा रतिर्ब्रह्मणि निर्गुणे च या' ॥ १ ॥ इति भाग. ४. २२ श्लोकश्च ॥ २. ६. ३५. ३. १३. ९. ४. १३ ११. ५. १३ ८. ६. सुदृढेन असंगशस्त्रेण अश्वत्थोऽयमनायासेन च्छेत्तुं शक्य इति सूचयितुं "छित्त्व" (६. १. ७३. गुर्वविहितनुगागमानाश्रयणेन सुखोच्चारणं कृतं 'दृढेन छित्वा' इति ॥ ७. आ. ततः पदमिति पाठः ॥ द्वि. ततः परं ततः पदं इति च पाठः ॥ त्रि. ततः पदमिति पाठः ॥ पदमिति पाठे पद्यते ज्ञायते प्राप्यते च इति पदम् ॥ परमिति पाठे ततः परं तदनन्तरं इत्यर्थे ब्रह्मेति लभ्यते ॥ 'आद्यं पुरुष' मित्युत्तरत्र परामर्शात्॥ ततः अनन्तरं परं परब्रह्म इति वा ॥ ८. छा. ८. ७. १. ९. तत इत्यस्य पंचम्यंतत्वात् परस्तादिति लभ्यते ॥ १०. तत इति षष्ठ्यर्थे तसिः॥ तस्य पदं आस्पदम् ॥ ११. छां. ८. १५. १. १२. ४. ४. २२. १३. ८. १६ १४. ८. १६ १५. ८ २१.

भक्तिविरक्तिभ्यां वृक्षमिमं छित्त्वैव ब्रह्म ज्ञातुं शक्यम ॥ अतः तथा कुर्यात् ॥ छित्त्वेमं वृक्षं ब्रह्म विचार्य जानीयात् ॥ अनावृत्य तत्रैव स्थितिः भगवत्कैंकर्यरूपभगवत्प्रयोजनाय नात्मप्रयोजनाय इत्यनुसन्धेयं मुमुक्षुभिरिति सूचयितुं निवर्तते इति आत्मनेपदे प्रयोक्तव्ये निवर्तन्तीति परस्मैपदप्रयोगः॥ कथमुक्तरूपं शस्त्रं सम्पादयितुं शक्यं शस्त्रं तदशक्यसम्पादनमिति भाति इति चेत्॥ यस्य पदशब्दोक्तस्य परमात्मनः सकाशात् अनादिकालप्रवृत्ता उक्तरूपाश्वत्थवृक्षप्रवृत्तिर्जाता तं जगतो मूलभूतं आद्यं पुरुषं परमात्मानमेव १ प्रपद्येत च॥ प्रपत्तिः शरणागतिः॥ शरणमाश्रयेत ॥ शरणीकृतस्स भगवान् उक्तरूपं शस्त्रं दत्वा तेन वृक्षच्छेदनं कारयति ॥ ततः स ज्ञातः प्राप्तश्च भवति ॥ ज्ञानेन तं प्राप्ताश्च न पुनर्निवर्तते ॥ वयमिदानीं कामयामहे धनादिना वयं भूयांसः स्याम प्रजया प्रजायेमहि इति ॥ इयं प्रवृत्तिः यतः प्रसृता येन दर्शिता॥ २'सोऽकामयत ॥ बहु स्यां प्रजायेय ' इति श्रुतिः ॥ तमेव पुरुषं ३ प्रपद्ये इति तत्पदमन्वेष्टव्यमिति वा ॥ कृत्स्नस्य जगतः स्रष्टुः यस्मात् इयं गुणमयभोगसङ्गप्रवृत्तिस्सर्वेषामनादिकालतः प्रवर्तते तमाद्यं पुरुषमेव ४ प्रपद्येत ॥ उक्तं च मया ॥ ५'दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ' ॥ इति ॥ ६ प्रपद्य इयतः इति छेदः ॥ पदशब्दोक्तस्य तस्य परमात्मनः अन्वेषणे किं भवतीति चेत् ॥ तमेव आद्यं पुरुषं प्रपद्य शरणीकृत्य इयतः एतावतः अज्ञाननिवृत्तिज्ञानप्राप्त्यादेः कृत्स्नस्य प्रयोजनस्य साधनभूता प्रवृत्तिः अनादिकालतो जाता ॥ पुरातना मुमुक्षवो हि तमाद्यं पुरुषं मामेव शरणीकृत्य निर्मुक्तबन्धास्सञ्जाताः॥ ७अतस्तत्पदमन्वेष्टव्यम्॥ इति च॥ वक्ष्यते च॥ ८'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज॥ अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इति ॥ अतो विचार्य ज्ञात्वा तत्र गन्तुं प्रयतेत यत्र गतो न निवर्तेत ॥ एवं प्रयतनमुत्पादयितुमेव उक्तरूपाश्वत्थवृक्षनिरूपणं कृतम् ॥ ३ ॥ ४ ॥

---

१. द्रै. प्रपद्ये इत्यस्य लडन्तस्य लिङन्ततया विपरिणामः ॥ २. तै. २. ६. ३. अ. इतिपदमध्याहृत्य व्याख्याने यथाश्रुतमेव ज्याय इति भावः ॥ लोकशिक्षार्थं लोकरीतिमनुसृत्य भगवत उक्तिः अहमपि तमेव शरणं प्रपद्ये इति ॥ 'वर्त एव च कर्मणि ' (३. २२.) तिवत् ॥ इति च ॥ ४. वि. अहं प्रपद्ये इत्यस्य अन्वेषणरूपत्वाभावात् विधिरेव ज्यायान् ॥ प्रपद्येयत इति पाठः ॥ आत्मनेपदिनो धातोः परस्मैपदमार्षम् ॥ ५. ७. १४. ६. वि. प्रपद्येयत इति बहुसंमतपाठमाश्रित्य ॥ ७. हिशब्दार्थकचशब्दार्थोऽयम् । ८. १८. ६६.

**अर्जुनः** ॥ अश्वत्थमेनमसङ्गशस्त्रेण छित्त्वा श्रवणमननादिभिर्ब्रह्म ज्ञात्वा तमेव परमात्मानं शरणमुपगम्य पुनरावृत्तिरहितं तदीयं परमं पदं गन्तुं प्रयतेत इत्युक्तम् ॥ कथंभूतास्तत्पदं गच्छन्ति ॥ तत्पदं जिगमिषुभिः के गुणाः सम्पाद्याः के दोषा वर्जनीयाः प्रयत्नेन ॥ ब्रूहि ॥

**कृष्णः** ॥ निर्मानमोहा जितसङ्गदोषाः अध्यात्मनित्या विनिवृत्तकामाः॥
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैः गच्छंत्यमूढाः पदमव्ययं तत् ॥५॥

**निर्मानेति** ॥ अधिकश्चासौ आत्मा च अध्यात्मा तस्मिन् नित्याः आत्मानं अधिकृत्य प्रवृत्तं अध्यात्मं वेदान्तशास्त्रं ज्ञानं वा तत्र नित्याः निरताः अतः न मूढाः अमूढाः निवृत्ताज्ञानाः अतः मानश्च मोहश्च मानमोहौ निर्गतौ मानमोहौ येभ्यस्ते निर्मानमोहाः अतः वि निश्शेषं निवृत्तः कामः विषयाभिलाषः वासना वा येभ्यस्ते विनिवृत्तकामाः अत. सुखं च दुःखं च सुखदुःखे इति संज्ञा येषां तानि सुखदुःखसंज्ञानि तैः वि विशेषेण मुक्ताः अतः सङ्गरूपो दोषः सङ्गदोषः सङ्गेन दोषः इति वा जितः सङ्गदोषः यैस्ते जितसङ्गदोषाः सङ्गश्च दोषश्च सङ्गदोषौ जितौ सङ्गदोषौ यैस्ते इति वा ॥ ईदृशाः मुमुक्षवः न व्येतीत्यव्ययं न विद्यते व्ययः नाशादिः यस्य तत् अव्ययं निर्विकारं नाशरहितं च पदं गच्छन्ति ॥ ५ ॥

अधिकात्मनि परमात्मनि आत्मानमधिकृत्य प्रवृत्ते वेदान्तशास्त्रे ज्ञाने च निरताः अत एव अमूढाः निवृत्ताज्ञानाः अत एव मानशब्दिताहंकारेण मोहशब्दितविपरीतज्ञानेन च रहिताः अत एव भगवदितरसर्व १ कामेभ्यः विशेषेण निवृत्ताः ॥ अत एव सुखदुःखहेतुत्वात् २तच्छब्दवाच्यैः शीतोष्णलाभालाभजयाजयमानापमानप्रियाप्रियादिद्वन्द्वैः निरवशेषं मुक्ताः अत एव विषयेषु देहगेहभार्यापुत्रधनारामादिषु सङ्गशब्दितासक्तिरूपेण तज्जनितेन वा दोषेण रहिताः सङ्गेन रागद्वेषादिदोषेण च रहिताः

१. कामः वासना तया हि कामयन्ते कामान् ॥ काम्यन्ते विषयाः एभिरिति कामाः इति व्युत्पत्तिः॥
२. अ. सुखं दुःख इति संज्ञा ज्ञानं यस्तैः ॥ सुखदुःखसंज्ञैरिति पाठे सुखदुःखाभ्यां सङ्गः संबन्धो यैस्तैः ॥ इति च ॥

निर्विकारं नाशरहितं च पदनीयं तत् परं ब्रह्म तस्य स्थानं वा ज्ञेयं प्राप्यं च प्रकृतिबन्धरहितशुद्धात्मानं वा गच्छन्ति॥ विचार्य जानन्ति ज्ञानेन प्राप्नुवन्ति च ॥ श्रवणमननादिसाधनानुष्ठानैनैयत्यादयो गुणाः सम्पाद्याः मानमोहसङ्गकामद्वन्द्वाज्ञाना-दयो दोषाः यत्नतो वर्जनीयाः मुमुक्षुभिः ॥ मुमुक्षव इत्थंभूताः तत्पदं गच्छन्ति ॥ नानित्थंभूताः ॥ ५ ॥

अर्जुनः ॥ तत् पदं परिमार्गितव्यं तत्र गताः पुनर्न निवर्तते ॥ अध्यात्म-नित्याः मानमोहादिसर्वदोषोज्झिताश्च मुमुक्षवस्तत्पदं गच्छन्तीत्युक्तं तत्कीदृशं कस्य ब्रूहि ॥

कृष्णः ॥ न तद्भासयते सूर्यो न शशांको न पावकः ॥

यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

नेति ॥ तत् पदशब्दोक्तं सूर्यः न भासयेत ॥ न प्रकाशयति ॥ शशाङ्कः चन्द्रः न भासयते ॥ पावकः अग्निः न भासयेत ॥ यत् गत्वा प्राप्य ज्ञात्वा वा न निवर्तन्ते तत् परमं धाम ज्योतिः मम स्वरूपं परमं तत् मम धाम स्थानं परमं धाम ज्योतिस्स्वरूपं तत् मम अंशः ॥ ६ ॥

तत्पदशब्दोक्तं सूर्यो न प्रकाशयति ॥ चन्द्रः न प्रकाशयति अग्निर्न प्रकाशयति॥ तत्पदं [1]गत्वा न निवर्तन्ते ॥ परमं धाम स्वतः परमतेजोरूपं तत्पदं मम स्वरूपम् ॥ परमं तत् पदं मम धाम स्थानम् ॥ " न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः इति श्रुतिः ॥

वि ॥ तत् पदशब्दोक्तं शुद्धात्मस्वरूपं सूर्यचन्द्राग्न्यादयः न प्रकाशयन्ति ॥

१. अ. गत्वा अभेदेन प्राप्य तद्भावं प्राप्य ॥ जीवस्य 'अहं ब्रह्मास्मी'ति वेदान्तवाक्यजन्य-साक्षात्कारात् अहं न ब्रह्मेत्यज्ञाननिवृत्तिर्गतित्वेनोच्यते ॥ निवृत्तस्य च अमायज्ञानस्य पुनरुत्थानाभावेन तत्कार्यसंसाराभावो न निवर्तते इत्युच्यते ॥ अतो गमननिवृत्त्योरुक्तया भेद उक्तो भवति जीवब्रह्मणो-रिति शङ्काया नावकाशः॥ गत्वा ज्ञात्वा इति वा॥ सूर्याद्यप्रकाश्यत्वोक्त्या तदनुग्राह्यचक्षुराद्यगम्यत्वमुच्यते॥ तादृशं ज्योतिः मम गवाभिन्नं 'राहोः शिर' इतिवदभेदे षष्ठी ॥ २. का. ५. १५.

स्वतःप्रकाशरूपो ह्यात्मा ॥ स एव सर्वेषां तेजसां प्रकाशकः ॥ ज्ञानमेव हि सर्वस्य प्रकाशकम् ॥ ज्ञानरूपो ह्यात्मा ॥ कथं तर्हि सूर्यादीनां ज्योतिष्ट्वव्यवहारः इति चेत् विषयेन्द्रियसम्बन्धविरोधितमोनिरसनद्वारेणोपकारकत्वाज्ज्योतिष्ट्वम् ॥ तेषामपि ज्योतिषां प्रकाशकमात्मज्योतिरेव ॥ न हि तस्य ज्योतिषो बहिर्निर्गमे शवशरीरे सूर्यचन्द्रनक्षत्रदीपादिकिरणकम् तद्विषयकं वा ज्ञानमुत्पद्यते॥ उक्तं चेदं आत्मस्वरूपस्य स्वयंज्योतिष्ट्वं मया ॥ १'ज्योतिषामपि तज्ज्योति'रिति ॥ यद्येवं सर्वप्रकाशक आत्मा तर्हि स्वयं किं न प्रकाशते इति चेत् अनादिकालप्रवृत्ताचित्संसर्गमूलकदेहात्माभिमानरागद्वेषादिदोषैरभिभवात् ॥ सत्यपि चक्षुषि सत्यपि सूर्याद्यालोके दुष्टदृष्टेः वस्तु न ज्ञायते॥ ज्ञातं चेदपि वैपरीत्येन ज्ञायते ॥ तद्वदात्मस्वरूपज्ञानेन आत्मा न ज्ञायते॥ ज्ञातश्चेदपि यथावत् न ज्ञायते ॥ज्ञायते च वैपरीत्येन ॥ यदि चिकित्सकशल्यारोपणादिना दूरीकृत्य दृष्टिदोषं अदुष्टदृष्टिर्भवति तर्हि तेन वस्तु यथावज्ज्ञायते ॥ तद्वदत्र कर्मयोगादिभिः दूरीकृतरागद्वेषादिदोषश्चेदात्मा तर्हि स्वयं प्रकाशते प्रकाशयति च यथावदन्यदखिलम् ॥ एतेन अस्य शुद्धात्मनः प्रकाशको योगः न सूर्यादयः ॥ तादृशयोगावरोधी च अनादिकर्मवन्धमूलः संसारबन्धः तस्य च समूलोच्छेदनमसङ्गशस्त्रेण दृढेन ॥ तस्य च शस्त्रस्य सम्पादनं भगवदाश्रयेण॥ एतादृशं स्वतःप्रकाशरूपं आत्मस्वरूपं गत्वा न निवर्तन्ते ॥ उक्तं च मया ॥ २'गच्छन्त्यपुनरावृत्ति'मिति ॥ ३'यं प्राप्य न निवर्तन्ते' इति च ॥ परमं धाम परमज्योतिस्स्वरूपं तत् शुद्धात्मस्वरूपं मम मत्संबन्धि मदीयं ममांशः ॥ पदमीदृशं तच्च मदीयम् ॥ अतस्तत्र गन्तुं प्रयतेत ॥ ६ ॥

द्वै ॥ अर्जुनः ॥ बद्धस्य जीवात्मनो बन्धमोक्षाय छेद्यं छेदनोपायं छेत्तुरावश्यकान् गुणान् छेदनोपायसंपादनाय शरणीकरणीयं वस्तु छित्वा प्राप्यं पदं तन्महिमानं चोक्तवानसि ॥ स कः त्वं कः तस्य तव च कः सम्बन्धः किमर्थं तदीयबन्धमोक्षाय तव एतावान् प्रयासः ॥ ब्रूहि ॥ किंच शस्त्रसम्पादनाय परमपुरुषो भगवान् भवान् शरणीकरणीय इत्यभिहितम् ॥ किं तवैव ब्रह्मादिष्वन्यतमस्य शरणीकरणे तच्च लभ्येत ॥ ब्रूहि ॥

---

१. १३. १८. २ ५. १०. ३ ८. २१.

कृष्णः ॥ ममैवांशो जीवलोके जीवभूतस्सनातनः ॥
मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

ममेति ॥ जीवानां लोकः संसारः देहो वा जीवलोकः तस्मिन् जीवलोके जीवश-ब्दो भावप्रधानः जीवं जीवत्वं भूतः प्राप्तः जीवभूतः सनातनः पुरातनः अनादिः ममैव अंशः वर्तते ॥ सः जीवः प्रकृतौ तिष्ठन्तीति प्रकृतिस्थानि मनः षष्ठं येषां तानि मन ष्षष्ठानि इन्द्रियाणि कर्षति आकर्षति ॥ ७ ॥

जीवसम्बन्धिनि लोकशब्दिते शरीरे जीवरूपः अनादिः कश्चन पदार्थो वर्तते ॥ सः ममैव अंशः प्रतिबिंबभूतो भिन्नांशः न तु मत्स्यकूर्मादिवत् स्वरूपांशः ॥ भिन्नत्वे अंशत्वं कथमिति चेत् मदधीनत्वेन मया किंचित्सादृश्यवत्वेन च प्रतिबिंबस्य बिंबांशत्ववत् जीवस्य मदंशत्वम् ॥ अत एव मम जीवस्य च बिंबप्रतिबिंबभावेन व्य-पदेशः ॥ अत एव च अंशिनो मम जीवो भिन्नांशतया व्यपदिश्यते ॥ मदधीनत्वेन मया किंचित्सादृश्यवत्वेन च मदंशत्वाज्जीवस्य तदुद्दिधीर्षया ममैतावान् प्रयासः ॥ त्वदंशत्वेन त्वत्तुल्यस्य कुतस्त्वयोद्धरणीयता इति चेत् प्रकृतौ सूक्ष्मरूपेण विद्यमानानि ज्ञानेन्द्रियाणि पञ्च मनश्चैकं एतानि षडिन्द्रियाणि उत्पत्तौ मूलकारणादाकर्षति ॥ स्थितिकाले तानि विषयान् प्रति कर्षति ॥ मरणे प्रकृतिनिर्मितपूर्वशरीरात् शरीरान्तरं[१] प्रति कर्षति ॥ एवं सदा सङ्गैरिन्द्रियैर्विषयेषु मोहाभिनिवेशं प्रापितः [२] कारणं गुणसङ्गोऽस्य ेत्युक्तरीत्या नानायोनिषु परिभ्राम्यति ॥ मदंशत्वेऽपि बहुभिः प्रकारैरव शत्वात् मयोद्धरणीयता तस्य ॥ न च ब्रह्मादिष्वन्यतमस्य शरणीकरणेन तस्योद्धारः॥ जीवत्वाविशेषेण जीवस्य जीवान्तरोद्धरणशक्त्यभावात् ॥ अतः स मयैव बन्धान्मो-चयितव्यः ॥ अतोऽनन्यगतिकेन तेन बद्धेन मुमुक्षुणा शरणीकृतोऽहमेव तं बन्धान्मोच यामि ॥ अतो मोचयितुं मयोपदिष्टोऽयं पन्थाः ॥ ७ ॥

---

१. अत्र, धर्मभूतस्तु जैरस्माकं तादृशा तनुरं ययौ ॥ कर्मचोदनया जीव. कायमन्यमिवेन्द्रियैः ॥ इति श्लोकोऽनुसन्धेयः ॥ २ १३. २२.

अ॥ अर्जुनः ॥ 'यद्गत्वा न निवर्तन्ते' इत्युक्तम् ॥ तत्कथम् ॥ 'संयोगा विप्रयोगान्ता' इति न्यायेन संयोगस्य वियोगान्तत्वात्॥ परमात्मानं प्राप्तस्य न पुनरावृत्तिः इति चेत् तदप्ययुक्तम् ॥ सुषुप्तौ परं ब्रह्म प्राप्तस्य पुनरावृत्तिदर्शनात् ॥ ब्रूहि ॥

कृष्णः ॥ जीवलोके जीवानां संसारे [1]देहे वा अनादिः कश्चित् जीवत्वं प्राप्तो वर्तते ॥ स ममैवांशः ॥ कथं निरंशस्य परब्रह्मणोऽंशो जीव इति चेत् ॥ अंशः एकदेश इव अविद्यया कल्पितो भागः अंशो यथा मृदाभेदवान् तथा संसारी जीवः क्षेत्रज्ञ इति मृषैव प्रसिद्धिमुपागतः मृदाभेदवान् अंश इव कल्पितः॥ वस्तुतस्तु अहमेव सः॥ ब्रह्मण एव उपाधिसंबंधेन जीव इति अंश इति च व्यपदेशः ॥ अविद्याकल्पितबुद्ध्याद्युपाधिविशिष्टस्य अंशत्वं कल्पयित्वा जीवोऽंशः ब्रह्म अंशि इत्यंशांशिभावः कल्पित उपपद्यते ॥ न तु वस्तुतोऽंशांशिभावः ॥ निरंशत्वाद्ब्रह्मणः ॥ यथा निरवयवस्याप्याकाशस्य घटाद्युपाधिविशिष्टं भागं अंशत्वेन कल्पयित्वा घटाकाशो मठाकाश इत्यंशांशिभावः कल्पितो व्यवह्रियते ॥ यथा च निरंशस्यापि सूर्यस्य जलसूर्यकं अंशं कल्पयित्वा जलसूर्यकः सूर्यः इत्यंशांशिभावः कल्पितो व्यवह्रियते ॥ यथा च निरंशस्याप्यग्नेः स्नेहाक्तवर्तियोगोपाधिविशिष्टं भागं अंशं कल्पयित्वा दीपः अग्निरिति अंशांशिभावः कल्पितो व्यवह्रियते ॥ तथा निरंशस्यापि ब्रह्मणः उपाधिविशिष्टं भागं अंशं कल्पयित्वा जीवः संसारी क्षेत्रज्ञः परं ब्रह्मेत्यंशांशिभावः कल्पित एव व्यवह्रियते ॥ मदंशत्वेन कल्पितत्वात्तस्य तां कल्पनामपोह्य मया सह एकीभावयितुं ममैतावान् प्रयासः॥ यथा जलोपाध्यवच्छिन्नो जलसूर्यकः जलोपाध्यपगमे सूर्यं गत्वा न निवर्तते ॥ यथा च घटाद्युपाध्यवच्छिन्नो घटाद्याकाशः घटाद्युपाध्यपगमे महाकाशं प्राप्य न निवर्तते ॥ यथा च स्नेहाक्तवर्तिकोपाध्यवच्छिन्नो दीपः वर्तिकोपाध्यपगमे अग्निं प्राप्य न निवर्तते ॥ तथा बुद्ध्याद्युपाध्यवच्छिन्नो जीवः बुद्ध्याद्युपाध्यपगमे परं ब्रह्म प्राप्य न निवर्तते ॥ अत एव 'यद्गत्वा न निवर्तन्ते' इत्युक्तम् ॥ 'संयोगा विप्रयोगान्ता' इति न्यायस्तु एतद्व्यतिरिक्तविषयः ॥ परमात्मानं प्राप्तस्य परमात्मना एकीभावादपुनरावृत्तिरिति न युक्तं सुषुप्तौ परमात्मानं प्राप्तस्य पुनरावृत्तिदर्शनादितिचेत् सुषुप्तौ जीवभूतस्सन् जीवत्वमविहायैव सप्रकृतिके स्वरूपे लीयते ॥ तदा जीवो-

---

१. जीवैन लोक्यते अनुभूयते इति जीवलोकः देहः इति व्युत्पत्तिः ॥

पाधेरन्तःकरणस्य स्वकारणे अज्ञाने सूक्ष्मरूपेणावस्थानात्तेन जीवस्य पुनरावृत्तिः संभवति ॥ मुक्तौ तु ब्रह्मज्ञानादज्ञानस्य निश्शेषनिवृत्त्या कारणाभावान्न पुनरावृत्तिः ॥ अतो 'यद्गत्वा न निवर्तन्ते' इति युक्तम् ॥ सुषुप्तौ परमात्मानं प्राप्तस्यापि पुनरावृत्तिकारणस्य अज्ञानस्य विद्यमानत्वात्पुनरावृत्तिः ॥ तेन कारणेन सुषुप्तेः पुनरावर्तमानः जाग्रत्स्वप्नभोगजनककर्मक्षये [१]प्रकृतावज्ञाने सूक्ष्मरूपेण स्थितानि मनसा सह षडिंद्रियाणि पुनर्जाग्रत्स्वप्नभोगजनककर्मोदये [२]भोगार्थं कर्षति ॥ विषयग्रहणयोग्यतया आविर्भावयति ॥ एवं सुषुप्तौ परमात्मप्राप्तावपि अज्ञानस्य विद्यमानत्वात् तन्मूलके संसारचक्रे परिभ्राम्यति ॥ अतो ज्ञानादज्ञाननिवृत्त्या अपुनरावृत्तये मयोपदिष्टोऽयं पन्थाः ॥ ७ ॥

वि ॥ अर्जुनः ॥ आत्मा ममांश इत्युक्तं यदि तवांशः स्यात् तर्हि नित्यसूरिवर्गवदविशेषेण सर्वेषां सदा परिशुद्धाकारयोगः किं न स्यात् ॥ ब्रूहि ॥

कृष्णः ॥ जीवलोके जीवानां कर्मनिर्मिते भोगायतने शरीरे वर्तमानः अनादिः प्रकृतिबद्धजीवरूपः ममांशः कश्चित् मनसा सह षडिंद्रियाणि देवमनुष्यादिप्रकृतिपरिणामविशेषशरीरस्थानि कर्मानुगुणमितस्ततो भोगार्थं कर्षति ॥ जीवस्य मदंशत्वात्तदुद्धाराय ममतावान् प्रयासः ॥ बद्धजीवस्य त्वदंशत्वाविशेषात् कुतो नित्यसूरिवर्गवदविशेषेण सदा परिशुद्धाकारयोगो नोपलभ्यते इति चेत् जीवत्वमदंशत्वाद्यविशेषेऽपि बद्धमुक्तनित्यत्वरूपविशेषसद्भावात् नाविशेषेण सदा परिशुद्धाकारयोगः ॥ प्रकृतिबद्धस्तु प्रकृतिनिर्मितशरीरे वर्तमानः शरीरात्मना परिणतायां प्रकृतौ स्थितानि इन्द्रियाणि मनश्च कर्मानुगुणमितस्ततः कर्षति ॥ एवमितस्ततः इन्द्रियाणि भोगार्थं कर्षन् भुञ्जानो विषयान् कृत्वा च नानाविधानि कर्माणि तैः कर्मभिः [३]'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्युक्तरीत्या तांतां योनिं प्रापितः संसारचक्रे परिभ्रमति ॥ एवं परिभ्रमतः मदंशस्य बद्धजीवस्य बन्धान्मोक्षाय मयोपदिष्टोऽयं पन्थाः ॥ अनेन पथा बन्धान्मुक्तो मुक्तात्मा स्वेन रूपेणावतिष्ठते ॥ नित्यात्मानस्तु

१. प्रकृतिः इन्द्रियाणां स्वभावः विषयप्रावण्यं तत्रस्थितानि स्वभावतो विषयप्रवणानि २. जीवलोके भोगार्थं कर्षतीत्यन्वयः ॥ इति केचित् ॥ ३. १३. २२.

१ शेष २ शेषाशनगरुडादयः ॥ ते तु कदाऽपि प्रकृतिबन्धगन्धविधुराः ॥ बद्धमुक्तनित्यरूपास्सर्वेऽपि जीवाः मम अंशा एव ॥ तत्र बद्धस्य बन्धमोक्षार्थं वृक्षतच्छेदनतत्साधनतत्फलतन्माहिम्नामुक्तिः ॥ एकस्य वस्तुनः एकदेशोऽंश इति व्यपदिश्यते ॥ न च परमात्मन एकदेशो जीवः अत्यन्तभिन्नत्वात् सति चैवं कथं जीवो ममांश इत्युच्यते इति चेत् विभूतिविभूतिमद्भावेन विशिष्टैक्यात् विशिष्टस्य तस्य एकदेशो विभूतिरूपो विशेषणभागः अंश इति व्यपदिश्यते ॥ तथा च विभूतित्वं अंशत्वं इति सिद्धम् ॥ नियम्यत्वं विभूतित्वमित्युक्त (१०. १६.) मधस्तात् ॥ अत उक्तं युक्तम् ॥ ७ ॥

ॐ ॥अर्जुनः ॥ मनःषष्ठानीन्द्रियाणि कर्षतीत्युक्तया जीवस्य स्वातन्त्र्यं प्रतीयते ॥ स किं तत्र स्वतन्त्रः॥ ब्रूहि ॥

कृष्णः ॥ शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

शरीरमिति ॥ ईश्वरः जीवः ईश्वरो वा यत् यदा शरीरं देहं अवाप्नोति यत् यदा उत्क्रामति शरीरान्निष्क्रामति च ॥ तदाऽपि एतानि मनष्षष्ठानि इन्द्रियाणि वायुः आशयात् गन्धस्थानात् पुष्पादेस्सकाशात् गन्धानिव गृहीत्वा संयाति गच्छति ॥ यत्

१. शेषः 'अनंतश्चास्मि नागाना' (१०. २९.) मित्युक्तोऽनन्तः ॥ तस्य अशेषशेषवृत्त्यन्वयाच्छेषत्वम् ॥ अशेषशेषवृत्त्यन्वयश्च तस्य कासारयोगिविरचितायां 'शेण्ड्राल् कुडैयाम् इरुन्दाल् सिङ्गासनमाम् निण्ड्राल् मरवडियाम् नीळकडलुळ् । एण्डुं पुणैयाम् मणिविळक्काम् पूम्पट्टाम् पुल्कुमणैयाम् तिरुमालुकु अरवु' इति (३. १. १५.) गाथायां 'निवासशय्याऽऽसनपादुकांशुकोपधानवर्षातपवारणादिभिः ॥ शरीरभेदैस्तव शेषतां गतैः यथोचितं शेष इतीरिते जनैः' इति यामुनाचार्यविरचितस्तोत्ररत्न (४०) श्लोके 'सुन्दरस्य वनशैलवासिनो भोगमेव निजभोगमाभजन् ॥ शेष एष इति शेषताकृतेः प्रीतिमानहिपतिः स्वमामनि' इति श्रीवत्सचिह्नमिश्र (कूरत्ताऴ्वान्) कृतसुन्दरबाहुस्तव (७२) श्लोके च स्पष्टः ॥ २. शेषाशनः विष्वक्सेनः सेनमुदलियार् इति प्रसिद्धः तस्य शेषाशनत्वं भगवद्भुक्तोज्झितशेषैकभोजमानिरतत्वम् ॥ तच्च 'त्वदीयभुक्तोज्झितशेषभोजिना त्वया निसृष्टात्मभरेण यद्यथा ॥ प्रियेण सेनापतिना न्यवादि तत् तथाऽनुजानन्तमुदारवीक्षणैः' ॥ इति स्तोत्ररत्न (४२) श्लोके 'वनाद्रिनाथस्य सुसुन्दरस्य वै प्रभुक्तशिष्टादयथ सैन्यसत्पतिः' इति सुन्दरबाहुस्तव (७४) श्लोके च स्पष्टम् ॥

शरीरं आप्नोति यस्माच्छरीरान्निर्गच्छति च तत्र उभयत्रापि एतानि गृहीत्वा गच्छतीति वा ॥ ८ ॥

न तत्र जीवस्य स्वातन्त्र्यम्॥ सः यदा शरीरमवाप्नोति तदा यदा शरीरात् उत्क्रामति तदाऽपि ईश्वरः एतानि मनष्षष्ठानीन्द्रियाणि गृहीत्वा सम्यक् याति जीवेन सह शरीरमागच्छति ॥ शरीरान्निष्क्रामति च ॥ १'अग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च' इत्यादिश्रुत्या इन्द्रियाणां अग्न्यादिगत्युक्तेः कथं एतानि गृहीत्वा संयातीत्युच्यते इति चेत् । वायुः यथा सत्येव स्रक्चन्दनकस्तूरिकादिरूपे वस्तुनि तस्मात्स्थानात् गन्धघनः तदेकदेशान् सूक्ष्मांशान् गृहीत्वा गच्छति तद्वत् सूक्ष्मान् इन्द्रियांशान् गृहीत्वा संयाति ॥ 'अग्निं वागप्येतीति' श्रुतिस्तु भोगविषया॥ २'अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वा'दिति सूत्रं ॥ ईश्वरः यदा आगच्छति यदा च निष्क्रामति जीवेन सह तदा स ईश्वरः एतानि गृहीत्वा संयातीति वा ॥ जीवः ईशाधीनः कर्षति ॥ ८ ॥

अ ॥ अर्जुनः ॥ सुषुप्तेः पुनरावर्तमानः प्रकृतिस्थानि इन्द्रियाणि कर्षतीत्युक्तम् ॥ किं शरीरादुत्क्रामन् शरीरान्तरं गच्छन् आकृष्य तानि सहैव तैः निष्क्रामति शरीरान्तरं गच्छति च ॥ उत न ॥ ब्रूहि ॥

कृष्णः ॥ देहेन्द्रियमनोबुद्ध्यादेरीश्वरो जीवः यदा शरीरान्निष्क्रामति यदा शरीरान्तरं गच्छति च तदाऽपि एतानि गृहीत्वा संयाति ॥ कथं सति शरीरे तस्मादिन्द्रियाणां ग्रहणमिति चेत् ॥ वायुः पुष्पादिषु सत्स्वेव तद्रूपात् स्थानात् गन्धवतस्तदीयसूक्ष्मांशान् गृहीत्वा याति॥ तद्वदिन्द्रियसूक्ष्मांशान् गृहीत्वा याति ॥ सदा सङ्गतस्तैरेव संसरति॥ यस्मात् ईश्वरः परमात्मा शरीरं आप्नोति॥ यस्माच्च स एव शरीरात् निर्गच्छति तस्मात् जीवलोके जीवभूतो यः सः ममैवांशः अंशांशिनोरभेदादहमेव ॥ अहमेवेति वक्तव्ये शरीरप्राप्त्या शरीरादुत्क्रमणेन च ममांश इत्यंशांशिभावोक्तिः ॥ स प्रकृतिस्थानि स्वोपाधिभूतानि मनष्षष्ठानि इन्द्रियाणि सुप्तिप्रळयसमाधिकालेषु कर्षति आकर्षति सङ्कोचयति निर्व्यापाराणि करोति ॥ ३'तानि यदा गृह्णात्यथ हैतत्स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाक् गृहीतं चक्षुर्गृ-

---

१. बृ. ५. २. १३. २ ३. १. ८. ३. बृ. ८. १ १७.

हीत 'श्रोत्रं' इत्यादिश्रुतिः ॥ सः प्रबोधसर्गव्युत्थानकालेषु आशयात् लयस्थानात् आशेरतेऽस्मिन्नित्याशयः इति व्युत्पत्तिः ॥ वायुराशयाद्गन्धानिव तान्येवेन्द्रियाणि गृहीत्वा संयाति विषयदेशङ्गच्छति ॥ एवं श्लोकद्वयमेकान्वयं वा ॥ ८ ॥

वि ॥ अर्जुनः ॥ प्रकृतिबद्धो जीवः मनष्षष्ठानीन्द्रियाणि भोगार्थं इतस्ततः कर्षतीत्युक्तम् ॥ तेन तस्य संसारचक्रे परिभ्रमणं कुतः ॥ ब्रूहि ॥

कृष्णः ॥ जीवः यत् शरीरमाप्नोति यस्माच्च शरीरात् निष्क्रामति तत्रो-भयत्रापि इन्द्रियाणामीश्वरः अयं, वायुः पुष्पादिरूपात् स्थानात् सूक्ष्मावयवैस्सह गन्धानिव भूतसूक्ष्मैस्सह इन्द्रियाणि गृहीत्वा शरीरमाप्नोति॥ शरीरान्निष्क्रामति च॥ इन्द्रियैस्सहैवगमनादागमनाच्च संसारचक्रे परिभ्रमणमस्य जीवस्य ॥ तादृशस्य न शुद्धाकारयोगः ॥ तत्प्राप्त्यर्थमेवायमुपदेशः ॥ ८ ॥

अर्जुनः ॥ मनष्षष्ठानीन्द्रियाणीत्युक्तं तानि कानि तैस्सहायं तत्रतत्र स्थित्वा किं करोति ॥ किमर्थं तैस्सह गच्छत्यागच्छति च ॥ ब्रूहि ॥

कृष्णः ॥ श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

श्रोत्रमिति ॥ अयं आत्मा परमात्मा वा श्रोत्रं चक्षुः स्पर्शनं त्वगिन्द्रियं च रसनं जिह्वेन्द्रियं घ्राणं च मनश्च अधिष्ठाय आश्रित्यैव विषयान् शब्दादीन् उपसेवते अनुभवति ॥ ९ ॥

श्रोत्रं चक्षुः स्पर्शनं त्वगिन्द्रियं च रसनं जिह्वेन्द्रियं घ्राणं च मनश्च एतानि इन्द्रियाणि मनःषष्ठानि इन्द्रियाणि इत्युक्तानि॥ [१] विषयभोगसाधनानि एतानि आश्रित्य अयमात्मा शब्दादीन् विषयाननुभवति ॥ तत्तत्कर्मफलभूततत्तत्सुखदुःखभोगार्थं तत्रतत्र गच्छत्यागच्छति च ॥ एतैस्सह गमनएव तत्रतत्र सुखदुःखानुभवो भवति ॥ एतान्यधि-

१. शृणोत्यनेनेति श्रोत्रम् चष्टेऽनेनेति चक्षुः स्पृशत्यनेनेति स्पर्शनम् रसयत्यनेनेति रसनम् जिघ्रत्यनेनेति घ्राणम् ॥ मनुतेऽनेनेति मनः ॥ इति व्युत्पत्तिः ॥

ष्ठायैव हि विषयान् भुंक्ते ॥ अतः एतैस्सहैव गच्छत्यागच्छति च ॥ चकारात् कर्मेन्द्रियाणि बुद्धिं चाश्रित्य ॥ १अयं परमात्मा एतानि प्रवर्तकत्वेनाधिष्ठाय जीवेन भुज्यमानेषु विषयेषु सारांशान् भुंक्ते ॥ तदर्थं जीवेन सह गच्छत्यागच्छति च ॥ ९ ॥

अर्जुनः ॥ यद्येवं तर्हि अयमेवं निष्क्रामन् शरीरान्तरं गच्छन् तिष्ठन् भुञ्जानश्च विषयान् कुतो नोपलभ्यते ॥

कृष्णः ॥ उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ॥
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

उत्क्रामन्तमिति ॥ उत्क्रामन्तं शरीरात् निर्गच्छन्तं शरीरे स्थितं वा गुणैः अन्वितं युतं वाऽपि विषयान् भुञ्जानं अनुभवन्तम् ॥ गुणान्वितं गुणयुतं सारांशं भुञ्जानमिति वा ॥ एतमात्मानं परमात्मानं वा विमूढाः विवेकज्ञानरहिताः नानुपश्यन्ति यथावन्न जानन्ति ॥ ज्ञानं शास्त्रश्रवणजनितज्ञानमेव चक्षुः येषां ते ज्ञानचक्षुषः पश्यन्ति यथावज्जानन्ति ॥ १० ॥

शरीरादुत्क्रामन्तं शरीरे स्थितमपि वा विषयान् भुञ्जानं वा २गुणैः तत्कार्यैः सुखदुःखमोहादिभिश्च संयुतं जीवं स्वात्मानं विमूढाः दृष्टादृष्टविषयभोगवासनाऽऽक्रान्तचेतस्तया आत्मानात्मविवेकायोग्याः यथावत् न जानन्ति ॥ प्रमाणजनितनिश्चयज्ञानचक्षुषो विवेकिनस्तु पश्यन्ति ॥ यद्यपि अहमिति आत्मा उपलभ्यत एव सर्वैः भुञ्जानत्वादिकमपि स्वात्मसाक्षिकम् ॥ तथाऽपि यथावत्पश्यन्ति विवेकिनः ॥ अयथावत्पश्यन्त्यविवेकिनः॥ ३गुणान्वितमित्येतत् भुञ्जानमित्यस्य कर्मार्पकम् ॥ गुणान्वितं गुणवत् शुभं फलं सारांशमिति यावत् भुञ्जानं परमात्मानं विवेकिनः पश्यन्ति अविवेकिनो न पश्यन्ति ॥ ४वाशब्द इवार्थे उपाधौ उत्क्रामति उत्क्रामन्तमिव उपाधौ स्थिते

---

१. द्वै. ॥ अत्र, 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ॥ छायातपौ ब्रह्मविदो वदन्ति' ॥ इति (काठ. ३. १.) श्रुतिः ॥ 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्'॥ इति सूत्रम्॥ (१. २. ११) 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ॥ इति स्मृतिश्च ॥ इत्येतानि अनुसन्धेयानि ॥ २. अ यैरिन्द्रियैर्गच्छत्यागच्छति च तैरन्वितम् ॥ वि. सत्वादिगुणमयप्रकृतिपरिणामविशेषमनुष्यत्वादिसंस्थानपिण्डसंसृष्टम् ॥ ३. द्वै. इति च ॥ ४. अ ॥

स्थितमिव उपाधौ भुञ्जाने भुञ्जानमिव उपाधौ गुणान्विते गुणान्वितमिव प्रतीयमानमात्मानं विमूढा नानुपश्यन्ति ॥ ज्ञानचक्षुषस्तु पश्यन्ति ॥ विमूढाः अहमेवेदं सर्वमित्येतद्वाक्यार्थानुरूपमात्मानं तेन रूपेण न पश्यन्ति ॥ किंतु कर्ता भोक्ता सुखी दुःखी हतोऽहं प्रिये ममेदं नष्टं इत्येवमात्मानं संसारिणं देहाभिन्नं पश्यन्ति ॥ विवेकिनस्तु देहेंद्रियमनोबुद्ध्यादिभ्यो भिन्नं अविक्रियं अकर्तारं अभोक्तारं साक्षित्वेन स्थितं स्वमात्मानं पश्यन्ति ॥ अविवेकिभिरविवेकान्नोपलभ्यते ॥ विवेकिभिस्तूपलभ्यत एव ॥ १० ॥

अर्जुनः ॥ ज्ञानचक्षुषः पश्यन्तीत्युक्तम् ॥ तत्कथं शास्त्रजनितज्ञानवतो विदुषोऽपि रागद्वेषादिभिरभिभवसम्भवात् ॥ उक्तं च त्वया ॥ १ 'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा' इति ॥ रागद्वेषादिभिरभिभवस्तु दर्शनविरोधी ॥ उक्तं च त्वया ॥ २ 'अज्ञानं यदतोऽन्यथा' इत्याद्यसकृत् ॥ अतः शास्त्रश्रवणादिजनितज्ञानमात्रेण कथं तद्दर्शनमुच्यते ॥ ब्रूहि ॥

कृष्णः ॥ यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ॥
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

यतन्त इति ॥ यतन्तः शास्त्रश्रवणादिभिरात्मदर्शनाय यत्नं कुर्वाणाः योगिनश्च योगः कर्मयोगादिः तेन मनसो नैश्चल्यं वा एषामस्तीति योगिनः तादृशास्सन्त एव आत्मनि हृदये बुद्धौ देहे वा अवस्थितं सम्यक् स्थितं एनं आत्मानं परमात्मानं वा पश्यन्ति ॥ यतन्तोऽपि यत्नं कुर्वाणा अपि न कृतः शिक्षितः वशीकृतः आत्मा मनः येषां ते अकृतात्मानः तादृशाः अतः अचेतसः अचेतनप्रायाः एनं न पश्यन्ति ॥ ११ ॥

श्रवणादिभिः आत्मदर्शनाय यतमानाः सर्वेऽपि नात्मानं पश्यन्ति॥ किंतु योगिन एव आत्मनि हृदये बुद्धौ देहे वा सम्यक् स्थितं एनं ३आत्मानं पश्यन्ति ॥ 'मनसो निश्चलत्वेन स्थितिर्योग इतीर्यते' इत्युक्तं मनसो नैश्चल्येनावस्थानं योगः तद्वतामेवात्मदर्शनम् ॥ न तद्रहितानां प्रयत्नशतेनापि ॥ श्रवणादिभिः यतमाना अपि कर्मयोगादिभिरवशीकृतमनसश्चेत् ते अविवेकिन एव अचेतनप्राया एव मन्दमतयो हि ते ॥ ते एनमात्मानं न पश्यन्ति ॥ शास्त्रजनितज्ञानरूपं पाण्डित्यमेव नात्मावलोकन-

१. ३. ३९. २. १३. १२. ३ द्वे आत्मानं परमात्मानम् ॥

साधनं किंतु स्वजन्ममूलकविवेकमनोनिग्रहादिसाधनसम्पन्नमेव तदात्मावलोकनसाधनम् ॥ अयमेवाशयो ज्ञानचक्षुष इत्यस्य॥ अत एव ज्ञानिन इत्यनुक्त्वा ज्ञानचक्षुष इत्युक्तम् ॥ शास्त्रजनितज्ञानं येषां चक्षुरिव विवेकहेतुर्भवति ॥ ये च तेन चक्षुषेव सारासारविवेचनपूर्वकं मनः प्रवर्तयन्ति निवर्तयन्ति च तेज्ञानचक्षुषः ॥ ये श्रवणादिभिरात्मानात्मज्ञानिनो भूत्वा तज्जनितविवेकेन मनोनिग्रहादिसाधनवन्तो भवन्ति ते आत्मानं पश्यन्ति॥ केवलशास्त्रज्ञानवन्तो नात्मानं पश्यन्ति॥ अतो नानुपपत्तिः॥११॥

सञ्जयः ॥ प्रकृतिबद्धस्य कर्मकलापनिगलितस्य कलेवरकारागृहे अवस्थापितस्य तत्रोत्क्रमणप्रवेशादिक्लेशं सहमानस्य विषमिश्रमधुकल्पक्षुद्रतरविषयान् सेवमानस्य विवेकिभिर्ज्ञानदृष्ट्या दृश्यमानस्य अविवेकिभिरदृश्यमानस्य जीवस्य ब्रह्मप्राप्तिप्रतिबन्धकात् संसारबन्धात् मोक्षाय संसारस्वरूपं वृक्षत्वेन निरूप्य तन्मोक्षोपायं भक्तिविरक्त्यात्मकं असङ्गं वृक्षच्छेदनसाधनशस्त्रत्वेन निरूप्य संसारवृक्षच्छेदनानन्तरं कर्तव्यं ब्रह्मविचारं तिर्यक्पतितप्रतिबन्धकवृक्षच्छेदनानन्तरं गन्तव्यस्थलान्वेषणत्वेन निरूप्य ब्रह्मविचारजन्यब्रह्मज्ञानप्राप्यं मोक्षस्वरूपं वर्णयित्वा ब्रह्मज्ञानाय ब्रह्मज्ञानप्राप्यमोक्षाय च त्वच्छरणीकरणमेवोपाय इति प्रतिपाद्य यस्य संसारस्य निवृत्तये त्वं शरणीकरणीयः तस्य संसारस्य स्वरूपं च निरूपितं त्वया॥ १'तमेव चाद्यं पुरुषं प्रपद्ये यत' इति त्वमेव शरणीकरणीयः नान्य इति निर्बन्धेन प्रतिपादनात् त्वमेव शरणीकरणीयोऽसि का गतिः किं कर्तव्यं शरणीकरोमि त्वामित्युक्तः पार्थेन भगवान् वासुदेवः नाहं उत्पादकः रक्षकः संहारकः नियामकः शिक्षकः बन्धकः मोचक इति शरणीकरणीयः किंतु शरीरयात्रानिर्वाहं केवलमभ्युपगच्छतो भवतः शरीरयात्रानिर्वाहोपयोगिकर्मकर्तृसेवकत्वेन अनितरसाधारणमहामहिमवत्त्वेन च मयि निरतिशया प्रीतिः कार्या ॥ उक्तं च मया ॥ महामहिमवत्त्वेन सुहृत्त्वेन च मां ज्ञात्वा महतः प्रभोः सुहृद इव मम कर्मभिराराधनं स्वरसतः कर्तव्यमिति २'भोक्तारं यज्ञतपसा' मित्यनेन ॥ महामहिमवान् सुहृन्मे जात इति यथा स्वरसतः कर्मयोगः कर्तव्यः तथा महामहिमवान् शरीरयात्रानिर्वाहोपयोगिकर्मकृद्भून्ममेति स्वरसतो मयि प्रीतिरूपो भक्तियोगः कार्य इति बोधयितुं स्वस्य अनितरसाधारणमहामहिमवत्त्वं शरीरयात्रानिर्वाहोपयोगिकर्मकृत्त्वं चाह ॥

---

१. १५. ४ २. ५. २९.

कृष्णः ॥ यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥

यदिति ॥ आदित्यं गतं आदित्यगतं सूर्ये स्थितं यत् तेजः अखिलं सर्वं जगत् भासयते प्रकाशयति ॥ चन्द्रमसि चन्द्रे स्थितं यत् तेजः अखिलं जगत् भासयते ॥ अग्नौ स्थितं यत् तेजः अखिलं जगत् भासयते ॥ तत् सर्वमपि तेजः मम इदं मामकं मदीयं मदधीनं च ॥ १२ ॥

न केवलमहं तत्तज्जीवनियामकः किंतु सूर्यचन्द्राद्युपलक्षिततत्तज्जीवगततत्तद्विशेषप्रदः तत्तद्विशेषनियामकश्चाहम् ॥ सकलजगदवभासकं सूर्यगतं चन्द्रगतं अग्निगतं नक्षत्रादिगतं च तेजः १ मदीयं मदीयतेजसः एकदेशं सूर्यचन्द्रादिभिराराधितोऽहं तेषां तद्योग्यतामापाद्य तद्रूपाधिष्ठानेषु निक्षिप्य तेन जगदखिलं प्रकाशयामि ॥ उक्तं च मया ॥ २ 'प्रभाऽस्मि शशिसूर्ययोः' ॥ ३ 'तेजश्चास्मि विभावसौ' ४ 'तपाम्यहं' इति॥ ५ 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति श्रुतिः ॥ ६ 'अनुकृतेस्तस्य च'ति सूत्रं ॥ तदीयं तेजोऽपि ७ मदधीनं ॥ ८ 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतिः ॥ उदयः स्थितिरस्तमयश्च सूर्यादेर्मदधीनाः ॥ ९ 'भीषाऽस्माद्वातः पवते' इति १० 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति च श्रुतिः॥ आदित्ये चक्षुरधिष्ठातरि सूर्ये तदधिष्ठेये चक्षुषि च स्थितं तेजः बाह्यप्रपञ्चप्रकाशनसामर्थ्यं अखिलं जगत् भासयते॥ चन्द्रमसि मनोऽधिष्ठातरि चन्द्रे तदधिष्ठेये मनसि च स्थितं यत् तेजः आन्तरप्रपञ्चप्रकाशनसामर्थ्यम् । अग्नौ वागधिष्ठातरि तदधिष्ठेयायां वाचि च स्थितं यत् तेजः विषयप्रकाशनसामर्थ्यं तदखिलं तेजः मदीयं मदधीनं इति वा ॥ ११ 'सूर्यादिगतं यत्तेजः चैतन्यात्मकं तन्मदीयं मम ॥ राहोः शिर इति वदभेदे षष्ठी ॥ सूर्यचन्द्राद्यधिष्ठानगतं चैतन्यज्योतिरहमेव ॥ सर्वेष्वधिष्ठानेषु विद्यमानं चैतन्यं त्वमेव सति चैवं सूर्यादिगतं चैतन्यमहमिति कुतो विशिष्य उच्यत इति चेत् ॥ तुल्येऽपि मुखसंस्थाने मुखं स्वछे आदर्शादौ आविर्भवति ॥ न काष्ठकुड्यादौ ॥ तद्वत् सूर्यचन्द्रादेरधिष्ठानस्य स्वच्छतया तत्र चैतन्यज्योतिरधिकं प्रकाशते

१. भासते। मदीयं॥ २. ७. ८. ३. ७. ९. ४. ९. १२. ५. का. ५. १५. ६. १. ३. २२. ७. मामकं मदधीनम् ॥ ८. तै. का. ३. ९. ७. ९. तै. २. ८. १०. बृ. ५. ८. ९. ११ अ.॥

इत्याशयेन सूर्यचन्द्रादिगतं चैतन्यज्योतिरहमेवेति विशिष्योक्तम्॥ एवं सूर्यादितेजसां तेजःप्रदत्वतत्तेजोनियामकत्वाद्यनितरसाधारणमहामहिमवान् रात्रिन्दिवसंतमसनिरसनपटुतरतेजःप्रदर्शनेन सर्वप्राणिशरीरयात्रानिर्वाहोपयोगिदीपसेवकश्चाहम् ॥ अतो महामहिमवानयं मम परमोपकारी इति परमया प्रीत्या भजनीयोऽहम् ॥ अतो मामेवं भज ॥ ॥ १२ ॥

अर्जुनः ॥ सूर्यस्तपति चन्द्रमाः प्रकाशते अग्निर्ज्वलति नक्षत्राणि भान्ति ॥ तैः सन्तमसनिवृत्या तत्तत्पदार्थावभासो भवति । किं त्वया तत्रास्माकं प्रयोजनं॥ वद॥

कृष्णः ॥ गामाविश्य च भूतानि धारयाम्यहमोजसा ॥ १२॥ ॥

गामिति ॥ अहं गां भूमिं आविश्य प्रविश्य ओजसा सामर्थ्येन भूतानि धारयामि च ॥ १२॥ ॥

अहं भूमिं प्रविश्य तत्र स्थित्वा मदीयदिव्यशक्त्या सर्वाणि स्थावरजङ्गमात्मकानि भूतानि धारयामि ॥ सर्वभूतधारिण्या भूमेः धारणशक्तिप्रदश्चाहम् ॥ तामप्यहं धारयामि ॥ १'स दाधार पृथिवीं द्यामुतेमां' इति २'येन द्यौरुग्रा पृथिवी च दृढे' इति ३'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' इति ४'येनेमे विधृते उभे ॥ विष्णुना विधृते भूमी' इति च श्रुतयः ॥ गामाविश्य तेन रूपेण मया ध्रियमाणानि भूतानि स्वरूपसत्ताप्रवृत्यादिकं लभन्ते ॥ एतादृशमहामहिमवानहम् ॥ एतादृशोऽयं मां धारयति धारकस्सेवक इव अतोऽयं परमोपकारी इति प्रीतिः कार्या मयि ॥ अत एवं मयि प्रीतिं कुरु ॥ १२॥ ॥

अर्जुनः ॥ अचला भूमिर्धारयति भूतानि किं त्वया तत्र कृत्यं ॥ वद ॥

कृष्णः ॥ पुष्णामि चौषधीस्सर्वास्सोमो भूत्वा रसात्मकः ॥ १३ ॥

पुष्णामीति ॥ अहं रसः अमृतरसः जलं वा आत्मा स्वरूपं यस्य सः रसात्मकः सोमः चन्द्रः भूत्वा सर्वाः ओषधीः पुष्णामि वर्धयामि च ॥ १३ ॥

अहं अमृत रसमयशरीरश्चन्द्रमा भूत्वा तत्र स्थितः तेन रूपेण स्वकीयामृतरससेकैराप्याययन् सर्वा ओषधीः पुष्णामि ॥ पुष्टिमतीः करोमि ॥ तासां पुष्टिमुत्पाद्य ताभिरन्नरसं कल्पयामि ॥ तेन च भूतानि जायन्ते जातानि वर्धन्ते ॥ ६'अन्नाद्भूतानि जायन्ते॥ जातान्यन्नेन वर्धन्ते' इति श्रुतिः ॥ उक्तं चेदं मया ॥ ७'अन्नाद्भवन्ति

१. २. तै. सं. ४ १. ८. ३ बृ. ५. ८. ९. ४. तै. आ. १. ८. २. ५. रगो जल धा॥ ६. तै. २ २. ७. ३. १४.

भूतानी'ति च ॥ चन्द्रमसः सर्वौषधिरसाप्यायनद्वारा अन्नरसदानशक्तिप्रदश्चाहम् ॥ एतादृशोऽयं मामन्नरसदानेन पुष्णाति ॥ अतः परमोपकारी इति मयि अतिशयितां प्रीतिं कुरु ॥ अहं रसात्मकः सोमः भूत्वा गां भूमिं आविश्य सर्वा ओषधीः वर्धयामि च ॥ ततः ओजसा अन्नादिसामर्थ्येन भूतानि धारयामि च इत्येकवाक्यं वा ॥ १३ ॥

अर्जुनः ॥ अमृतरसमयेन चन्द्रमसा आप्यायिताभिरोषधीभिरन्नरसो जायते तेन वयं जीवामः कोऽत्र त्वयाऽस्माकमुपकारः ॥ वद ॥

कृष्णः ॥ अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

अहमिति ॥ अहं वैश्वानरः अग्निः भूत्वा प्राणाः एषां सन्तीति प्राणिनः तेषां देहं आश्रितः सन् प्राणश्च अपानश्च प्राणापानौ ताभ्यां समायुक्तः संयुतः प्राणापानसमायुक्तः सन् चतस्रः विधाः प्रकाराः यस्य तत् चतुर्विधं अन्नं पचामि ॥ १४ ॥

अहं जाठराग्निर्भूत्वा तत्र स्थितः तेन रूपेण प्राणिनां देहं आश्रितः सन् ग्राह्याणां संग्रहणाय विसर्जनीयानां विसर्जनाय च प्राणमपानं च वायुं नियोज्य ताभ्यां युक्तः प्राणिभिरद्यमानं भक्ष्यभोज्यलेह्यचोष्यभेदेन चतुर्विधमन्नं पचामि पक्वं करोमि ॥ अस्तु सूर्यादिप्रकाशैः पदार्थावभासः अस्तु च धरण्या धारणं अस्तु च चन्द्रमसा अन्नरसप्राप्तिः तथाऽपि सर्वैः प्राणिभिः स्वमुखान्तः आजिह्वामूलं प्रवेशितं चतुर्विधमन्नं कोऽप्यंतः स्थित्वा गृहीत्वा पक्त्वा सारासारांशभेदेन विभज्य सारांशं रक्तमांसादिभिस्संयोज्य असारांशं मलमूत्ररूपेण बहिर्निस्सारयति ॥ इत्यवश्यमभ्युपगन्तव्यमकामेनापि त्वया॥ न ह्यन्तःपचनादिकं प्राणिनां स्वप्रयत्नसाध्यम्॥ न च अन्तःपचनं नास्तीति वक्तुं शक्यम् ॥ न हि भक्ष्यभोज्यादिकं येन रूपेणान्तर्गच्छति तेनैव रूपेण रक्तमांसादिभिः संगच्छते बहिर्निस्सरति वा ॥ किंतु सारांशो रक्तादिभिः संगच्छते ॥ असारांशस्तु जलमलरूपेण निस्सरति ॥ तच्च सारासारांशभेदेन विभजनं न पचनमन्तरेण संभवति ॥ अतः अन्तः स्थित्वा पक्त्वा एवं कुर्वन् कश्चिन्महोपकारी अस्तीति वक्तव्यम् ॥ स जाठराग्निरिति चेत् ॥ स एव जाठराग्निरहं [1]'अयमग्निर्वैश्वा-

---

१. बृ. ७. ९. १.

नरः योऽयमन्तः पुरुषे येनेदमन्नं पच्यते ' इति श्रुतिः ॥ जाठराग्नौ स्थित्वा तेन रूपेण अन्तरन्नं पचन् उपकरोमि ॥ यदि मया नैवं क्रियेत तर्हि पतेदेवाधः शरीररथः ॥ पृथिव्यादीनां विजातीयसंयोगवशादयोमार्गे गच्छन् शकटः सारथिना तत्रतत्र ग्राह्यं इन्धनसलिलादिकं गृहीत्वा अन्तर्विभज्य विसर्जनीयं अङ्गारादिकं तत्रतत्र विसृज्य हि नीयते ॥ न हि ग्राह्यस्येंधनादेर्ग्रहणाभावे अन्तर्विभजनाभावे विसर्जनीयस्य विसर्जनाभावे च पदमेकं गच्छेत् स शकटः ॥ विदितमेवेदमाबालवृद्धमखिलानाम् ॥ तथा मया शरीररथनिर्वाहः क्रियते ॥ सुमहानसावुपकारः ॥ कार्यस्यास्य शरीरान्तर्जायमानत्वादप्रत्यक्षत्वेन मयेदमेवं क्रियते इत्युच्यमानमङ्गीकर्तव्यमगत्या ॥ तुल्यन्यायेन तेजसा पदार्थप्रकाशनादिकमपि मयैव क्रियते इत्युररीकुरु ॥ जाठराग्नेश्चतुर्विधान्नपचनशक्तिप्रदश्चाहम् ॥ एतादृशोऽयं मम शरीररथनिर्वाहकः सारथिः सेवक इव इति निरतिशया प्रीतिर्मयि कार्या ॥ अतस्त्वमेतादृशं मत्वा मां मयि परमां प्रीतिं कुरु ॥ अनया बुद्ध्या आश्रितोऽहं असंगशस्त्रदानेन प्रकृतिबन्धान्मोचयित्वा परमं पदं प्रापयामि ॥ इदमेवोक्तं मया ॥ [1]' मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥ स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' इति ॥ [2]' तमेवचाद्यं पुरुषं प्रपद्ये यत ' इति च ॥ [3]यद्दन्तैरवखण्ड्यावखण्ड्य भक्ष्यते अपूपादि तद्भक्ष्यं चर्व्यं इति चोच्यते॥ यत्तु केवलं जिह्वया विलोड्य निगीर्येत सूपौदनादि तद्भोज्यम् ॥ यत्तु जिह्वायां निक्षिप्य रसास्वादेन निगीर्यते किंचिद्द्रवीभूतं गुडखण्डशर्करादिकं तल्लेह्यम् ॥ यत्तु दन्तैः निष्पीड्य रसांशं निगीर्यावशिष्टं त्यज्यते इक्षुदण्डादि तच्चोष्यमिति विवेकः ॥ १४ ॥

द्रै ॥ अर्जुनः ॥ ' प्राणिनां देहमाश्रित ' इति त्वयाऽभिहितम् ॥ प्राणिनां देहेषु क्व वर्तसे ॥ किमेतावदेव करोषि ॥ उतान्यत्किमपि ॥ वद ॥

कृष्णः ॥ सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ॥
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥

सर्वस्येति ॥ अहं सर्वस्य च सर्वस्य प्राणिजातस्यापि हृदि हृदये संनिविष्टः

---

१. १४. २६. २. १५. ४. ३. चोष्यस्थाने पेयं पठन्ति केचित् ॥ पेयमप्यत्र प्राह्यम् इति परे ॥ खाद्यचोष्यलेह्यपेयात्मकं चतुर्विधमन्नम् इति केचित् ॥ प्राणिनामिति सामान्येन उक्त्या सर्वैरपि प्राणिभिर्भुज्यमानमदनीयमन्नं पार्थिवं आप्यं तैजसं वायव्यं च इति चतुर्विधम् ॥ मनुष्यादीनां पार्थिवं चातकादीनामाप्यं चकोरादीनां तैजसं सर्पादीनां वायव्यमिति विवेकः ॥ इत्यपरे ॥

सम्यक् स्थितः ॥ सर्वस्य प्राणिजातस्य हृदि संनिविष्टः जीवश्च अहमेवेति वा॥ मत्तः मम सकाशात् स्मृतिः स्मरणं ज्ञानं अपोहनं तयोरभावश्च ऊहशब्दितं वितर्कात्मकं ज्ञानं वा भवति ॥ अहं सर्वैः वेदैः वेदितुं योग्यः वेद्यः ज्ञातव्यश्च ॥ वेदैः वेद्यः परमात्मा च अहमेव इति वा ॥ वेदानां अन्तो निर्णयो येन तत् वेदान्तं ब्रह्ममीमांसाशास्त्रं तत् करोतीति वेदान्तकृत् ॥ वेदानां अन्तः फलं तत् करोतीति वा ॥ अहमेव वेदान् वेत्तीति वेदवित् ॥ वेदान्तं करोति उपदिशतीति वेदान्तकृत् आचार्यः स च वेदवित् वेदवेदार्थ-तत्वज्ञानी ब्रह्मवित् स च अहमेव इति वा ॥ १९ ॥

न केवलमेतावदेवाहं करोमि किंतु मम सकाशात् स्मृतिः अतीतपदार्थविषयक-ज्ञानं ज्ञानं अनुभवजन्यं ज्ञानं तयोरभावश्च भवति ॥ ये मां भजन्ति तेषां स्मृतिर्ज्ञानं च भवति ॥ ये मां न भजन्ति तेषां तदुभयाभावो भवति ॥ उक्तं च मया ॥ १'बुद्धि-र्ज्ञानमसंमोह' इत्यादि ॥ न केवलमन्नमेव विभजामि ॥ किंतु बुद्धि स्मृत्यादिभेदेन विभजामि ॥ कथं त्वं यत्र कुत्रापि स्थित्वा सर्वेषां स्मृत्यादिकं उत्पादयितुं प्रभवसि इति चेत् ॥ सर्वस्य ब्रह्मादिस्थावरान्तस्य प्राणिजातस्य हृदय एव सम्यक् स्थितोऽहम् ॥ 'बुद्धिर्ज्ञानमसंमोह' इत्यादिनोक्तस्य, सर्वस्य प्राणिजातस्य हृदि स्थित्वा बुद्ध्यादि-कमुत्पादयामीति विवरणमिदम् ॥ एतादृशस्त्वं केन प्रमाणेन ज्ञातुं शक्य इति चेत् ॥ वेदैस्सर्वैरहं वेद्यः ॥ वेदैः वेदानुसारिभिश्च शास्त्रैः सर्वैरहं ज्ञातव्यः ॥ वेदैरेवाहं वेद्यः ॥ सर्वैरेव वेदैर्वेद्यः ॥ सर्वैर्वेदैरहमेव वेद्यः ॥ सर्वैर्वेदैरहं वेद्य एव ॥ वेदानां परमदुर्ज्ञेयार्थत्वात् तैस्त्वं कथं ज्ञेयस्स्याः इति चेत् ॥ वेदान्तकृदहम् ॥ वेदानां अन्तो निर्णयो येन तत् वेदान्तं वेदार्थनिर्णायकं २'अथातो ब्रह्मजिज्ञासा' इत्यादिसूत्रसन्द-र्भात्मकं ब्रह्ममीमांसाशास्त्रं वेदव्यासरूपेण तत्कर्ताऽहम् ॥ वेदव्यासरूपेण मया कृतै-र्ब्रह्मसूत्रैर्वेदार्थं निर्णीय निर्णीतार्थैर्वेदैरहं ज्ञातुं शक्यः ॥ उक्तं च मया ॥ ३'ब्रह्मसूत्र-पदैश्चैव हेतुमद्भिर्विनिश्चितम्' ॥ इति ॥ त्वत्कृतब्रह्मसूत्रैरन्ये वेदार्थं नि[illegible]-यन्तु ॥ त्वं केन वेदार्थं निरणैषीः ॥ ज्ञात्वा खलु वेदार्थं तन्निर्णयाय ब्रह्ममीमां-साशास्त्रं प्रणीतवानासि ॥ अर्थं बुध्वा शब्दरचना इति हि न्यायः ॥ इति चेत् ॥ अह-मेव ४वेदवित् ॥ स्वशक्त्यैवाहं वेदानामर्थं वेद्मि ॥ न मम साधनान्तरापेक्षा ॥ अहमेव वेदान् वेद्मि वेदास्तु न मां विदन्ति इति च ॥ स्वत एव सर्वज्ञेन मया वेदार्थं ज्ञात्वा

१. १०. ४. २. १. १. १. ३ १३. ५. ४ अत्र, 'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ॥ इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चने'ति भागवत (११. २१ ४३.) श्लोकोऽनुसन्धेयः ॥

इतरेषां तन्निर्णयाय कृतेन ब्रह्मसूत्रात्मकेन वेदान्तशास्त्रेण वेदार्थं ज्ञात्वा तैर्वेदैरहं ज्ञातव्यः ॥ ज्ञातोऽहं तेन ज्ञानेन बन्धान्मोचयित्वा परमं पदं प्रापयामि ॥ उक्तमिदं मया ॥ १' ददामि बुद्धियोगं तं येन मामुपयान्ति ते ' इति ॥ अत एतादृशं मां तत्वतो जानीहि ॥ १५ ॥

अ ॥ अर्जुनः ॥ बद्धो जीवः बन्धान्मोचकोऽहमीश्वर इत्यभिहितं त्वया ॥ तत्कथं जीवेश्वरयोर्भेदेनाभिधानं सङ्गच्छते ॥ अद्वैतहानेः ॥ उक्तो हि जीवेश्वरयोरभेदः २ क्षेत्रज्ञं चापि मां विद्धी ' ति त्वया ॥ ३' समं सर्वेषु भूतेषु ' इत्यादिपञ्चश्लोक्या ब्रह्मणः सजातीयविजातीयस्वगतभेदराहित्यं च प्रतिपादितं हि भवता ॥ ब्रूहि ॥

कृष्णः ॥ सर्वस्य ब्रह्मादिस्थावरान्तस्य प्राणिजातस्य हृदयशब्दितायां बुद्धौ अविद्योपाधिना क्षेत्रज्ञशब्दितजीवत्वेनावस्थितो जीवोऽहमेव ॥ जीवतया साक्षिभूतात् मत्त एव पुण्यकर्मिणां ' स्मृतिर्व्यतीतविषया मतिरागामिगोचरा ॥ बुद्धिस्तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता ॥ प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः' इत्युक्तलक्षणाः बुद्धिविशेषा जायन्ते ॥ पापकर्मिणां तु अपोहनशब्दितस्तदभावो भवति ॥ न केवलं जीव एवाहं किंतु सर्वैर्वेदैः वेद्यः परमात्मा च अहमेव ॥ ४ 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्॥ एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' इति श्रुतिः ॥ एवं उपाधितदभावाभ्यां अहमेव बद्धो मोचकश्चेति न बद्धजीवस्य मोचकेश्वरस्य च भेदसम्भवः ॥ ५ 'तत्त्वमसि ' ६ ' ब्रह्माहमस्मी'त्यादि श्रुतेः ॥ बद्धो जीवः मोचकश्चेश्वरो भवानेवेति वेदा वदन्तीति कथं ज्ञातुं शक्यत इति चेत् ॥ वेदान्तकृत् अहं व्यासरूपेण वेदान्तशास्त्रं रचितवानस्मि॥ तेन उक्तरीत्या वेदानामर्थो ज्ञातुं शक्यः॥ अर्थं बुध्वा हि तदर्थाववोधकं शास्त्रं प्रणेतुं शक्यम॥ वेदांतशास्त्रप्रणेतुः तव वेदार्थज्ञानं केन इति चेत् ॥ अहमेव वेदवित् ॥ इत्यादि पूर्ववत् ॥ सर्वस्य हृदि संनिविष्टो जीवोऽहमेव ॥ एवं जीवाभेदेन मदुपास्तिं कुर्वतां निर्विशेषस्य ७ त्रिविधपरिच्छेदराहितस्य ब्रह्मणः स्वात्मत्वस्य विस्मृतस्य स्मृतिः ॥ सर्वमिदमहं च ब्रह्मैवेति सर्वस्य स्वस्य च ब्रह्ममात्रत्वज्ञानं च दृढं भवति ॥ मदुपास्तिमकुर्वतां राग-

---

१. १०. १०. २. १३. ३. ३ १३. २८. ४. ऋ. सं. २. ३ २२. सू. १६४. ऋ. ४६. ५. छां. ६. ८. ७. ६. ना. १. १६. ७. देशपरिच्छेदराहित्यं सर्वदेशव्यापित्वेन कालपरिच्छेदराहित्यं सर्वकालावस्थानेन वस्तुपरिच्छेदराहित्यं सर्ववस्त्वात्मकत्वेन ॥

दिदोषदुष्टानां स्मृतिज्ञानयोरभावश्च भवति ॥ ब्रह्मणे वेदांतोपदेशकृत् अहम् ॥ १ 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतिः ॥ शिष्येभ्यः आचार्यरूपेण वेदान्तोपदेशकृत् अहमिति वा ॥ वेदवित् ब्रह्मज्ञानी च अहमेव ॥ 'सर्वस्य चाहं हृदि संनिविष्ट' इति जीवाभेदोक्त्यैव आचार्यब्रह्मज्ञान्यभेदे सिद्धे पुनस्तद्भेदोक्तिः वेदान्तोपदेष्टरि गुरौ ब्रह्मविद्यपि ब्रह्मत्वबुद्धिरवश्यं कार्या इति बोधयितुम् ॥ वेदैश्च सर्वैरित्यादि पूर्ववत् ॥ १५ ॥

वि ॥ अर्जुनः ॥ सोमो भूत्वा वैश्वानरो भूत्वा इति सोमवैश्वानरौ अभेदेन निर्दिष्टौ किं तौ त्वदभिन्नौ उत भिन्नौ आद्ये २ 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' ३ 'भीषाऽस्मादग्निश्चेन्द्रश्च' इति भेदेन व्यवहारानुपपत्तिः ॥ द्वितीये सामानाधिकरण्येन निर्देशानुपपत्तिः ॥ अतो ब्रूहि ॥

कृष्णः ॥ नात्र सोमवैश्वानरौ मदभेदात् सामानाधिकरण्येन निर्दिष्टौ ॥ किंतु मच्छरीरत्वेन ॥ शरीरशरीरिणोरभेदेन निर्देशश्चैतोऽयं भैत्रोऽयं इत्यादौ प्रसिद्धः । ४ 'योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निश्शरीरं योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' ॥ ५ 'यश्चन्द्रतारके तिष्ठन् चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकं शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' ॥ इति श्रुतिः ॥ न केवलं सोमवैश्वानरयोरेवायं न्यायः किंतु सर्वस्यापि भूतजातस्य ॥ सर्वस्यापि भूतजातस्य हृदयदेशे आत्मतया वर्तमानः किलाहम् ॥ ६ 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' ॥ ७ 'यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यस्सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' इति श्रुतिः ॥ वक्ष्यते च ॥ ८ 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'ति ॥ आत्मतया अन्तः स्थित्वा किं करोषि इति चेत् ॥ 'बुद्धिर्ज्ञानमसंमोह' इत्याद्युक्तरीत्या बुद्ध्यादिभावान् उत्पादयामि ॥ मत्त एव स्मृतिः ज्ञानं तयोरभावश्च भवति ॥ ९ अपोहनापरपर्यायोहनशब्दितोहरूपं वितर्कात्मकं इदमित्थं

---

१. श्वे. ६. १८. २. बृ. ५. ८. ९. ३. तै. २. ८. ४. बृ. ५. ७. ५ ५. बृ. ५. ७. ११. ६ तै. आ. ३. ११. २. ७ बृ. ५. ७. १५ ८. १८. ६१. ९. अपोहनशब्दस्यार्थान्तरम् ॥

भवितुमर्हतीति प्रमाणानुग्राहकं ज्ञानं च भवति ॥ अतः अग्निवायुसूर्यसोमेन्द्रादीनां सर्वेषां मच्छरीरत्वेन तत्तत्प्रतिपादकैस्तत्तच्छब्दैः, शरीरवाचकैर्देवमनुष्यादिशब्दैः जीवात्मेव अहमेव वाच्यः ॥ अतस्तेषां मम च सामानाधिकरण्येन निर्देशः ॥ अतएव हेतोः १'ज्योतिषां रविरंशुमान्' २'नक्षत्राणामहं शशी' ३'वायुर्यमोऽग्निर्वरुणः शशाङ्क' इत्यादौ सामानाधिकरण्येन निर्देशो मयाऽपि कृतः ॥ उक्तश्च हेतुरयं मया ॥ सामानाधिकरण्येन निर्देशे ॥ ४'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' ॥ ५'सर्वं समाप्नोषि ततोऽसि सर्वः' इति ॥ यद्येवं तर्हि ६'इन्द्रं यजेते'त्यादिवेदवाक्यै-स्त्वमेवोच्येथाः इति चेत् ॥ 'इन्द्रं यजेते'त्यादिभिः इन्द्रादिशब्दघटितैः तत्तद्देवता-प्रतिपादनपरैः तैस्तैर्वेदवाक्यैः अहमेव उक्तन्यायेन वेद्यः ॥ ७'इन्द्रं मित्रं वरुणमग्नि-माहुः' इत्यादिश्रुतेः ॥ यद्येवं इन्द्रंयजेत वरुणं यजेत इत्यादिवेदावाक्यैस्त्वमेव वेद्यः ॥ तर्हि इन्द्राद्याराधनं त्वदाराधनमेव स्यात् ॥ अस्तु नाम का हानिरिति चेत् इन्द्राद्या-राधकेभ्यः त्वयैव फलं प्रदेयं स्यात् इति चेत् वेदान्तकृत् अहमेव॥ वेदानां अन्तः फलं तत्कर्ता अहमेव वेदानां फलएव पर्यवसानात् फलमन्तशब्देनोच्यते ॥ उक्तं च मया ॥ अहमेव फलं ददामीति ॥ ८'यो यो यां यां तनुं भक्त' इत्यारभ्य ९'मयैव विहितान् हि तान्' इत्यन्तेन ॥ १०'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवचे'ति च ॥ वेदमेवं त्वदभिधायिनं न जानन्ति लोके जानन्ति च तत्तद्देवताऽभिधायिनम्॥ त्वं तु एवं अधीषि कथमिदमिति चेत् ॥ वेदविदेव चाहं ११अहमेव वेदं मदभिधायिनं वेद्मि नान्यः ॥ एतादृशं मां ज्ञात्वा मां शरणीकृत्य मद्दत्तेनासङ्गशस्त्रेण संसारवृक्षं छित्वा प्रकृतिबन्धरहितं शुद्धात्मानं प्राप्तुं प्रयतेत बद्ध आत्मा इत्युपदिष्टमेता-वता ॥ १५ ॥

अर्जुनः ॥ सर्वैरेव वेदैः वेद्योऽहमित्युक्तम् ॥ सर्वैर्वेदैस्तव वेदनं कथं संभवति॥ न हि सर्वान् वेदान् अध्येतुं तदर्थांश्च ज्ञातुं कश्चिदीष्टे ॥ अतः सर्ववेदोक्तरीत्या त्वां ज्ञातुं आराधयितुं वा न कोऽपि शक्नोति ॥ अतः कथमिदम् ॥ वद ॥

---

१. १०. २१. २. १०. २१. ३. ११. ३९. ४ १०. २०. ५. ११. ४०. ६. तै. सं. २. ६. ४. ४. ७. ऋ. सं २. ३. २२. सू १६४. ऋ. ४६. ८. ७. २१. ९. ७. २२. १०. ९. २४. ११. अत्र. 'मां विधत्तेऽभिधत्ते' इति भागवतश्लोकोऽनुसन्धेयः ॥

कृष्णः ॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरएव च ॥
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

द्वाविति ॥ लोके क्षरश्च अक्षरश्च इति इमौ द्वावेव पुरुषौ ॥ क्षरति नश्यतीति क्षरः न क्षरः अक्षरः ॥ तत्र सर्वाणि भूतानि क्षरः पुरुषः ॥ कूटवत् तिष्ठतीति कूटे तिष्ठतीति वा कूटस्थः अक्षरः पुरुष उच्यते ॥ यः लोकानां त्रयं लोकत्रयं आविश्य प्रविश्य स्वयं न व्येति इति न विद्यते व्ययो यस्य इति वा अव्ययः निर्विकारः नाशरहितश्च सन् ईश्वरश्च सन् बिभर्ति धारयति पोषयति च परमश्चासौ आत्मा च परमात्मा इति उदाहृतः उक्तः क्षराक्षरपुरुषाभ्यां अन्यः स तु उत्तमः पुरुषः॥ अहं यस्मात् कारणात् क्षरं पुरुषं अतीतः अतिक्रान्तः अक्षरात् पुरुषाच्च उत्तमश्च ॥ अतः कारणात् लोके वेदे च पुरुषेभ्य उत्तमः पुरुषोत्तमः प्रथितः प्रसिद्धः अस्मि ॥ १६ ॥ १७ ॥ १८ ॥

**द्वै** ॥ लोके [1]अस्वतन्त्रचेतनवर्गे क्षरः शरीरनाशवत्त्वेनक्षरशब्दवाच्यः पुरुषः एकः स च शरीरतोनाशाभावादक्षरशब्दवाच्यः पुरुषः एकः सचैव इति प्रमाणप्रमितौ द्वौ पुरुषौ वर्तेते ॥ एवकारात् न तृतीयः प्रभेदोऽस्तीति ज्ञायते ॥ तयोर्मध्ये क्षरः पुरुषः क इति चेत् ॥ सर्वाणि ब्रह्मादिस्थावरान्तानि भूतानि क्षरः पुरुषः ॥ समुदायविवक्षया एकवचनम् ॥ कूटवत् आकाशवत् निर्विकारत्वेन सर्वत्र व्याप्तत्वेन च तिष्ठतीति कूटस्थः अक्षरः पुरुषः उच्यते ॥ अयमक्षरः पुरुषः चित्प्रकृतिशब्दिता लक्ष्मीः स्त्रियो लक्ष्म्याः पुरुष इति पुल्लिङ्गशब्देनाभिधानं कथमिति चेत् ब्रह्मादिसकलपुरुषशक्ति विलक्षणमहापुरुषशक्तिमत्वात् ॥ अत एवोच्यते ॥ 'पुल्लिङ्गेनोच्यते श्रीश्च पुंवच्छक्तिमती क्वचि' दित्यादि ॥ सा हि [2]कूटे जडाजडसमूहे नियामकतया तिष्ठतीति व्युत्प-

[1] लोके इत्यस्य अर्थान्तरम् ॥ [2]. कूटस्थशब्दस्यार्थान्तरम् ॥

त्या कूटस्था ॥ क्षरात्पुरुषात् अक्षरात्पुरुषाच्च अन्यः कश्चित् पुरुषो वर्तते ॥ स तु क्षराक्षरपुरुषाभ्यामुत्तमः पुरुषः ॥ अत एव परमचेतनापरपर्यायपरमात्मशब्देन तत्र तत्रोक्तः ॥ कुतस्तस्य पुरुषद्वयादन्यत्वमुत्तमत्वं च इति चेत् 'परमात्मेत्युदाहृत' इत्युक्त्या प्रमाणमुपन्यस्तम् ॥ युक्तिरप्युच्यते ॥ शृणु ॥ भूः भुवः स्वः इति त्रयो लोकाः ॥ उपलक्षणमिदं अन्येषामपि लोकानाम् ॥ तेषु विद्यमानान् सर्वान् जीवानाविश्य धारयति पोषयति च ॥ अतः अन्यः उत्तमश्च ॥ यो यं धारयति पोषयति च ॥ स तस्माद्युत्तमोऽन्यश्च दृष्टः ॥ लोकत्रयमाविष्टस्य तन्नाशे नाशः स्यादिति चेत् ॥ अव्ययः निर्विकारः नाशरहितश्च ॥ अव्ययत्वं चास्योक्तं मया ॥ [१]'वेदाविनाशिनं नित्यं य एन मजमव्ययम्' ॥ इत्यादावसकृत् ॥ कुत आश्रयनाशेऽप्यनाशोऽस्य इति चेत् ॥ ईश्वरो हि सः अचिन्त्याद्भुतविचित्रविविधमहाशक्तिमत्वात् सर्वमपि तस्मिन् घटते ॥ क्षराक्षराभ्यां पुरुषाभ्यामुत्तमः पुरुषः परमात्मा क इति चेत् अहमेव॥ यद्येवं तर्हि पुरुषाभ्यामुत्तमत्वात् पुरुषोत्तमोऽसि त्वमिति चेत् सत्यम् ॥ क्षरं पुरुषमतीतः अतिक्रम्य वर्तमानः अक्षरात् पुरुषादुत्तमश्चाहम् ॥ अतः पुरुषाभ्यामुत्तमत्वात् पुरुषशब्दवाच्येषु क्षराक्षरोत्तमपुरुषेषु मध्ये उत्तमत्वाच्च लोकशब्दितपौरुषेयग्रन्थेषु अपौरुषेये वेदे च पुरुषोत्तम इति प्रसिद्धोऽहम्॥ त्रयाणां एषां पुरुषत्वं देहेऽवस्थानात् ॥ पुरि शेते इति पुरुष इति व्युत्पत्तिः ॥ ब्रह्मादयो जीवाः क्षेत्रज्ञतया तत्तच्छरीरेषु तिष्ठन्ति ॥ परमात्मा तु सर्वेषां देहेषु मुख्यक्षेत्रज्ञतयाऽवतिष्ठते ॥ श्रीस्तु देशतः कालतश्च परमात्मना समं व्याप्तत्वात्तदविनाभूता तेन साकं सर्वत्र तिष्ठति ॥ अतस्त्रय एते पुरुषाः ॥ सर्वमिदं कथं ज्ञायत इति चेत् [२] लोके ॥ लोकदर्शने ॥ दर्शनमालोचनं ॥ वेदशास्त्रपुराणाद्यर्थपर्यालोचने सति सर्वमिदं ज्ञायते ॥ क्षरमक्षरं चातीत इति वा क्षरादक्षराच्चोत्तम इति वा अनुक्त्वा क्षरमतीतः अक्षरादुत्तमः इति प्रकारभेदेन निर्देशात् अस्वतन्त्रत्वेन क्षरशब्दितजीवकोटावनुप्रवेशोऽपि न लक्ष्म्याः जीवत्वं किंतु नित्यमुक्तत्वेन देशतः कालतो व्याप्त्या च जीवेभ्यः उत्तमैव सा ईशकोटावप्यनुप्रविष्टा हि सा लक्ष्म्याः ईशकोटावनुप्रवेशोऽपि नेश्वरस्य लक्ष्म्या साम्यम् ॥ किंतु परमात्मा तस्या अप्युत्तमः इत्ययंप्रकारभेदो ज्ञायते ॥ १६ ॥ १७ ॥ १८ ॥

---

१. २. २१. २. 'द्वाविमौ पुरुषौ लोके इत्यत्र विद्यमानस्य लोके इत्यस्य अर्थान्तरम् ॥

अ ॥ लोके संसारे पूर्णत्वात् पुरुषशब्दितस्य आत्मनः उपाधिभूतौ पदार्थौ द्वौ पुरुषोपाधित्वात् अविवेकेन पुरुषधर्माध्यासाच्च पुरुषशब्दवाच्यौ तौ काविति चेत् क्षरः पुरुषः अक्षरः पुरुषश्च इत्येव द्वौ नान्यथा इति द्वावेव न तृतीयः प्रभेदः तत्र, सर्वाणि भूतानि भवन्तीति भूतानीति व्युत्पत्त्या भूतशब्दवाच्यानि विकारजातानि महदादिस्थूलांतानि क्षरतीति क्षर इति व्युत्पत्त्या क्षरः पुरुषः ॥ कूटस्थः मूलप्रकृतिः कूटेन कपटेन वञ्चनेन तिष्ठतीति कूटस्था सा ॥ कूटो राशिः स इव तिष्ठतीति वा ॥ एकाऽपि सा विकारानन्त्यात् राशिरिव तिष्ठति ॥ कूटः महदादिस्थूलान्तः कार्यराशिः तत्र कारणत्वेन घटशरावादिषु मृदिव तिष्ठतीति वा ॥ नानाविधवंशविस्तारस्य मूलभूतः पुरुषः कूटस्थ उच्यते ॥ तद्वत् सात्विकराजसतामसभेदेन नानाविधस्य सत्वरजस्तमःकार्यविस्तारस्य मूलभूतत्वात् कूटस्थ इव कूटस्था इति वा ॥ कूटं कपटं पुंसां विविधविचित्रविपरीताचरणं तत्र कारणतया तिष्ठतीति वा ॥ सा अक्षरः पुरुषः ॥ ब्रह्मज्ञानैकनाश्यत्वेन विना ब्रह्मज्ञानमनाशात् ॥ क्षराक्षराभ्यां स्थूलसूक्ष्मरूपाभ्यां प्रकृतिभ्यामन्यः कश्चित् वर्तते ॥ सः उत्तमः पुरुषः पूर्णत्वात् पुरुषशब्दितः ॥ स तु क्षेत्रज्ञशब्दितो जीवात्मा आत्मशब्दवाच्येभ्यः देहेंद्रियमनोबुद्ध्यादिभ्यः अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयनामभ्यः पञ्चभ्यः कोशेभ्यः आत्मशब्दपर्यायपुरुषशब्दवाच्याभ्यां क्षराक्षराभ्यामुत्कृष्टत्वात्परमात्मा इति उदाहृतः ॥ सः भूर्भुवःस्वराख्यं लोकत्रयं तत्रत्यशरीराणि आविश्य धारयति पोषयति च ॥ तन्नाशे स्वयं न नश्यति ॥ तादृशाचिन्त्यशक्तिमानीश्वरो हि सः ॥ लोक्यन्ते ज्ञायन्ते इति लोकाः स्थूलसूक्ष्मकारणदेहाः तेषां त्रयं स्थूलसूक्ष्मकारणाख्यं शरीरत्रयमाविश्य धारयति ॥ लोकाः जाग्रत्स्वप्नसुषुप्तयः तेषां त्रयं जाग्रत्स्वप्नसुषुप्त्याख्यावस्थात्रयं आविश्य प्रकाशयति ॥ यो जागरमन्वभूवं यः स्वप्नमद्राक्षं यः सुखमस्वाप्सं सोऽहमिदानीं तिष्ठामीति ज्ञायन्ते हि ते ॥ एतादृश उत्तमः पुरुषः क इति चेत् अहम् ॥ अहं प्राकृतजगद्रूपाश्वत्थवृक्षरूपं क्षरं पुरुषं च अतीतः जगद्वृक्षबीजभूतात् अक्षरात् [illegible]षादपि उत्तमः ॥ अतः लोकशब्दिते पुराणादौ काव्यादौ च वेदे च पुरुषोत्तमः प्रसिद्धोऽहम् ॥ क्षरश्च अक्षरश्चेति द्वौ पुरुषौ लोके प्रसिद्धौ ॥ तत्र ब्रह्मादिस्थावरान्तानि सर्वाणि शरीराणि क्षरः पुरुषः ॥ कूटस्थः भोक्ता चेतनो जीवात्मा अक्षरः पुरुषः ॥ कूटः शिलाराशिः पर्वतः स इव देहेषु नश्यत्स्वपि निर्विकारतया तिष्ठतीति व्युत्पत्त्या कूटस्थशब्दितो जीवात्मा ॥ कूटे स्थूलप्रपञ्चे तिष्ठतीति वा कूटस्थः ॥ आभ्यां क्षराक्ष-

क्षराभ्यां देहजीवाभ्यां अन्यः विलक्षणः न तु भिन्नः परम आत्मा निर्गुणः परमात्मा इति श्रुत्यादावुक्तः ॥ क्षरं जडवर्गमतीतः अक्षरात् भोक्तृचेतनवर्गादपि उत्तमः अतः पुरुषोत्तमः प्रसिद्धोऽहं ॥ कर्मक्षये सुप्तिप्रलयकैवल्यादौ उपाधिनाशमनु विनाशशीलः ब्रह्मप्रतिबिंबभूतः जलार्कोपमः कार्योपाधिः चेतनवर्गो जीवसंज्ञितः क्षरः पुरुषः॥ कूटस्थः निर्विकारः कारणोपाधिः ईश्वरसंज्ञितः अक्षरः पुरुषः तदुपाधेरकर्मजत्वेन नाशासंभवात्॥ उपाधिदोषेणावशीकृतत्वादसौ न क्षरति स्वरूपान्नच्यवत इत्यक्षरः॥ एताभ्यां कार्यकारणोपाधिभ्यां जीवेश्वराभ्यां अन्यः विलक्षणः निरुपाधिः ब्रह्मसंज्ञितः उत्तमः पुरुषः॥ स एव परमात्मेत्युदाहृतः शास्त्रे ॥ यः मायया ईश्वरो भूत्वा लोकत्रयं उत्तममध्यमाधमशरीररूपं आविश्य धारयति॥ तथाऽपि अव्ययः जीवधर्मेण अल्पज्ञत्वेन ईश्वरधर्मेण सर्वज्ञत्वेन च न व्येति क्षीयते वर्धते वा ॥ यस्मादहं क्षरं कार्योपाधिं जीवं अतीतः अक्षरात् कारणोपाधेः ईश्वरात् उत्तमश्च अतोऽहं अनुपाधिर्निर्गुणः परमात्मा पुरुषोत्तमो वेदे लोके च प्रसिद्धः ॥ इति च ॥ १६ ॥ १७ ॥ १८ ॥

वि ॥ क्षरश्च अक्षरश्चैव इमौ द्वौ पुरुषौ देहसंबंधात् पुरुषशब्दवाच्यौ जीवौ लोक्यते ज्ञायतेऽनेनेति व्युत्पत्त्या लोकः प्रमाणं तस्मिन् १'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् ॥ अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इत्यादौ प्रसिद्धौ ॥ तत्र ब्रह्मादिस्तंबपर्यन्ताः अचित्संसृष्टाः जीवाः क्षरः पुरुषः ॥ प्रतिशरीरं जीवभेदेन जीवानां बहुत्वेऽपि अचित्संसर्गरूपोपाधेरेकत्वादेकवचनेन निर्देशः ॥ कूटस्थः अचित्संसर्गवियुक्तः स्वेन रूपेणावस्थितो मुक्तात्मा ॥ स हि प्रकृतिसंबन्धविरहात् प्रकृतिपरिणामरूपदेवादिदेहसंबन्धायत्तविविधविचित्रसुखदुःखाद्यसाधारणाकारो न भवति॥ किं तु असंकुचितज्ञानैकाकारत्वलक्षणसाधारणाकारो वर्तते ॥ अतः अनेकसन्ततिमूलभूतकूटस्थशब्दितसाधारणपुरुषतुल्यत्वात् कूटस्थः ॥ कूटस्थ इव कूटस्थः ॥ साधारणाकारेणावस्थानसाम्यात् ॥ कूटशब्दितलोहकारयन्त्रवत् तिष्ठतीति कूटस्थ इति च व्युत्पत्तिः ॥ कालस्थानादित्वात् बहवो मुक्ताः ॥ उक्तं च मया २'बहवो ज्ञानतपसा पूता मद्भावमागताः' इति ॥ ३ 'यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः' इति ॥ ४'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ' इति च ॥ तथाऽपि अचित्संसर्गवियोग-

---

१. श्वे. ४. ५. २. ४. १०. ३. १४. १. ४. १५. ४.

रूपोपाधेरेकत्वादेकवचनेन निर्देशः ॥ बद्धजीवराशिरेकः पुरुषः ॥ मुक्तजीवराशिरेकः पुरुषः इति यावत् ॥ 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् ॥ अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति श्रुतिः ॥ क्षराक्षराभ्यां बद्धमुक्ताभ्यां अन्यः उत्तमः पुरुषः १'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इत्यादौ परमात्मा इत्युक्तः ॥ लोक्यन्ते प्रमाणेन ज्ञायन्त इति व्युत्पत्त्या लोकाः प्रमाणावगतानि अचेतनं तत्संसृष्टश्चेतनः मुक्तश्चेति त्रीणि वस्तूनि तेषां त्रयं आत्मतया आविश्य बिभर्ति ॥ अतः भर्तव्यात्तस्मात् लोकत्रयात् भरणकर्ता अन्यः ॥ अव्ययश्च॥ अतः व्ययस्वभावादचेतनात् तत्संबन्धेन जन्मविनाशादिविविधक्लेशभाजः तत्संसृष्टचेतनात् तत्संबंधयोग्यतया पूर्वं तत्संबंधिनो मुक्तचेतनाच्च अन्यः ॥ ईश्वरश्च ॥ अतः ईशितव्यात्तस्माल्लोकत्रयादन्यः ॥ क्षरं बद्धजीवं अतीतः अक्षरात् मुक्तजीवादपि उत्तमोऽहम् ॥ अतः २क्षराक्षरपुरुषोत्तमत्वात् वेदे लोक्यते ज्ञायते वेदार्थः अनेनेति व्युत्पत्त्या लोकशब्दितस्मृतौ च पुरुषोत्तमः प्रसिद्धोऽहम् ॥ ३'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति श्रुतिः ॥ ४'अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णो'रितिस्मृतिः ॥ बद्धः उत् उत्कृष्टः ॥ बद्धापेक्षयामुक्तः उत्तरः उत्कृष्टतरः ॥ परमात्मातु उत्तमः उत्कृष्टतमः ॥ १६ ॥ १७ ॥ १८ ॥

अर्जुनः ॥ अस्त्वेवं लोके वेदे च तव पुरुषोत्तमत्वं प्रथितं तत्प्रतिपादनेन मदीयाक्षेपस्य किं समाधानमायातम् ॥ वद ॥

कृष्णः ॥ यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

य इति ॥ हे भारत यः न संमूढः संमोहवान् असंमूढः सन् मां एवं उक्तरीत्या

---

१. ना. १३. २. २. 'न निर्धारणे' (२. २. १०.) इति निर्धारणषष्ठ्या समासस्य निषेधात् संबन्धषष्ठ्या समासः॥ पञ्चमीसमासो वा ॥ 'यस्मादधिकं' (२. ३. ९.) 'अक्षरादपि चोत्तम' इत्यादिप्रयोगेण उत्तमशब्दयोगे पञ्चम्याः योगविभागेन पञ्चमीसमासस्य च साधुत्वात् ॥ शौण्डादिष्वपाठेऽपि योगविभागात् सप्तमीसमासो वा ॥ 'न च तेन विना निद्रां लभते पुरुषोत्तम' (वा. १८. ३२.) इति रामायणे ॥ 'कः पुण्डरीकनयनः पुरुषोत्तमः कः' (१२) इति स्तोत्ररत्ने ॥ ३ छां. ८. १२. २ ४ वि. ५. १७. ३३.

पुरुषोत्तमं जानाति ॥ सः सर्वं वेत्तीति सर्ववित् मां सर्वश्चासौ भावश्च सर्वभावः तेन सर्वभावेन सर्वप्रकारेण भजति सेवते ॥ १९ ॥

यः मां परमात्मानं १ एवमुक्तप्रकारेण पुरुषोत्तमं पुरुषोत्तमत्वमपारमार्थिकमिति विपरीतज्ञानरहितः सन् शास्त्राचार्योपदेशाभ्यां जानाति पुरुषोत्तमत्वेन मां जानन् स पुरुषः सर्ववित् सर्ववेदैः यद्यद्वेद्यं तत्तदखिलं वेद॥ सर्ववेदोक्तरीत्या यथाऽहं भजनीयः तथा मां सर्ववेदोक्तैः सर्वैः प्रकारैः भजति ॥ सर्ववेदोक्तसर्वविषयविषयकं ज्ञानं सर्ववेदोक्तैस्सर्वैः प्रकारैः मद्भजनं चेत्युभयं मत्प्रीतये हि ॥ सर्वैः मद्विषयैः वेदनैः मम या प्रीतिः सर्वैः मद्विषयैः भजनप्रकारैः मम या प्रीतिः उभयविधाऽपि सा प्रीतिरनेन पुरुषोत्तमत्वज्ञानेन मम जायते ॥ अहो महाफलमिदं पुरुषोत्तमत्वज्ञानम् ॥ त्वं तु महाकुलप्रसूतत्वात् भाराब्दोक्तब्रह्मविद्यारतत्वाच्च पुरुषोत्तमत्वज्ञानं तत्फलं च प्राप्तुमर्होऽसि ॥ २ सः सर्ववित् मां सर्वभावेन सर्वत्र ब्रह्मदृष्ट्या सर्वं ब्रह्मेवेति भजति ज्ञानदार्ढ्याय सदाऽनुसन्धत्ते ॥ ज्ञानस्य तन्निष्ठ याश्च फलं तु ‘गच्छन्त्यमूढाः पदमव्ययन्त’ दित्युक्तम् ॥ ३ स सर्ववित् सर्वं ब्रह्मेवेति अपरोक्षतया सर्वं ब्रह्म पश्यन् तेन देहेंद्रियादिष्वहंभावममभावरहितः सन् सर्वभावेन अहमेवेदं सर्वमिति सर्वात्मभावापत्त्या मां भजति प्राप्नोति ॥ स पुरुषोत्तमत्वज्ञानजनितभक्तियोगेन मां सर्वप्रकारेण भजति सेवते तेन सर्ववित् सर्वज्ञो भवति॥ इति वा ॥ गीतोक्तरीत्यापुरुषोत्तमत्वज्ञानमेव सर्ववेदोक्तसर्वविषयविषयकज्ञानं सर्ववेदोक्तरीत्या मद्भजनं च ॥ सर्वेषां ज्ञानानां सर्वेषां भजनानां च अत्रैव ज्ञाने पर्यवसानात् इति, पुरुषोत्तमत्वज्ञानेन भक्तियोगः तेन मद्भजनं तेन सर्वविषयकज्ञानं इति वा त्वदाक्षेपस्य समाधानं बोध्यम् ॥ १९॥ ॥

सञ्जयः ॥ इत्थं वक्तव्यमुक्त्वा फलोक्त्या उपसंहरति भगवान् ॥

कृष्णः ॥ इति गुह्यतमं शास्त्रं इदमुक्तं मयाऽनघ ॥

एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २० ॥

१. सर्वं इति सामान्यज्ञानेन सर्वंत्याकारकशब्दज्ञानेन च यथा सर्वज्ञो न भवति तथा सामान्यतः कोशादिना पुरुषोत्तमो भगवानिति ज्ञानमात्रेण पुरुषोत्तमत्वज्ञानी न भवति ॥ किन्तु एवं जानन्निति भावः ॥ २. ३. अ इति च ॥

इतीति ॥ न विद्यते अघं पापं यस्य सः अनघः हे अनघ निष्पाप भारत पार्थ अतिशयेन गुह्यं रहस्यं गुह्यतमं इदं शास्त्रं मया इति उक्तरीत्या उक्तम् ॥ एतत् बुद्ध्वा ज्ञात्वा बुद्धिः अस्यास्तीति बुद्धिमान् स्यात् ॥ कृतं कृत्यं कर्तव्यं कर्म येन सः कृतकृत्यः कृतकृत्यश्च स्यात् ॥ २० ॥

परमगोप्यं इदं गीताशास्त्रं मया एवं तवोपदिष्टम् ॥ भारतत्वात् अघशब्दितप्रतिबन्धकपापराहित्याच्च त्वमेतदुपदेशार्होऽसि ॥ अतस्तवेदमुपदिष्टम् ॥ इदं पञ्चदशाध्यायात्मकं शास्त्रं तव मयोपदिष्टम् अस्मिन्नध्याये सर्वोऽपि गीताशास्त्रार्थः संग्रहेणोक्तः ॥ कृत्स्नोऽपि वेदार्थः अत्रैव परिसमाप्तः अत एवोक्तं मया ॥ 'यस्तं वेद स वेदवि'दिति ॥ 'स सर्ववि'दिति च ॥ गुह्यतमं सकलमपि शास्त्रं उक्तरीत्या १ इदं अस्मिन्नध्याये मयोपदिष्टम् ॥ इदं 'द्वाविमौ' इत्यादि 'सर्वभावेन भारत' इत्यन्तं पुरुषोत्तमत्वतद्ज्ञानतत्फलप्रतिपादनरूपं सकलशास्त्रार्थानां अत्रैवांतर्भावात् अत्रैव पर्यवसानाच्च शास्त्ररूपं मया तवोपदिष्टम्॥ एवं मया तवोपदिष्टं इदं शास्त्रं ज्ञात्वा तद्रूपपरोक्षज्ञानेन अपरोक्षज्ञानवान्स्यात् ॥ तेन चापरोक्षज्ञानेन कृतकृत्यः कृतार्थः मुक्तश्च स्यात् ॥ २ एतत् बुद्ध्वा ब्रह्मैवाहमिति अपरोक्षज्ञानवान् स्यात्॥ तेन कृतकृत्यश्च स्यात्॥ तेन सकलमपि कृत्यं कृतं भवति ॥ न पुनः कृत्यान्तरं तस्यास्ति ॥ सर्वेषामपि कर्मणां यत्फलं ज्ञानं तस्य तेन लब्धत्वात् ॥ कृतं कृत्यं तेन नान्येन ॥ ज्ञाने जात एव कर्म कृतं अन्यथा अकृतप्रायं सर्वस्य कर्मणः ज्ञान एव परिसमाप्तेः ॥ उक्तं च मया ॥ ३'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति ॥ ४ एतत् बुद्ध्वा बुद्धिमान् स्यात् ॥ मां प्राप्तुमिच्छोः या बुद्धिरावश्यकी सा बुद्धिस्तेन लब्धा स्यात् ॥ यच्च तेन कर्तव्यं तदपि कर्म तेन कृतं स्यात् ॥ उक्तस्य पुरुषोत्तमत्वस्य ज्ञानेन नितरां प्रीतोऽहं अपेक्षितं कर्म कारयामि तेन च अपेक्षितं बुद्धियोगं ददामि तेन च तं बन्धान्मोचयामि मोचयित्वा च मत्समीपं प्रापयामि ॥ अतः पुरुषोत्तमं मां विद्धि ॥ 'स सर्ववित् भजती'ति पार्थ भारत अनघ इति संबोध्य तव मयोपदिष्टमित्युक्त्वा

---

१. इदमित्यस्य अस्मिन्नित्यर्थः ॥ सप्तम्या प्रथमेति व्याकरणांतरात् ॥ २. अ. इति च ॥ ३. ४. ११. ४. वि. इति च ॥

'बुद्धिमान् स्यात्' इति च परोक्षनिर्देशेन न त्वदर्थमेवायमुपदेशः ॥ किंतु त्वांव्याजीकृत्य लोकोद्धारार्थमुपदेशः। त्वां व्याजीकृत्य यदर्थमुपदेशः सोऽप्येवं सर्ववित् भवति सर्वभावेन मां भजति बुद्धिमान् स्यात् कृतकृत्यश्च स्यात् ॥ किं पुनः साक्षादुपदेशविषयभूतो भवानिति सूच्यते ॥ स्पष्टमिदमवधेहि ॥ अहो माहात्म्यमस्य शास्त्रस्य ॥ भूयादनेन सर्वेषामातिशयितं मङ्गलम् ॥ २० ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते पुरुषोत्तमयोगाख्या-

यार्थप्रदर्शकः पञ्चदशः प्रतिबिंब : ॥

---

॥ श्रीरस्तु ॥

# ॥ अथ षोडशोऽध्यायः ॥

सञ्जयः ॥ भगवतोपदिष्टमिदं गीताशास्त्रं श्रुत्वा अत्र कर्तव्यत्वेनोक्तं कर्मयोग मनुष्ठाय तज्जनितया अन्तःकरणशुध्द्या श्रवणादिद्वारेण ज्ञानयोगं लब्ध्वा तेन मोक्ष माप्तुं के अधिकारिणः के अनधिकारिणः इति जिज्ञासामर्जुनस्य विदित्वा अधिकारिणोऽनधिकारिणश्च विविच्य विवक्षुः सर्वज्ञादिभिरभिवंद्यमानचरणः सर्वज्ञतमः करुणावरुणालयो भगवान् वासुदेवः १ 'महात्मानस्तु मां पार्थ दैवीं प्रकृति माश्रिताः' इति २ 'राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' इति च नवमे याः देवासुरराक्षसप्रकृतय उक्ताः तत्तद्भोगजनितविवेकरागद्वेषमूलकसात्विकराजसतामसवासनारूपास्ता एव तिस्रः प्रकृतयः पंचदशे ३ 'अधश्च मूलान्यनुसन्ततानी' त्यवान्तरमूलत्वेनानूद्य प्रत्यभिज्ञापिताः॥ तासु विहितकर्मात्मकज्ञानोपायानुष्ठानप्रवृत्तिहेतुः सात्विकी शुभवासना दैवी प्रकृतिः ॥ रागद्वेषमूलकनानानर्थहेतुभूतनिषिद्धादिकर्मकरणप्रवृत्तिहेतुः राजसी तामसी च अशुभवासना आसुरी राक्षसी च प्रकृतिः ॥ तत्र विषयभोगप्राधान्येन रागप्राबल्यात् आसुरी ॥ हिंसाप्राधान्येन द्वेषप्राबल्यात् राक्षसी इति विवेकः ॥ इत्यभिप्रेत्य तासु तिसृषु प्रकृतिषु अहितहेतुकरणप्रवृत्तिहेतुभूताशुभवासनात्वेन राक्षसीमासुरीं च प्रकृतिमेकीकृत्य हितहेतुकरणप्रवृत्तिहेतुभूता शुभवासना दैवी संपत् अहितहेतुकरणप्रवृत्तिहेतुभूता अशुभवासना आसुरी संपत् इति ताः तिस्रः प्रकृतीः द्वैराश्येनाश्रित्य दैवीं संपदमभिजाताः अधिकारिणः आसुरीं संपदमभिजाताः अनधिकारिणः इति स्वाशयमाविश्चिकीर्षुः ४ 'स्थितप्रज्ञस्य का भाषा' इत्यादावुक्तरीत्या दैवीं संपदमभिजातानां लक्षणानि तां प्रेप्सूनां साधनानि यानि तेषामादानाय तद्विरोधिनां वर्जनीयानां आसुरीं संपदमभिजातानां लक्षणानि यानि तेषां प्रहाणाय च देवासुरसंपल्लक्षणानि क्रमेण विवक्षुः अभ्यर्हितत्वात् सूचीकटाहन्यायेन प्रथमं वक्तव्यत्वाच्च दैव्याः संपदो लक्षणानि प्रथमं तावदाह ॥

---

१. ९. १३. २. ९. १२. ३. १५. २. ४. २. ५४. ॥

॥ श्रीभगवानुवाच ॥

कृष्णः ॥ अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥

अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् ॥
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥

तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता ॥
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥

**अभयमिति** ॥ हे भारत अर्जुन भयस्य अभावः अभयं सत्वस्य अन्तःकरणस्य सम्यक् शुद्धिः सत्वसंशुद्धिः ज्ञानरूपो योगः ज्ञानयोगः तस्मिन् व्यवस्थितिः निष्ठा ज्ञानं च योगश्च ज्ञानयोगौ ताभ्यां वि विशिष्टा उत्कृष्टा अवस्थितिः स्थितिः सा वा ज्ञानयोगव्यवस्थितिः दानं दमः बाह्येन्द्रियनिग्रहः स च यज्ञश्च स्वाध्यायः वेदाध्ययनं तपः कृच्छ्रचान्द्रायणादिरूपं ब्रह्मचर्यं वा ऋजोः भावः आर्जवं हिंसायाः अभावः अहिंसा सत्यं यथार्थभाषणं क्रोधस्याभावः अक्रोधः त्यागः औदार्यं फलसङ्कल्पादित्यागो वा शान्तिः मनोनिग्रहः पिशुनस्य सूचकस्य भावः कर्म वा पैशुनं तस्याभावः अपैशुनम् भूतेषु दया न लोलुपः अलोलुपः तस्य भावः अलोलुपत्वं ॥ वर्णलोप आर्षः ॥ मृदोर्भावः मार्दवं ह्रीः लज्जा चपलस्य भावः चापलं तस्याभावः अचापलं तेजः पराभिभवसामर्थ्यं क्षमा सहनं धृतिः धैर्यं शुचेर्भावः शौचं द्रोहस्याभावः अद्रोहः अतिशयितो मानः अतिमानः अतिमानः अस्यास्तीत्यतिमानी तस्य भावः अतिमानिता तस्याः अभावः नातिमानिता एते गुणाः देवानां इयं दैवी तां दैवीं संपदं स्वभावं अभिजातस्य प्राप्तस्य भवन्ति ॥ १ ॥ २ ॥ ३ ॥

**अभयं स्वतोऽन्यस्य अन्यस्मात् स्वस्य च भयाभावः॥ उक्तं च मया॥ १'यस्मा-**

---

१. १२. १५.

स्मोद्विजते लोको लोकान्नोद्विजते च यः ॥' इति ॥ सर्वपरिग्रहशून्यो विजने तिष्ठन्नेकाकी कथं जीविष्यामीति भयराहित्यं वा ॥ शास्त्रैकशरणः कर्तव्यं कर्म करोमि का वा गतिरनेन मम भविष्यतीति भीतिं विहाय निर्भयं निस्संशयं अनुष्ठेयानुष्ठानं वा ॥ आगामिदुःखहेतुदर्शनजं दुःखं भयं तदभावो वा ॥ सत्वशुद्धिस्तस्यान्तःकरणस्य नितरां शुद्धिः ॥ ज्ञानयोगे व्यवस्थितिः निष्ठा ॥ ज्ञानं शास्त्रतः आचार्योपदेशाच्च तत्वानामवगमः योगः चित्तैकाग्र्येण मननध्यानपरिपाकवशादनुभवारूढताऽऽपादनं तयोः निष्ठा वा ॥ १दानं यथाशक्ति न्यायार्जितस्य द्रव्यस्य पात्रे विनियोगः॥ दमः बाह्येन्द्रियाणां चक्षुरादीनां निग्रहः ॥ यज्ञः अग्निष्टोमादिः २ देवयज्ञादिर्वा ॥ स्वाध्यायः ऋगादिस्वस्वशाखाध्ययनम् ॥ तप ब्रह्मचर्यम् ॥ कृच्छ्रचान्द्रायणादिभिः कायसंशोषणं वा ॥ आर्जवं मनोवाक्कायकर्मसु एकरूपता ॥ अहिंसा परेषां हिंसाऽकरणम् ॥ सत्यं यथार्थभाषणम् ॥ परैः ताडनपीडननिंदनादिषु कृतेषु क्रियमाणेषु च जायमानस्य क्रोधस्य विवेकादुपशमनम् ॥ त्यागः औदार्यापरपर्याया अकार्पण्येन द्रव्यव्ययशीलता ॥ फलसङ्कल्पादित्यागो वा ॥ आत्महितविरोधिपरिग्रहवर्जनं वा ॥ दानस्य पूर्वमुक्तेः ॥ शान्तिः मनसो निग्रहः ३ निगृहीतस्य मनसो भगवति योजनम् ॥ परोक्षे परस्मै परमर्मप्रकाशनं पैशुनं तदभावः ॥ सर्वभूतेषु विषये दया परदुःखासहिष्णुत्वं तेन तन्निराकरणेच्छा चेत्युभयम् ॥ ४ अलोलुप्त्वं अलोलुपत्वं विषयेषु महान् अभिलाषो लालसा तद्वान् लालसः स एव लोलुपः तस्य भावः लोलुपत्वं तदभावः ॥ विषयेष्वत्यासक्तिराहित्यमिति यावत् ॥ सूक्ष्मरूपेण यावदपरोक्षमाशाया अवस्थानादत्यासक्तिर्वर्जनीया॥ उक्तं च मया॥ ५'विषया विनिवर्तन्ते निराहारस्य देहिनः ॥ रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते'॥ इति ॥ मार्दवं मृदुस्वभावता

---

१. दानमिह मुख्यं विवक्षितम् ॥ निरुपपदत्वात् ॥ तच्च 'दातव्यमिति यद्दानं' इति (१७. २०.) श्लोकेन वक्ष्यमाणम् ॥ २ देवयज्ञादयश्च 'यज्ञशिष्टाशिनः' इति (३. १३.) श्लोकव्याख्याने निरूपिताः॥ ३. दमः मनसो विषयोन्मुख्यनिवर्तनसंशीलनं शान्तिः इन्द्रियाणां विषयोन्मुख्यनिरोधनसंशीलनम्॥ इति वा ॥ ४. अलोलुप्त्व अलोलुत्वं अलोलत्व इति पाठभेदाः॥ अत्र, 'कामोऽभिलाषस्तर्षश्च स महान् लालसा द्वयोः' ॥ 'लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च ' इत्यभिधानमनुसन्धेयम्॥ ५. २. ५९.

१मृदुवचनता वा ॥ ह्रीः अकार्यकरणे अवाच्यवचने च लज्जा ॥ अचापलं चापलं चपलभावः चांचल्यं तदभावः ॥ परमस्पृहणीयविषयसंनिधानेऽपि विवेकेन मनसोऽचांचल्यशब्दितं अविक्रियत्वम् ॥ निरर्थकक्रियाराहित्यं वा ॥ २तेजः पराभिभवसामर्थ्यम् ॥ परैरनभिभाव्यत्वं वा ॥ दारापत्यादिभिरनभिभाव्यत्वं वा ॥ क्षमा सत्यपि क्रोधकारणे क्रोधस्यानुदयः ॥ धृतिः धैर्यम् ॥ शौचं मृज्जलाभ्यां कायशुद्धिर्बाह्यं भावशुद्धिरान्तरम् ॥ अद्रोहः परवृत्तिच्छेदनोद्योगराहित्यं ॥ परहननेच्छाभावो वा॥ नातिमानिता ॥ विद्याधनजनाभिजनैरात्मनः परमपूज्यताभावनमतिमानः तदभावः ॥ मानस्य सर्वथा वर्जनमशक्यं अत उक्तं अतीति ॥ एते षड्विंशतिर्गुणाः दैवीं संपदं देवस्वभावं अभिजातस्य ३प्राप्तस्य भवन्ति॥ देवयोग्यां संपदं ४ अभिलक्ष्य जातस्य तत्प्राप्त्यर्हस्य भवन्ति ॥ दीव्यति प्रकाशते इति देवः प्रकाशकः सत्वगुणः तत्संबन्धिनीं संपदं उत्कर्षशब्दितां समृद्धिं ५ अभि अनुसृत्य जातस्य भवन्ति॥ देवानां संपत् भगवदाज्ञानुवृत्तिरूपा तां ६अभिमुखीकृत्य जातस्य तां निर्वर्तयितुं जातस्य भवन्ति ॥ इमानि देवस्वभावं प्राप्तानां लक्षणानि तं प्रेप्सूनां साधनानि यत्नतः संपादनीयानि ॥ महाकुलप्रसूतत्वात् त्व देवस्वभावार्होऽसि ॥ १ ॥ २ ॥ ३ ॥

अ ॥ ब्राह्मणक्षत्रियवैश्यशूद्राणां चतुर्णां ब्रह्मचारिगृहस्थवानप्रस्थसंन्यासिनां

---

१. अत्र, वाङ्माधुर्यात्सर्वलोकप्रियत्वं वाक्पारुष्यात्सर्वलोकाप्रियत्वम् ॥ को वा लोके कोकिलेनोपकारः को वा लोके वायसेनापकारः' ॥ इति श्लोकोऽनुसन्धेयः ॥ २. अत्र, 'वाडिनेन् वाडि वरुन्दिनेन् मनताल् पेरुन्तुयरिडुँबर्यिपिरन्दु कूडिनेन् कूडि इलैयवर् तम्मोडु अवर् तरुम् कलवियै करुदि योडिनेन् ओडि उय्वदोर् पोरुलाल् उणर्वेनम्पेरुम्पदं तेरिन्दु नाडिनेन् नाडिनान् कण्डुकोण्डेन् नारायणावेन्नुं नामम्' ॥ इति गाथा ॥ 'तायै नन्दै येण्डुं तारमेकिळै मक्कळेण्डुम् नोये पट्टोपिन्देन् उन्नै क्काण्वदोराशैयिनाल् ॥ वेयेय् पूम्बोपिलशूष् विरैयार् तिरुवेङ्कडवा नायेन् वन्दडैन्देन् नलकयाळेन्नै क्कोण्डरुळे ॥ इति गाथा ॥ 'यत्र भार्यागिरो वेदाः स्मृतयः श्वशुरोक्तयः ॥ यत्र स्वप्रतिभा मानम् तस्मै श्रीकलये नमः' ॥ इति श्लोकः ॥ 'निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः ॥ गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष इश नीयते' ॥ इति (१०. ५१. ५२.) भागवतश्लोकश्च इत्यादिकमनुसन्धेयम् ॥ २. बुद्धेः सूक्ष्मता प्रकाशाधिक्यं वा ॥ इति केचित् ॥ ३. प्राप्त्यर्थकत्वात्कर्मणि द्वितीया ॥ ४. ५. ६. अभेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया ॥

चतुर्णां च देवासुरस्वभावभेदो दृश्यते ॥ तत्र देवस्वभाववन्त इमे ब्राह्मणादयः ॥ देवस्वभाववन्त इमे ब्रह्मचारिप्रभृतयः इति बोधयितुं षड्विंशतिरिमे गुणाः चतुर्ष्वपि वर्णेषु चतुर्ष्वपि आश्रमेषु च विभज्य यथायथं योजनीयाः ॥ सर्वेषां गुणानामेकत्रासंभवात् न सर्वसाधारण्येन योजनं युज्यते॥ न हि शूद्रे स्वाध्यायादयः संभवन्ति॥ न क्षमा अशक्तानां ब्राह्मणवैश्यादीनां गुणो भवति ॥ शक्तौ सत्यां विद्यमाना क्षमा हि गुणः ॥ कथं वर्णाश्रमभेदेन विभज्य योजनमिति चेत् ॥ एवं ॥ अभयं सत्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः इति त्रयं संन्यासिनः ॥ ज्ञानयोगव्यवस्थितिः ज्ञानयोगाभ्यां विविशिष्टा इतरविलक्षणा अवस्थितिः जीवन्मुक्तयवस्थारूपा ॥ दानं दमः यज्ञश्च इति त्रयं गृहस्थस्य ॥ दमः इन्द्रियनिग्रहः निषिद्धदेशकालेषु स्त्रीसङ्गाभावः ॥ स्वाध्यायो ब्रह्मचारिणः ॥ मुख्यतो ब्रह्मचारिधर्मत्वकथनार्थं यज्ञशब्दोक्तवेदाध्ययनरूपब्रह्मयज्ञात् पृथगुक्तिः ॥ तपः वानप्रस्थस्य ॥ एवं चतुर्षु आश्रमेषु योजनम् ॥ आर्जवादयः अचापलान्ताः द्वादश ब्राह्मणस्य ॥ आर्जवं श्रद्दधानेषु श्रोतृषु स्वज्ञातार्थासङ्गोपनम् ॥ तेजः क्षमा धृतिः इति त्रयं क्षत्रियस्य ॥ शौचं अद्रोहः इति द्वयं वैश्यस्य ॥ शौचं मायानृतादिराहित्यम् ॥ नातिमानिता शूद्रस्य ॥ ब्राह्मणैः श्रद्दधानान् श्रोतॄन् प्रति स्वज्ञातार्थानामसङ्गोपनेनोपदेशे स्थातव्यम् ॥ क्षत्रियैस्तु प्रजापालने ॥ वैश्यैस्तु तत्तद्वर्णाश्रमिणां रक्षणाय संभृत्य सर्वसंभारान् स्ववशे निक्षिप्य तत्तत्समयेषु तेभ्यस्तेभ्यो दानरूपे व्यापारे ॥ एवं तत्तत्कार्यव्यापृतानां त्रयाणां वर्णानां गृहकृत्यनिर्वहणाय त्रैवर्णिकशुश्रूषायां स्थातव्यं शूद्रैः ॥ सत्यामतिमानितायां न तथा तिष्ठेयुः ॥ अतः तदभावस्तेषामावश्यकः॥ एवं चतुर्षु वर्णेषु योजनम् ॥ तत्तद्गुणतयोक्तानां गुणानां तत्रतत्र प्राधान्यम् ॥ न तदन्येषां गुणानां अभावे तात्पर्यम् ॥ अभयादीनां सर्वेषां गुणानां प्रधानाप्रधानभावेन तत्रतत्र देवस्वभावलक्षणतया विवक्षितत्वात् ॥ १ ॥ २ ॥ ३ ॥

कृष्णः ॥ दंभो दर्पो ऽतिमानश्च[1] क्रोधः पारुष्यमेव च ॥
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥

दंभइति ॥ हे पार्थ दंभः दर्पः अतिमानश्च क्रोधः परुषस्य क्रूरस्य भावः पारुष्यं

---

१. अभिमानश्चेति पाठान्तरम् ॥

च न ज्ञानं अज्ञानं ज्ञानस्याभावः अज्ञान तच्च असुराणां इयं आसुरी तां आसुरीं संपदं अभिजातस्य भवन्ति ॥ ४ ॥

दंभः आत्मनोऽल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनम्॥ दर्पः सत्यपि भयकारणे मदाद्भयेन प्रवृत्तिहेतुर्गर्वः ॥ अतिमानः विद्याधनजनाभिजनैरात्मनो महत्वबुद्धिरतिशयिता ॥ क्रोधः पारुष्यं क्रूरस्वभावता क्रूरवचनतावा ॥ चकारात् भावरूपाः चापलादयः ॥ अज्ञानं ज्ञानाभावः ॥ तेन संशयः विपर्ययश्च ॥ चशब्दात् अभावरूपाः अक्षमा अधृतिः इत्यादयः ॥ एते षट् दोषाः आसुरीं संपदं स्वभावं अभिजातस्य प्राप्तस्यैव भवन्ति ॥ असून् प्राणान् राति आकर्षति इति असुरः परमबाधकः रजोगुणः तमोगुणश्च तत्संबन्धिनीं समृद्धिं अभिलक्ष्य जातस्य भवन्ति इत्यादयोऽर्थाः पूर्ववत् ॥ तत्र असुराणां संपत् भगवदाज्ञाऽतिवृत्तिरूपा ॥ इमानि आसुरं स्वभावं प्राप्तानां लक्षणानि देवस्वभावं प्रेप्सुभिर्यत्नतोवर्जनीयानि ॥ हे पार्थ मातृगुणसंपत्या नेमे दोषास्त्वामभिभवेयुः ॥ सर्वानर्थमूलभूतोऽयं असुरस्वभावः ॥ ४ ॥

सञ्जयः ॥ देवस्वभावः अवश्यमुपादेयः असुरस्वभावः अवश्यं वर्जनीयः इति बोधयितुं तयोः फलभूतौ अर्थानर्थावाह भगवान् ॥

कृष्णः ॥ दैवी संपद्विमोक्षाय निबन्धायासुरी मता ॥ ४॥ ॥

दैवीति ॥ देवानां इयं दैवी संपत् विमोक्षाय भवति ॥ असुराणां इयं आसुरी संपत् नितरां बन्धः निबन्धः तस्मै भवति ॥ इति मे मता ॥ ४॥ ॥

उक्तलक्षणः देवस्वभावः प्रकृतिबन्धात् निरवशेषं मोक्षाय भवति ॥ देवस्वभाववन्तः ज्ञानभक्तिवैराग्यादिद्वारा प्रकृतिबन्धान्मुच्यन्ते ॥ आसुरी संपत् निबन्धाय नियतबन्धाय बन्धनैयत्याय भवति ॥ असुरस्वभाववन्तः रागद्वेषादिद्वारा १'जन्मकर्मफलप्रदा' मित्युक्तरीत्या नानाविधानि कर्माणि कृत्वा नानाविधानि जन्मानि लब्ध्वा चिराय संसारिणो भवन्ति ॥ निषिद्धानि कृत्वा नरके पतन्ति च ॥ वक्ष्यते च ॥ २'पतन्ति नरकेऽशुचा'विति ॥ श्वसूकरादियोनिषु जायन्ते च ॥ वक्ष्यते च ॥ ३'ततो यान्त्यधमां गति'मिति ॥ इति वेदशास्त्रपुराणमर्मज्ञानां महतां मम च मतम् ॥ अतो दैव उपादेयः ॥ आसुरः सर्वथा वर्जनीयः ॥ ४॥ ॥

१. २. ४३. २. १६. १६. ३. १६. २०.

सञ्जयः ॥ दैवासुरस्वभावौ ताभ्यां जायमानौ अर्थानर्थौ च श्रुतवतः मम स्वभावः किं दैवः उतासुरः इति सन्दिहानस्य आसुरश्चेत् तेनाहं महतीं विपदं प्राप्नुयामिति शोचतः पार्थस्य संशयं शोकं च विदित्वा कुतः सन्दिहान इव शोचन्निव दृश्यसे इति पृष्टेन तेन मम स्वभावः आसुरश्चेत् किं कुर्यामिति शोचामीत्यभिहितः कृष्णस्तमाह ॥

कृष्णः ॥ मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥

मेति ॥ हे पाण्डव दैवीं संपदं अभिजातोऽसि मा शुचः शोकं मा कार्षीः ॥ ५ ॥

त्वया एवमत्र शोको न कार्यः त्वं तु दैवीं संपदं अभिजातोऽसि॥ सूचितश्चायमर्थः भारत पार्थ इति संबोधनाभ्याम् ॥ न त्वं तदभिप्रायमज्ञासीः ॥ १ पाण्डोस्तनूजः किल त्वं स तु परमधार्मिकः॥ अतस्त्वं वंशगुणसंपत्त्या मातृगुणसंपत्त्या पितृगुणसंपत्त्या च देवस्वभावार्होऽसि ॥ न त्वदीयगुणसंपत्त्या ॥ स्वतो गुणहीनोऽपि वंशगुणतो मातापितृगुणतश्च गुणवान् भवति हि लोके ॥ ५॥ ॥

अर्जुनः ॥ देवस्वभावः असुरस्वभावश्चेति द्वावेव स्वभावावभिहितौ ॥ तत्कथं॥ गन्धर्वयक्षादिस्वभावभेदानां विद्यमानत्वात् ॥ राक्षस्याः संपदः आसुर्यामन्तर्भावेऽपि मानुष्यास्संपदः तृतीयस्या विद्यमानत्वाच्च ॥ वद ॥

कृष्णः ॥ द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ॥
दैवो विस्तरशः प्रोक्तः आसुरं पार्थ मे शृणु ॥ ६ ॥

द्वाविति ॥ अस्मिन् लोके भूतानां प्राणिनां सर्गौ स्वभावौ सृष्टी वा भूतसर्गौ देवानां अयं दैवः असुराणां अयं आसुरः स च इति द्वावेव ॥ भूतान्येव सर्गौ इति वा॥

---

१. 'पाण्डव' इत्यनेन त्वामिव अन्येऽपि पाण्डवाः त्वद्भ्रातरः देवस्वभावार्हा इति न हि देवप्रकृतीनां धर्मोत्तराणां पुत्रा आसुराः संभवन्तीति च सूच्यते ॥ अत्र, शोकं दृष्ट्वा तत्परिहाराय 'माशुच' इति तत्र हेतुतया 'संपदं दैवीं अभिजातोऽसि' इति अहो मम संपत् दैवी इत्युत्सेकं परिहर्तुं 'पाण्डव' इति च उक्तम् ॥

दैवः सर्गः विस्तरशः विस्तरेण प्र सम्यक् उक्तः प्रोक्तः हे पार्थ आसुरं सर्गं विस्तरशः मे सकाशात् शृणु ॥ ६ ॥

अस्मिन् लोके संसारमण्डले वा भूतानां स्वभावौ द्वावेव सृष्टी द्वे एव वा दैवः आसुरश्च इति ॥ सृज्येते इति सर्गौ दैवः आसुरश्च इति सृज्यमानौ पदार्थौ द्वावेव॥ भूतान्येव सर्गौ भूतसर्गौ इति व्युत्पत्तिः ॥ गन्धर्वयक्षादिस्वभावानां मनुष्यस्वभावस्य च यथायथमन्यत्र अन्तर्भावविवक्षया द्वयो रेवाभिधानं ॥ धर्मप्रधानो दैवः अधर्मप्रधान आसुरः इति उपाधिद्वयेन द्वैविध्योपपत्तिः ॥ देवाः असुराः मनुष्याः यक्षराक्षसगन्धर्वादयश्चेति जातिभेदविवक्षायां जातिभेदेन बाहुविध्यं स्यात्॥ नात्र तथा विवक्षा ॥ किंतु मनुष्याधिकारत्वाच्छास्त्रस्य अधिकारिणोऽनधिकारिणश्चेति द्विविधा मनुष्या एव विवक्षिताः ॥ धर्मप्रधानस्वभाववन्तोऽधिकारिणः अधर्मप्रधानस्वभाववन्तोऽनधिकारिणः इति धर्माधर्मप्रधानस्वभावरूपोपाधिद्वयविवक्षया द्वैविध्योपपत्तिः॥ अतः द्वयोरेव स्वभावयोरुक्तिः ॥ दैवः सर्गः विस्तरेणोक्तः आसुरः सर्गः संग्रहेणोक्तः कथमेतत् ॥ उपादेयानामन्यतमस्यानुक्त्या तदनुपादाने कार्योत्पत्तेर्विलम्बः स्यात् ॥ वर्जनीयानामन्यतमस्यानुक्त्या तदुपादाने अनर्थ एव स्यात् ॥ पथ्याचरणाय उपादेयानां उक्तिप्रस्तावे भिषजा यस्यकस्यचिदनुक्तौ न तदनुपादानेन रोगिणो रोगो वर्धते ॥ वर्जनीयानां मध्ये यस्यकस्यचिदनुक्तौ तदुपादानेन रोगिणो रोगो वर्धेत एव लोके ॥ अतः वर्जनीयानि असुरस्वभावलक्षणानि विस्तरेण वक्तव्यानीतिचेत् हे पार्थ दैवः स्वभावः विस्तरेण प्रोक्तः ॥ आसुरं स्वभावं विस्तरशो वदामि शृणु तमवधानेन ॥ पितृष्वसुः पुत्रत्वेन मम त्वं परमप्रेमास्पदमसि तेन वर्जनीयानि सर्वथा त्याजयितुकामोऽस्मि ॥ अतः वर्जनीयानि असुरस्वभावलक्षणानि विस्तरेण ब्रवीमि ॥

वि ॥ इह कर्मभूमौ प्राणिनां दैव आसुरश्चेति द्वौ सर्गौ द्वे उत्पत्ती कथमुत्पत्तेर्दैवत्वं आसुरत्वं चेति चेत् प्राचीनपुण्यकर्मवशात् दैवस्वभावरूपभगवदाज्ञाऽनुवृत्तिकरणार्थत्वाद्दैवत्वम्॥ प्राचीनपापकर्मवशात् असुरस्वभावरूपभगवदाज्ञाऽतिवृत्तिकरणार्थत्वादासुरत्वम् ॥ दैवी उत्पत्तिः विस्तरेणोक्ता आसुरीं उत्पत्तिं शृणु ॥ दैवी उत्पत्तिर्यदर्था स आचारः ज्ञानयोगकर्मयोगभक्तियोगनिष्ठारूपः १ 'प्रजहाति यदा कामान्' ॥ २ 'दैवमेवापरे यज्ञं ॥ ३ 'चतुर्विधा भजंते मां' ॥ ४ 'महात्मानस्तु मां पार्थ' ॥ ५ 'अभयं सत्वसंशुद्धिः' इत्यादिभिः तद्गतामभिधानमुखेन

१. २. ५५. २. ४. २५. ३. ७. १६. ४. ९. १३. ५. १६. १.

प्रपंचितः ॥ आसुरी उत्पत्तिः यदर्था स ह्यनाचारः ॥ विस्तरेण वक्ष्यते दैवस्वभाववतामाचारः आदानाय विस्तरेणोक्तः ॥ असुरस्वभाववतामाचारं वर्जनाय विस्तरेण ब्रवीमि ॥ शृणु तमवधानेन ॥ ६॥ ॥

कृष्णः ॥ प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ॥
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

**प्रवृत्तिमिति** ॥ असुराणां अयं आसुरः असुरस्वभावः एषां अस्तीति आसुराः जनाः प्रवृत्तिं च निवृत्तिं च न विदुः न जानन्ति ॥ तेषु शुचेर्भावः शौचं न विद्यते ॥ आचारश्चापि न विद्यते ॥ सत्यं च न विद्यते ॥

असुरस्वभाववन्तः कर्तव्ये प्रवृत्तिं अकर्तव्ये निवृत्तिं च स्वर्गादिसाधनं प्रवृत्तिधर्मं मोक्षसाधनं निवृत्तिधर्मं च प्रवृत्तिहेतुभूतं विधिवाक्यं निवृत्तिहेतुभूतं निषेधवाक्यं च न जानन्ति ॥ तेषु शौचं बाह्यमान्तरं च न विद्यते ॥ किंच तेषु आचारः मनुयाज्ञवल्क्याद्युक्तनित्यनैमित्तिककर्मानुष्ठानरूपः न विद्यते ॥ तेषु प्रियहितयथार्थभाषणं न विद्यते ॥ शौचाचारसत्यदयादिगुणराहित्यमसुरस्वभावलक्षणम् ॥ असुरा राक्षसाश्च [१] तद्वन्तो हि प्रसिद्धाः ॥ ७ ॥

कृष्णः ॥ असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ॥
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

**असत्यमिति** ॥ ते आसुराः जगत् न विद्यते सत्यः संहारकर्ता विष्णुः यस्य तत् असत्यं प्रतितिष्ठति अनयेति प्रतिष्ठा स्थितिहेतुरीश्वरः न विद्यते प्रतिष्ठा यस्य तत् अप्रतिष्ठं न विद्यते ईश्वरः नियामकः यस्य तत् अनीश्वरं परस्परात् संभूतं परस्परसंभूतं तत् न भवतीत्यपरस्परसंभूतं आहुः वदन्ति ॥ अन्यत् कारणं किं कामः हेतुः मूलं यस्य तत् कामहेतुकं च आहुः ॥ न सत्यं असत्यं मिथ्याभूतं न विद्यते प्रतिष्ठा स्थितिः

---

१. 'अग्निहोत्राणि वेदाश्च राक्षसानां गृहेगृहे ॥ दया सत्यं च शौचं च राक्षसानां न विद्यते' ॥ इति श्लोकस्तत्कथा चेत्युभयमनुसन्धेयम् ॥

यस्य तत् अप्रतिष्ठं न विद्यते ईश्वरः नियामकः यस्य तत् अनीश्वरं अपरस्परात् परस्परात् अन्योन्यतः संभूतं कामः हेतुः यस्य तत् कामहेतुकं अन्यत् कारणं किं अस्ति इत्याहुः ॥ ते जगत् सत्यं ब्रह्म तत्कार्यं सत्यं ब्रह्मकार्यं तत् न भवतीत्यसत्यं न विद्यते प्रतिष्ठा आधारो विष्णुः यस्य तत् अप्रतिष्ठं न विद्यते ईश्वरः नियन्ता विष्णुः यस्य तत् अनीश्वरं न परस्परसंभूतं अपरस्परसंभूतं अन्यत् किं अस्ति कामहेतुकमेव इति आहुः॥८॥

द्वै ॥ ते आसुराः जगत् असत्यं अप्रतिष्ठं अनीश्वरं च वदन्ति ॥ नियमनकर्ता स्थितिकर्ता संहारकर्ता च यो विष्णुः तद्राहितं वदन्ति ॥ विष्णुं जगतः सृष्टिस्थितिसंहारनियमनादिकर्तारं न जानन्ति ॥ अपरस्परसंभूतं परस्परात्संभूतं न [१]'अन्नाद्भवन्ति भूतानि' इत्युक्तरीत्या ईश्वरादभिव्यक्तवेदबोधिततत्तद्वर्णाश्रमोचितविहितकर्ममूलकं न भवति ॥ अन्यत् कारणं किमिति प्रश्नः ॥ कामहेतुकमित्युत्तरं ॥ काममूलकस्त्रीपुंससंभोगैकहेतुकं स्त्रीपुंससंभोगमात्रादेव जगति सर्वेषामुत्पत्तिः नान्यत् कारणमस्तीति वदन्ति ॥ एवं वदन्त आसुराः ॥ ते आसुराः जगत् असत्यं शुक्तिरजतवत् मिथ्या ॥ शुक्तिरजतस्येव प्रतिष्ठा स्थितिस्तस्य नास्ति ॥ रजतज्ञानेन शुक्तिरिव ब्रह्मज्ञानेन बाध्यम् ॥ ज्ञानबाध्यत्वरूपमिथ्यात्वादेव नियामकेश्वरराहितम् ॥ यदि सत्यं स्यात् तर्हि तन्नियन्ता स्यात् ईश्वरः असत्यत्वादनीश्वरं ॥ यतो जायते स ईश्वरोऽस्तु इति चेत् ॥ अपरस्परसंभूतं परस्परसंभूतं न एकस्मादेकस्य जनिर्न ॥ सत्यत्वे एकस्माज्जायेत ॥ न ह्यसत्यं शुक्तिरजतादिकमेकस्माज्जायते ॥ तर्हि कुतः प्रतीयत इति चेत् कामहेतुकं कामादिमूलभूताविद्याद्यपरपर्यायमायाहेतुकं अविद्यमानमपि मायया प्रतीयत इति वदन्ति ॥ किं कीदृशं इति प्रश्नः ॥ सत्यं न चेत् असत् स्यात् असच्चेत् न प्रतीयेत ॥ असत्यं न चेत् सत् स्यात् सच्चेत् न बाध्येत॥ इदं च प्रतीयते बाध्यते च ॥ कथमिदमिति चेत् अन्यत् इत्युत्तरं सदसद्भ्यामन्यत् सदसद्विलक्षणं अनिर्वचनीयं अत उभयं घटते इति वदन्ति ॥ एवं वदन्त आसुराः ॥ ८ ॥

अ ॥ ते आसुराः जगत् असत्यं न सत्यं असत्यं अनृतं तद्युक्तं वदन्ति ॥ यथा वयमनृतप्रचुराः तथा सर्वं जगदपि अनृतप्रचुरमिति वदन्ति ॥ सर्वेऽप्यनृतवादिन इति वदन्ति ॥ वयमिव वेदशास्त्रादयोऽपि मिथ्यैव वदन्तीति च वदन्ति ॥ न विद्यते सत्यं तत्त्वार्थप्रतिपादकं वेदशास्त्रपुराणादि यस्मिन् तत् असत्यं वदन्ति ॥

[१] ३. १४.

षेदानां तदनुयायिनां च शास्त्राणां प्रामाण्यं न मन्यन्ते ॥ न विद्यते धर्माधर्मरूपा प्रतिष्ठा सुखदुःखादिवैचित्र्यव्यवस्थाहेतुः यस्य तत् अप्रतिष्ठं वदन्ति ॥ न धर्माधर्मनिमित्तकं जगतः सुखदुःखादिवैचित्र्यम् ॥ किंतु तत्तद्वस्तुस्वभावादेव सुखदुःखादिवैचित्र्यमिति वदन्ति ॥ न विद्यते उत्पादकः शुभाशुभकर्मणोः फलदाता च ईश्वरो यस्य तत् अनीश्वरं वदन्ति ॥ उत्पादकस्येश्वरस्याभावे कथं जगत उत्पत्तिरिति चेत् ॥ अपरस्परसंभूतं अपरशब्दः परशब्दपर्यायः अपरस्परं परस्परमित्यर्थः अपरस्परात् अन्योन्यतः संभूतं वदन्ति ॥ स्त्रीपुंसयोरन्योन्यसंयोगादेव जगदुत्पद्यते नान्यत्कारणमस्ति ईश्वरादृष्टादिकमिति वदन्ति ॥ तयोः संयोगस्य कारणमीश्वरोऽभ्युपगन्तव्य इति चेत् जगत् [1]कामहेतुकं वदन्ति॥ अन्योन्यानुराग एव स्त्रीपुंसयोस्संयोगकारणं नेश्वरादिकमिति वदन्ति ॥ अन्यत् कामादन्यत् कारणं किमस्ति न किमपीति वदन्ति॥ आसुराः जगत् असत्यं सत्यवादरहितं अतः अप्रतिष्ठं महत्वरहितं निर्लज्जत्वात् लोकापवादभयवर्जितं अनीश्वरं ईश्वरनिग्रहभयवर्जितं अपरस्परसंभूतं परस्परसंभूतं न अतो न कर्तृसापेक्षं कामहेतुकं अतः पित्रादिभक्तिरहितं इति आहुः॥ किमन्यत्॥ असुरस्वभावात् असत्याः अप्रतिष्ठाः अनीश्वराः स्वयंभुवमात्मानं मन्यमानाः पित्रादिभक्तिरहिताः आसुराः आत्मवत्सर्वमपि जगत् असत्यत्वादियुक्तं पश्यन्ति ॥ इति वा ॥ वेदप्रामाण्यस्य तद्बोधितधर्माधर्मव्यवस्थायाः तत्फलदातुरीश्वरस्यचानङ्गीकारेण यथेष्टमाचरन्तः शौचाचारसत्यदयादिरहिताः विहिते अप्रवर्तमानाः निषिद्धात् अनिवर्तमानाश्च पुरुषार्थभ्रष्टाः भवन्त्यासुराः ॥ अतो वर्जनीया प्रयत्नत इयमासुरी संपत् ॥ ॥८ ॥

वि ॥ ते आसुराः जगत् न सत्यं असत्यं वदन्ति ॥ सत्यशब्दितब्रह्मकार्यत्वात् ब्रह्मशरीरत्वाच्च ब्रह्मात्मकं जगत् तत् तादृशं न वदन्ति॥ किंतु अब्रह्मात्मकं वदन्ति॥ परब्रह्मरूपोविष्णुरेव सर्वस्य जगतः कारणं आत्मभूतश्चेति न मन्यन्ते ॥ किंतु अन्येषामपि कारणत्वं मन्यन्ते ॥ प्रतितिष्ठति अनयेति प्रतिष्ठा इति व्युत्पत्त्या प्रतिष्ठाशब्दित आधारो विष्णुः न विद्यते प्रतिष्ठा आधारभूतो विष्णुर्यस्य तत् अप्रतिष्ठं वदन्ति ॥ जगदखिलं विष्णुना आधारेण विधृतमिति न मन्यन्ते ॥ भूरादयो लोकाः चन्द्रसूर्या-

---

१. कामहैतुकमिति पाठान्तरं ॥ कामहेतुकमेव कामहैतुकम् ॥

दयो ग्रहाः नक्षत्रादीनि च विष्णुनैव विधृतानि तिष्ठन्तीति न मन्यन्ते किंतु तत्तच्छक्त्या वा विष्णवन्याधारेण वा विधृतानि मन्यन्ते ॥ सर्वस्य जगतो नियन्ता विष्णुरेव॥ न विद्यते ईश्वरो नियन्ता विष्णुर्यस्य तत् अनीश्वरं वदन्ति ॥ विष्णुमेव नियन्तारं न मन्यन्ते ॥ किंतु अन्यस्यापि नियन्तृत्वं मन्यन्ते ॥ योषित्पुरुषयोरन्योन्यसम्बन्धेन मनुष्यपश्वादिकं सर्वं उपलभ्यते ॥ अतः सर्वं जायमानं जगत् परस्परसंभूतं तद्भिन्नं अन्यत् किमस्ति न किमपि इति वदन्ति ॥ सर्वं जगत् योषित्पुरुषयोरन्योन्यानुरागैकहेतुकम् ॥ अतः सर्वस्य जगतः काम एव हेतुः न विष्णुः तदन्यो वा इति मन्यन्ते वदन्ति च ॥ जरायुजांडजस्वेदजोद्भिज्जानां मध्ये जरायुजांडजोत्पत्तेः कामहेतुकत्वेऽपि स्वेदजोद्भिज्जोत्पत्तेः कामहेतुकत्वाभावात् कथं जगदखिलं कामहेतुकमिति इति चेत् ॥ कामहेतुकमिति दृष्टान्तः ॥ जरायुजांडजोत्पत्तिर्यथा अन्वयव्यतिरेकाभ्यां कामहेतुका तथा स्वेदजोद्भिज्जोत्पत्तिरपि अन्वयव्यतिरेकव्यवस्थिततत्तत्सामग्रीवशादेव जायते किमीश्वरेणेति तेषामाशयः ॥ एवं वदन्त आसुराः वर्जनीया च यत्नतः आसुरी संपत् ॥ ८ ॥

कृष्णः ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

**एतामिति॥** ते आसुराः एतां पूर्वोक्तां दृष्टिं ज्ञानं अवष्टभ्य आश्रित्य अल्पा बुद्धिः येषां ते अल्पे सुखे बुद्धिः येषां ते अल्पे देहे अहमिति बुद्धिः येषां ते अल्पबुद्धयः नष्टः अज्ञातः आत्मा जीवः येषां ते नष्टः दुष्टत्वात् नष्टप्रायः आत्मा मनः येषां ते नष्टः आत्मा विवेकबुद्धिः येषां ते नष्टः आत्मा स्वभावः येषां ते नष्टः नरकाद्यनर्थभाक् आत्मा स्वस्वरूपं येषां ते नष्टात्मानः उग्रं कर्म येषां ते उग्रस्य रुद्रस्येव कर्म संहाररूपं येषां ते उग्रकर्माणः जगतः न हिताः अहिताः बाधकाः तादृशाः सन्तः जगतः क्षयाय नाशाय प्रभवन्ति समर्थाः भवन्ति ॥ अहिताः सन्तः जगतः क्षयाय उग्रकर्माणः सिंहव्याघ्रादिरूपाः प्रभवन्ति जायन्ते इति वा ॥ ९ ॥

पूर्वोक्तं चार्वाकादिमतसिद्धं ज्ञानमाश्रित्य स्वयं नष्टात्मानो भवन्ति ॥ एषां एतादृशविपरीतज्ञानात् आत्मा नश्यति ॥ नरकाद्यनर्थं प्राप्नोति ॥ कुत इति चेत्

नष्टात्मानः नष्टस्वभावाः भवन्ति ॥ उक्तज्ञानात् स्वभाव एषां भिद्यते ॥ अत एव नष्टात्मानः नष्टविवेकबुद्धयः कुत इति चेत् नष्टात्मानः देह एव आत्मत्वबुध्या एतै रासुरैः देहातिरिक्तत्वेन आत्मा न ज्ञातः आत्मा नष्टः अदर्शनं गतः ॥ कुत इति चेत् नष्टात्मानः रागद्वेषादिदोषदुष्टचित्ताः॥ कुत इति चेत् ॥ अल्पबुद्धयः अल्पा बुद्धिरेषां॥ अत एव अल्पे स्रक्चन्दनवनितादिभोगे बुद्धिरेषाम् कुत इति चेत् अल्पे मलमूत्ररक्तमांसास्थिमये देहे अहमिति बुद्धिः भोग्यमिदमिति बुद्धिश्च एषाम् ॥ अत एव उग्रं धर्मशास्त्रविरुद्धं देहपोषणमात्रफलकं परहिंसाप्रधानं कर्म कुर्वन्तः उग्रो रुद्रः स इव संहारकर्मणि व्यापृताः जगतः अहिताः जगतः प्राणिजातस्य नाशाय प्रभवो भवन्ति॥ १'अन्नाद्भवन्ति भूतानी'त्युक्तरीत्या जगत्स्थितिहेतुभूतवेदतदुक्तधर्मनाशनेन जगदखिलं नाशयन्ति ॥ क्षयाय प्रभवन्ति कलावुत्पद्यन्ते ॥ कलावुत्पन्नाः एवं वदन्तः कुर्वन्तः कारयन्तः ईदृशार्थप्रतिपादकशास्त्राणि रचयन्तः तेन बुद्धिभेदं जनयन्तश्चासुराः जगन्नाशयन्ति॥ क्षयाय उग्रकर्माणो भवन्ति॥ सिंहव्याघ्रादिरूपेण जगन्नाशायोत्पद्यन्ते॥ तादृशं निहीनं जन्म प्राप्नुवन्ति ॥ अत आसुरी संपदवश्यं वर्जनीया ॥ ९ ॥

कृष्णः ॥ काममाश्रित्य दुष्पूरं दंभमानमदान्विताः ॥
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥

काममिति ॥ ते दम्भश्च मानश्च मदश्च दम्भमानमदाः तैः अन्विताः युक्ताः दम्भमानमदान्विताः सन्तः दुःखेनापि पूरयितुमशक्यं दुष्पूरं कामं आश्रित्य न सन्तः असन्तः असन्तश्च ते ग्राहाः निश्चयाश्च असद्ग्राहाः असत् अनर्थं ग्राहयन्तीत्यसद्ग्राहाः असन् अशास्त्रीयः ग्राहः ग्रहणं येषां ते असद्ग्राहाः तान् गृहीत्वा न शुचि अशुचि व्रतं येषां ते अशुचिव्रताः सन्तः प्रवर्तन्ते ॥ १० ॥

दंभः महत्त्वप्रदर्शनं मानः महत्त्वाभिमानः मदः मानहेतुकः महदवधीरणाहेतुश्चित्तविकारविशेषः औद्धत्यापरपर्यायः एतैः अन्विताः महताऽपि प्रयत्नेन पूरयितुमशक्यं काममाश्रित्य क्षुद्रकर्मतत्फलप्रतिपादकशास्त्राभ्यासेन १ अशुभनिश्चयान् गृहीत्वा अनर्थहेतूनर्थान् ज्ञात्वा वा तस्मात् मोहात् सत् परं ब्रह्म तदितरत् स्वर्गादिकं

१. असन्तश्च ते ग्राहाश्च इति असत् अर्थ ग्राहयन्ति [illegible] ॥

असत् तत् गृह्णन्ति ग्राहयन्ति वा असद्ग्राहाः काम्यकर्मतत्फलप्रतिपादका मन्त्राः तान् गृहीत्वा १ अन्यायगृहीतपरिग्रहान् गृहीत्वा अन्यायेन साधनानि संपाद्य मद्यमांसादिसेवनश्मशानवासोच्छिष्टत्वावस्थादिपरमाशुद्धव्रतवन्तः सन्तः कुत इति चेत् अनेन निधिं संपादयामि मानिनीर्वशीकरोमि इत्याद्यशुद्धसङ्कल्पाः क्षुद्रदेवताराधनादौ प्रवर्तन्ते ॥ स्वभावोऽयमासुरः वर्जनीयश्चायं यत्नतः ॥ १० ॥

कृष्णः ॥ चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ॥
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

चिन्तामिति ॥ ॥ ते परिमातुं शक्या परिमेया न परिमेया अपरिमेया तां प्रलयः मरणं अन्तः पर्यवसानं यस्यास्सा प्रलयान्ता तां चिंतां उपाश्रिताः काम्यन्त इति कामाः विषयाः कामानां उपभोगः कामोपभोगः परमः येषान्ते कामोपभोगपरमाः एतावत् इति निश्चिताः निश्चयवन्तश्च सन्तः प्रवर्तन्ते इति पूर्वेण वा ईहन्ते इत्युत्तरेण वा अन्वयः ॥ ११ ॥

एते आसुराः सदा चिंतायुता वर्तेरन् ॥ चिंता च निरर्थिका ॥ अयमेवं इयमेवं स एवं सेवं इत्येवं गुणदोषचिन्तनरूपा सा च अपरिमिता एतावतीति परिमातुमशक्या ॥ न च तस्याः पर्यवसानं मरणपर्यन्ता एतादृशीं चिंतामाश्रिताः ॥ विषयोपभोग एव परमपुरुषार्थ इति मतिरेषाम् ॥ अनुभोक्तव्यं जन्मनः फलं एतावदेव॥ नातोऽन्यत् किमपीति निश्चयवन्त इमे ॥ उक्तं चेदं मया ॥ २'नान्यदस्तीति वादिनः ॥ कामात्मानः स्वर्गपरा' इति ॥ आसुरा एवंभूताः सन्तः प्रवर्तन्त इति पूर्वेण वा ईहन्त इत्युत्तरेणवाऽन्वयः ॥ ११ ॥

कृष्णः ॥ आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ॥
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥

आशेति ॥ ते आशा एव पाशाः आशापाशाः आशापाशानां शतानि आशापाशशतानि तैः बद्धाः कामश्च क्रोधश्च कामक्रोधौ परं च तत् अयनं आश्रयः तच्च परायणं कामक्रोधौ परायणं येषां ते कामक्रोधपरायणाः तादृशाः सन्तः कामानां विषयाणां

---

१. असत् ग्राहः ग्रहणं येषां तान् ॥ २. २ २ ४२.

भोगः अनुभवः कामोपभोगः तस्मै कामभोगार्थं न न्यायः अन्यायः न विद्यते न्यायः यस्मिन्वा अन्यायः तेन अर्थानां धनानां सञ्चयाः राशयः अर्थसञ्चयाः तान् ईहन्ते कांक्षन्ते ॥ १२ ॥

बन्धनाकर्षणहेतुत्वेनपाशतुल्यानां अशक्योपायविषयविषयकाशानां शतैः बध्वा इतस्ततः आकृष्यमाणाः १' ध्यायतो विषयान् पुंस ' इत्युक्तरीत्या विषयध्यानेन जायमानः कामः विहन्यमाने तस्मिन् जायमानः क्रोधः तौ नितरां सततमाश्रिताः विषयानुभवार्थं न्यायविरुद्धमार्गेण दुष्प्रतिग्रहचौर्यवञ्चनादिरूपेण धनराशीन् कांक्षन्ते ॥ धनराशीन् प्रति प्रवर्तन्ते ॥ धनसंपादनानि कुर्वन्ति ॥ स्वभावोऽयमासुरः वर्ज्यश्च यत्नेन ॥ १२ ॥

कृष्णः ॥ इदमद्य मया लब्धं इदं प्राप्स्ये मनोरथम् ॥
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

इदमिति ॥ अद्य मया इदं लब्धं इमं मनोरथं प्राप्स्ये ॥ इदं अस्ति इदमपि धनं मे पुनः भविष्यति १३ ॥

इदं द्रव्यं गोभूहिरण्यादिकं क्षेत्रपुत्रादिकं वा मयैव नान्यसाहाय्यकेन इदानीं लब्धं अस्ति ॥ मनोरथं मनोगतं इदं च प्राप्स्ये ॥ रथगताविति धातुः ॥ आत्मनेपदप्रयोगात् सर्वमिदं स्वप्रयोजनाय न परप्रयोजनायेति सूच्यते ॥ इदानीं मम इदं धनमस्ति इदमपि धनं मम पुनः भविष्यति ३ ॥ १३ ॥

कृष्णः ॥ असौ मया हतश्शत्रुर्हनिष्ये चापरानपि ॥
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥

असाविति ॥ असौ शत्रुः मया हतः अपरान् अन्यान् शत्रूनपि हनिष्ये संहरिष्यामि च अहं ईश्वरः नियन्ता अहं भुज्यते सुखं एभिरिति भोगाः सुखानुभवसाधनानि अस्य सन्तीति भोगी अहं सिद्धः पुत्रपौत्रधनधान्यादिसंपन्नः कृतकृत्यो वा अहं बलं अस्यास्तीति बलवान् सुखं अस्यास्तीति सुखी ॥ १४ ॥

असावेकः शत्रुर्मया हतः अपरानपि शत्रून् हनिष्ये स्वप्रयोजनार्थं संहरिष्यामि

१. २. ६२. २. इमं प्राप्स्ये मनोरथमिति पाठान्तरम् ॥ ३. इत्यज्ञानेति तृतीयश्लोकस्थेनान्वयः ॥

च ॥ अहं ईश्वरः अनेकेषामीशितव्यानां ईशिता अहं अनेकविविधविचित्रभोगसाधनोपपन्नः अहं सिद्धः पुत्रपौत्रधनधान्यज्ञानशक्त्यादिसंपन्नः कृतकृत्यो वा अहं बलवान् धनबलजनबलशरीरबलवान् अतः सुखी ॥ १४ ॥

कृष्णः ॥ आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥
यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः ॥ १५ ॥

आढ्यइति ॥ अहं आढ्यः महाधनी अहं अभिजनः प्रशस्तं कुलं अस्यास्तीति अभिजनवान् महाकुलीनः अस्मि ॥ मया सदृशः अन्यः कोऽस्ति॥ अहं यक्ष्ये यागादिकं करिष्यामि ॥ दास्यामि ॥ मोदिष्ये सन्तोषं प्राप्स्यामि॥ इति अज्ञानेन अविवेकेन विपरीतज्ञानेन वा वि विशेषेण विविधं मोहः एषां सञ्जातः मोहिताः अज्ञानविमोहिताः॥ १५ ॥

अहं महाधनी अहं [१]महाकुलीनः मया सदृशः कोऽस्ति इत्येव पूर्तौ अन्यः कोऽस्तीत्युक्त्या मत्सदृशोऽहमेव नान्य इति सूच्यते ॥ अहं यक्ष्ये प्रतिष्ठार्थं धनलाभार्थं जीवनार्थं वा यागादिकं करिष्यामि ॥ स्तावकेभ्यो नटविटादिभ्यो धनं दास्यामि ॥ नृत्यगीतादिभिः सन्तोषं प्राप्स्यामि ॥ ईश्वर एव सर्वस्य कर्ता कारयिता नियन्ता नाहं स्वतन्त्रः इत्येवं विवेकाभावेन इति 'इदमद्य' त्याद्युक्तरीत्या विशेषेण विविधं ईश्वरानुग्रहनिरपेक्षेण मयैव सर्वं कर्तुं शक्यम् अतो मयैव सर्वं क्रियते किमीश्वरादृष्टादिभिः इत्येवं मोहशब्दितं विपरीतज्ञानं प्राप्ताः ॥ १५ ॥

कृष्णः ॥ अनेकचित्तविभ्रान्ताः मोहजालसमावृताः ॥
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

अनेकेति॥ न एकं अनेकं अनेकं च तत् चित्तं च अनेकचित्तं अनेकेषु विषयेषु चित्तं अनेकचित्तं तेन अनेकानि च तानि चित्तानि च अनेकचित्तानि तैः वा विविधं विशेषेण भ्रान्ताः अनेकचित्तविभ्रान्ताः भ्रमशब्दितविपरीतज्ञानवन्तः मोहः अज्ञानं मोह एव जालं वागुरा मोहजालं तेन समावृताः सम्यक् आवृताः मोहः जालमिव मोहजालं तेन समावृताः वा मोहजालसमावृताः भुज्यन्त इति भोगाः सुखानि कामानां विषयाणां भोगाः कामभोगाः

१ प्रशंसायां मतुप् ॥ दोष्मानितिवत् ॥

विषयसुखानि कामानां भोगाः अनुभवा वा तेषु विषये प्र अधिकं सक्ताः प्रसक्ताः तादृशाः सन्तः न शुचिः अशुचिः तस्मिन् अशुचौ नरके पतन्ति ॥ १६ ॥

अनेकचिन्तायुक्तेन मनसा अनेकैः चित्तैः चित्तवृत्तिभिः चिन्तारूपवृत्तियुक्तं मनः चित्तमित्युच्यते ॥ एकस्यापि चित्तस्य चिन्तारूपवृत्तिबाहुल्यादनेकत्वोक्तिः॥ तेन अनेकेषु विषयेषु प्रवृत्तं चित्तं तेन विशेषेण विविधं भ्रान्तिशब्दितविपरीतज्ञानयुक्ताः कुत इति चेत् मोहः अज्ञानं तदेव जालं सूत्रमयमत्स्यग्रहणयन्त्रं वागुरा तेन सम्यक् आवृताः तिरोहितसदसद्विवेकज्ञानाः ॥ विभ्रान्तिः विपरीतज्ञानं मोहस्त्वज्ञानम् ॥ विभ्रान्तिरेव मोहः तेन जालेनेव समावृता इति वा ॥ विषयसुखेषु नितरां सक्ताः आसुराः१ प्रवृत्तिं च निवृत्तिं च 'त्याद्युक्तलक्षणलक्षिताः विण्मूत्ररक्तमांसपूयश्लेष्मादिपरमाशुचिवस्तुमयपूरपूरिते वैतरण्यादौ नरके पतन्ति ॥ उक्तं च मया ॥ २'बुद्धिनाशात्प्रणश्यती 'ति ॥ १६ ॥

**अर्जुनः** ॥ 'यक्ष्ये दास्यामी 'त्युक्तरीत्या यागादि कुर्वतां तेषां कथं नरके पतनं युज्यते ॥ ब्रूहि ॥

**कृष्णः ॥ आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ॥**
**यजन्ते नामयज्ञैस्ते दंभेनाविधिपूर्वकम् ॥ १७ ॥**

आत्मेति ॥ ते आसुराः आत्मना स्वेन संभाविताः श्लाघिताः स्तब्धाः अनम्राः धनं च मानश्च धनमानौ धनमानाभ्यां मदः धनमानमदः तेन अन्विताः युक्ताः मानश्च मदश्च मानमदौ धनेन मानमदौ धनमानमदौ धनमानमदाभ्यां अन्विताः इति वा तादृशाः सन्तः यजन्ते नाम यागादिकं कुर्वन्त्येव परंतु तत् दंभेन विधिः पूर्वः यस्मिन् कर्मणि तत् विधिपूर्वकं न विधिपूर्वकं अविधिपूर्वकम् ॥ नामयज्ञैः इत्येकं पदम् नाम्ना यज्ञाः नाम्ने यज्ञाः इति वा नामयज्ञाः तैः दंभेन अविधिपूर्वकं यजन्ते ॥ इति वा ॥ १७ ॥

आत्मनैव बहुमानितास्ते पूज्यत्वाभिमानवन्तः स्वात्मानं स्वयमेव बहुमानयन्ति श्लाघन्ते च नान्यैर्बहुमान्यन्ते ॥ अतएव स्तब्धाः अनम्राः विनयगन्धरहिताः ॥ कुत इति चेत् धनमानमदान्विताः ॥ धनेन यौ मानमदौ ताभ्यामन्विताः ॥ धनेन मानेन च

१. १६. ७. २. २. ६३.

यो मदः तेनान्विताः ॥ एतादृशाः आसुराः यज्ञैर्यजन्ते नाम यजन्त एव ॥ परन्तु ते यज्ञा आसुराः ॥ कुत इति चेत् ॥ दंभेन यजन्ते ॥ स्वमहत्त्वख्यापननिमित्तेन स्वमहत्त्वख्यापनायेति यावत् ॥ यजन्ते ॥ न तु श्रद्धया अन्तःकरणशुद्धिज्ञानद्वारा मोक्षाय ॥ अविधिपूर्वकं यजन्ते ॥ नासुरयज्ञेषु मन्त्रतन्त्रादिविध्युक्तविधिविधानम् ॥ किं तु सालभंजिकाविवाहोत्सववत् रागप्राप्तकेवलतन्त्रमात्रम् ॥ अत आसुरास्ते यज्ञाः ॥ १नाम्नैव यज्ञास्ते ॥ न वस्तुतो यज्ञत्वं तेषां ॥ दीक्षितः सोमयाजी वाजपेययाजी इति २नामलाभाय यज्ञास्ते ॥ नात्मशुद्धिद्वारा मोक्षाय ॥ अतो यागादिकरणेऽपि नैषां शुभा गतिः ॥ किन्तु नरक एव पतनम् ॥ अतो युक्तमुक्तम् ॥ १७ ॥

कृष्णः ॥ अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ॥

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

अहङ्कारमिति ॥ अहङ्कारं बलं बलमूलकाभिमानं दर्पं कामं काममूलकाभिमानं काममेव वा क्रोधं च सम्यक् श्रिताः संश्रिताः आत्मा च परे च आत्मपरे आत्मपरेषां देहाः आत्मपरदेहाः तेषु विद्यमानं मां प्र अधिकं द्विषन्तः अभ्यसूयकाः असूयामतिशयितां कुर्वन्तः तादृशास्सन्तः यजन्ते इति पूर्वेणान्वयः ॥ १८ ॥

अहमेव सर्वं साधयामीत्यहंकारं मदीयबलेनैव सर्वं संपद्यत इति बलमूलकाभिमानं दर्पं मदीयकामेनैव सर्वं संपद्यते न क्वापि मे कामो विहन्यते इति काममूलकाभिमानं ३ 'बलंबलवतां चाहं कामरागविवर्जितम्॥ धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इत्युक्तिभंग्या निषिद्धं कामरागान्वितं बलं धर्मविरुद्धं कामं इति वा क्रोधं च सम्यक् आश्रिताः आत्मनो देहे परेषां भार्यापुत्रादीनां परमप्रेमास्पदानां देहेषु च विद्यमानम् ॥ अतः परमप्रेमार्हमपि मां प्रद्विषन्तः तादृशेऽपि मयि नितरां द्वेषं कुर्वन्तः ॥ श्रुतिस्मृत्यादिरूपं यत् मदीयं शासनं तस्योल्लंघनं प्रद्वेषः तं कुर्वन्तः ॥ राजाज्ञोल्लंघनमपि राजद्वेष उच्यते हि लोके ॥ यदीश्वरोऽस्ति तर्हि सः कर्तुमनिच्छन्तं मां बलात्कारयतु कर्तुमिच्छन्तं मां निवारयतु इत्यादिभिः कुयुक्तिभिः मत्सद्भावं अपलपन्तः॥ आत्मनः स्वस्य परेषां ऋत्विजां पशूनां च देहेषु सन्तं मां द्विषन्तः श्रद्धाया अभावादविधिना हिंसया स्वपरद्रोहमाचरन्तः ॥ आत्मनो मम देहे लीला-

१. नामयज्ञैः इत्येकं पदं नाम्ना यज्ञाः इति विग्रहः ॥ २. नाम्ने नामतो वा यज्ञाः इति विग्रहः ॥
३. ७. ११

**विग्रहे मनुष्यत्वबुध्या परेषां उत्तमानां परमभागवतानां प्रह्लादादीनां देहेषु साधारणत्वबुध्या तत्र स्थितं मां अवजानन्तः॥ उक्तं च मया॥ १'अवजानन्ति मां मूढा' इति ॥ २ 'अव्यक्तं व्यक्तिमापन्नं मन्यंते मामबुद्धय' इति च ॥ कुत इति चेत् ॥ अभ्यसूयकाः मयि मत्स्वरूपस्थितिप्रवृत्तिगुणशीलाद्युपदेष्टरि गुर्वादौ तादृशे शास्त्रे च दोषारोपरूपां अतिशयितां असूयां कुर्वन्तः यजंते ॥ अतस्ते यज्ञा आसुराः ॥ तत्करणेऽपि न तेषां शुभा गतिः ॥ किंतु नरके पतनमेव ॥ १८ ॥**

अर्जुनः ॥ यथाकथंचित् यज्ञदानादि कुर्वाणेषु तेषु भवतः कृपा चेत् तेषां नरकपातः कथं स्यात् ब्रूहि ॥

**कृष्णः ॥ तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥**

**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥**

**आसुरीं योनिमापन्ना मूढा जन्मनिजन्मनि ॥**

**मामप्राप्यैव कौंतेय ततो यान्त्यधमां गतिम् ॥ २० ॥**

तानिति ॥ द्विषतः द्वेषं कुर्वतः क्रूरान् न शुभं अशुभं अशुभं एषां अस्तीत्यशुभाः तान् नराणां मध्ये नरेषु वा अधमाः नराधमाः तान् आसुरान् संसारेषु जननमरणप्रवाहेषु असुराणां असुरस्वभाववतां इमाः आसुर्यः तासु आसुरीषु योनिष्वेव अजस्रं पुनःपुनः क्षिपामि ॥ संसारेषु नरकमार्गेषु क्षिपामि ॥ ततः आसुरीषु योनिषु दुष्टयोनिषु क्षिपामि ॥ संसारेषु निमित्तसप्तमी दुःखनिमित्तं सिंहव्याघ्रादिदुष्टयोनिषु क्षिपामि इति वा ॥ १९ ॥

आसुरीमिति ॥ हे कौन्तेय अर्जुन असुराणां इयं आसुरी तां आसुरीं योनिं आपन्नाः प्राप्ताः ते जन्मनि जन्मनि मूढाः अविवेकिनः विपरीतज्ञानिनश्च सन्तः मां मत्प्राप्तिहेतुभूतं साधनं अप्राप्यैव ततः तस्याः योनेः सकाशात् अधमां गम्यत इति गतिः तां योनिं श्वसूकरादितनुं वा यान्ति प्राप्नुवन्ति । २० ॥

---

१. ९. ११. २ ७ २४.

मयि मदीयेषु च द्वेषमाचरतः क्रूरं हिंसादिरूपं कर्म कुर्वतः श्मशानवासाद्यशुभाचारान् अत एव नराधमान् तान् आसुरान् पुनःपुनर्जननमरणात्मकेषु संसारेषु आसुरीषु असुरस्वभावयुक्तासु योनिष्वेव पुनःपुनः क्षिपामि ॥ संसारेषु नरकमार्गेषु क्षिपामि ॥ ततः सिंहव्याघ्रादिदुष्टयोनिषु क्षिपामि ॥ संसारेषु दुःखेषु निमित्तसप्तमी दुःखनिमित्तं दुःखानुभवायेतियावत् ॥ व्याघ्रादियोनिषु क्षिपामि ॥ आसुरीं योनिं प्राप्तास्ते जन्मनिजन्मनि मूढाः अविवेकिनः विपरीतज्ञानिनश्च सन्तः मत्प्राप्तिहेतुभूतं ज्ञानमार्गं अप्राप्यैव ततः तस्याः योनेः अधमां श्वसूकरगर्दभादियोनिं क्रिमिकीटादियोनिं गम्यत इति गतिः तनुः श्वसूकरादितनुं प्राप्य ततोऽधमां वृक्षपाषाणादितनुं पैशाचीं तनुं वा यान्ति॥ ततस्तादृशनिकृष्टतमजन्मप्राप्त्यनन्तरं अधमां गतिं 'तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ संप्रकीर्तितौ' इत्युक्तनित्यनरकरूपां प्राप्नुवन्ति ॥ आसुरास्ते अधमां गतिं नीयंते नीत्वा च तां गतिमधो रुष्टेन मया निपात्यन्ते ॥ न तेषु मम कृपालेशः ॥ अतो नरकाद्यनर्थपरंपरैव तेषां ॥ अतः उक्तरीत्या महानर्थप्राप्तिहेतुरासुरी संपत् अवश्यं यत्नतः परिवर्जनीया श्रेयोऽर्थिभिरखिलैः ॥१९॥२०॥

अर्जुनः ॥ महता प्रबन्धेनोक्ता इयमासुरी संपत् विविधविचित्रानन्तभेदभिन्ना न पुरुषायुषायुतेनापि परिहर्तुं शक्या ॥ का गतिः ॥ वद ॥

कृष्णः ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥

काम: क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

त्रिविधमिति ॥ कामः क्रोधः तथा लोभः इति इदं आत्मनः जीवस्य नरकस्य त्रियः विधाः प्रकाराः यस्य तत् त्रिविधं द्वारम् ॥ आत्मनः नाशनम् ॥ आत्मनः नाशनं विवेकज्ञाननाशनं नरकस्य तिर्यग्योनेः द्वारं हेतुभूतं इति वा॥ तस्मात् एतत् त्रयं त्यजेत्॥ त्यज इति पाठान्तरम्॥ २१ ॥

हे पार्थ कामः क्रोधः तथा लोभः कामक्रोधयोर्नरकद्वारत्वं आत्मनाशकत्वं च युक्तं तत्कथं लोभस्येत्याशङ्कानिवृत्तये तथा लोभ इत्युक्तम् ॥ इति इदं त्रिविधं आत्मनः नरकस्य रौरवादेः द्वारं प्रवेशमार्गः ॥ प्रवेशमार्गो हि द्वारमित्युच्यते ॥ ततः आत्मनः अतिनीचतिर्यग्योनिप्रापकम् ॥ तत्प्राप्तिरेव ह्यात्मनो नाशः ॥ नरकस्य तिर्यग्योनेः द्वारं नराणां अकं दुःखं यस्मिन्निति व्युत्पत्तिः ॥ कुत इति चेत् आत्मनः

नाशनं धर्माधर्मकर्तव्याकर्तव्यार्थानर्थबन्धमोक्षविवेकविज्ञाननाशकम् ॥ विवेकनाशो ह्यात्मनो नाशः ॥ नरकस्य असुरस्वभावलक्षणस्य द्वारं आत्मनो नाशनं यथावस्थितात्मस्वरूपप्राप्तिविरोधि ॥ नश अदर्शन इति धातुः ॥ तस्मात् एतत् त्रयं त्यजेत् ॥ चण्डालमिव कामं कृष्णसर्पमिव क्रोधं मलमिव लोभं च दूरतस्त्यजेत् ॥ एतत्त्रितयत्यागे सर्वाऽप्यासुरी संपत् परित्यक्ता भवति ॥ एतत्त्रितयमूला हि सर्वाऽप्यासुरी संपत् ॥ तस्मात्त्वं एतत्त्रयं यत्नतः सर्वथा [१]परित्यज ॥ २१ ॥

अर्जुनः ॥ कामक्रोधलोभानां त्यागे किं फलं लभेत ॥ ब्रूहि ॥

कृष्णः ॥ एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ॥

आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

एतैरिति ॥ हे कौन्तेय अर्जुन तमसः नरकस्य द्वाराणि तमोद्वाराणि तैः एतैः त्रिभिः विमुक्तः नरः पुमान् आत्मनः स्वस्य श्रेयः श्रेयस्साधनं आचरति करोति ततः तेन परां उत्कृष्टां गतिं मोक्षरूपां याति प्राप्नोति ॥ २२ ॥

हे पार्थ नरकद्वारभूतैः एतैः कामक्रोधलोभैः त्रिभिः निरवशेषं मुक्तः पुमान् स्वस्य श्रेयस्साधनं विहितं कर्म सम्यगनुतिष्ठति ॥ तेन परां गतिं याति ॥ ज्ञानद्वारा मोक्षं प्राप्नोति ॥ परमप्राप्यं मामेव प्राप्नोति ॥ कामादित्रितयत्यागिनां न केवलं मूलोच्छेदादसुरस्वभावप्रतिनियतसकलदोषोच्छेदेन 'पतन्ति नरकेऽशुचौ' ॥ 'क्षिपाम्यजस्रमशुभा' नित्युक्तानर्थानवाप्तिमात्रम् ॥ किंतु कामत्यागेन फलानपेक्षया क्रोधत्यागाद्रागद्वेषरहिततया लोभत्यागादवश्यकर्तव्यविधिविहिततत्समुचितद्रव्यव्ययसाहित्येन साङ्गोपाङ्गतया च विहितकर्मकरणेन ज्ञानद्वारा मोक्षप्राप्तिरपि भवति ॥ कामी न फलानपेक्षया कुर्यात् ॥ क्रोधी न रागद्वेषराहित्येन कुर्यात् ॥ लोभी न उचितद्रव्यव्ययपूर्वकं कुर्यात् ॥ किंतु फलापेक्षया रागद्वेषाभ्यां उचितवित्तव्ययराहित्येन च कुर्यात् ॥ तच्च ज्ञानद्वारा मोक्षाय न कल्पेत ॥ कामादित्रयत्यागी तु यथावत् सम्यगात्मनः श्रेयस्साधनं कर्म कुर्यात् ॥ तेन च ज्ञानद्वारा मोक्षमाप्नुयात् ॥ अतः एतत्त्रितयत्याग आवश्यकः ॥ अतस्त्वं तत्त्रितयं त्यज ॥ त्वं हि मातृशुद्ध्या शुद्धः ॥ अतः पूर्वत्र अत्र च कौन्तेयेति संबोधनं ॥ २२ ॥

१. त्रयं त्यजेदिति पाठः ॥ हे पार्थ भवान् त्रयं त्वं त्यज इत्यर्थः ॥

अर्जुनः ॥ आसुरसंपत्परिवर्जनं कामादित्रयपरित्यागपूर्वकं विहितकर्मानुष्ठानं च कुतो हेतोः संपद्यते ॥ शास्त्रादिति चेत् ॥ कश्चित् कामकारात् शास्त्रविधिमतिवर्तते ॥ तस्य का गतिः ॥ ब्रूहि ॥

कृष्णः ॥ यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥

न स सिद्धिमवाप्नोति न सुखं न परां गतिं ॥ २३ ॥

यइति ॥ यः शास्त्रस्य विधिः शासनं शास्त्रविधिः तं उत्सृज्य कामस्य कारः प्रेरणं कामकारः तेन कामकारतः वर्तते प्रवर्तते ॥ सः सिद्धिं ज्ञानं चित्तशुद्धिं वा न अवाप्नोति ॥ सुखं ऐहिकं नावाप्नोति ॥ परां गतिं स्वर्गं मोक्षं वा नावाप्नोति ॥ सिद्धिं उपायसिद्धिं नाप्नोति ॥ सुखं स्वर्गसुखं परां गतिं मोक्षं इति वा ॥ सिद्धिं स्वर्गसुखं सुखं ऐहिकं परां गतिं मोक्षं इति वा ॥ सुखं कर्मफलं ऐहिकमामुष्मिकं च सुखं परां गतिं शाश्वतं मोक्षसुखं च नावाप्नोति ॥ अतः सिद्धिं कर्मफलं नावाप्नोति ॥ इति वा ॥२३ ॥

यः वेदशास्त्रपुराणादिरूपं भगवतः शासनं तत्र यो विधिः लिङ्लोट्तव्यप्रत्ययादिरूपः कुर्यात् न कुर्यात् कुरु मा कुरु कर्तव्यं न कर्तव्यम् इत्येवं विधिनिषेधात्मकः कर्तव्याकर्तव्यज्ञानहेतुः तं उत्सृज्य शास्त्रविधिविधानमुल्लंघ्य शास्त्रं वेदादिः तदाख्यं विधिं शासनशब्दितां भगवदाज्ञां उल्लंघ्येति वा॥ कामस्य कारः अधिकारः प्रेरणं तेन वर्तते प्रवर्तते ॥ कामेन कारः करणं तेन वर्तते कामानुगुणमशास्त्रीयं कर्माचरति ॥ सः न ज्ञानं तद्धेतुभूतां चित्तशुद्धिं वा प्राप्नोति ॥ न च ऐहिकम् सुखमाप्नोति ॥ नापि स्वर्गं वा मोक्षं वा आप्नोति ॥ शास्त्रविरुद्धकामकारेणानुष्ठितस्य कर्मणः निवृत्तिकर्मत्वाभावाच्च तेन ज्ञानस्य मोक्षस्य च लाभः ॥ भगवत्प्रीतिहेतुत्वाभावाच्च तेनैहिकसुखस्य लाभः ॥ तन्मूलकमैहिकसुखं तु अल्पत्वात् नश्वरत्वात् दुःखमिश्रत्वाच्च न सुखं किन्तु दुःखहेतुत्वाद्दुःखमेव ॥ अशास्त्रीयकाम्यकर्मत्वात् न तेन स्वर्गसुखलाभः॥ न सिद्धिं फलरूपां चित्तशुद्धिं प्राप्नोति ॥ न च स्वर्गसुखम् ॥ नापि मोक्षम् ॥ न सिद्धिं आमुष्मिकफलहेतुभूतामुपायसिद्धिं प्राप्नोति॥ अतः न स्वर्गसुखं न च मोक्षम्॥ सिद्धिं स्वर्गसुखं सुखमैहिकं सुखं परां गतिं मोक्षं इति वा॥ सिद्धिं कर्मफलं नाप्नोति॥

तत्कर्म निष्फलं भवति॥ कुत इति चेत् कर्मणः फलं नश्वरमैहिकामुष्मिकसुखं शाश्वतं मोक्षसुखं चेति ॥ तदुभयं न प्राप्नोति ॥ अतस्तत्कर्म निष्फलं भवति ॥ कामकारात् शास्त्रविधिविधानोल्लंघने ऐहिकामुष्मिकफलरूपेणानवाप्तिरिहोक्ता ॥ नरकतिर्यग्योनिरूपानिष्टावाप्तिरुक्ता १'पतन्ति नरकेऽशुचौ' २ 'क्षिपाम्यजस्रमशुभान्' ॥ ३ 'ततो यान्त्यधमां गति'मित्यादिना ॥ तस्मादनुवर्तनीयं शास्त्रं तदनुवर्तने आसुरसंपत्परिवर्जनं विधिविहितकर्माचरणं च संपद्यते ॥ २३ ॥

अर्जुनः ॥ ततः किं अस्त्वेवं मया किं कर्तव्यम् ॥

कृष्णः ॥ तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

तस्मादिति ॥ ते तव कार्यं च अकार्यं च कार्याकार्ये कार्याकार्ययोः व्यवस्थितिः व्यवस्था कार्याकार्यव्यवस्थितिः तस्यां शास्त्रं प्रमाणम् ॥ शास्त्रे विधानं शास्त्रविधानं तस्मिन् उक्तं शास्त्रविधानोक्तं ज्ञात्वा इह कर्मभूमौ कर्म कर्तुं अर्हसि ॥ २४ ॥

तस्मात् शास्त्रस्य अनतिलङ्घनीयत्वात् ते परमास्तिकस्य तव त्वादृशस्य च कार्यमिदं अकार्यमिदं इति निर्णये वेदादिशास्त्रमेव प्रमाणं तत्वार्थज्ञानजनकम् ॥ अतः शास्त्रे विधानं विधिः तेन बोधितं कर्म तदङ्गतत्फलतत्प्रदपरमात्मतत्वतन्महिमादिकं ज्ञात्वा इह लोके ज्ञानपूर्वकं कर्म स्वकीयं शुद्धाख्यं कर्तुमर्हसि ॥ त्वं इह कर्मभूमौ कर्माधिकारे च वर्तसे ॥ अतः कर्तव्यमेव विहितं कर्म त्वया ॥ अर्हसीत्यनेन ते इत्येतदभिप्रेता योग्यता सूच्यते ॥ त्वया शुद्धरूपं कर्म कर्तव्यम् ॥ त्वादृशेन त्वदन्येन स्वस्ववर्णाश्रमोचितं विहितं कर्म कर्तव्यम् ॥ इतीदमवधेयमतिमङ्गलम् ॥ २४ ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते देवासुरसंपद्विभागयोगाध्यायार्थप्रदर्शकः षोडशः प्रतिबिंबः ॥ १६ ॥

---

१. १६ १६ २ १६. १९ ३. १६. २०.

|| अथ सप्तदशोऽध्यायः ||

सञ्जय ॥ दै ॥ ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ इति ज्ञानपूर्वकमनुष्ठितस्यैव कर्मणः सफलत्वं उक्तं भगवता ॥ तदुक्तवचनानन्तरं हा हा कृष्णेन महता प्रबन्धेन महता तात्पर्येण सर्वेषामस्मदनुष्ठितस्य कर्मयोगस्य महती विपत्तिरापादिता ॥ यथाकथंचित्कर्म कर्तव्यमित्युक्ते विहितं कर्म कुर्युः ॥ ज्ञानपूर्वकमेव कर्तव्यं ज्ञानपूर्वकमनुष्ठितमेव सफलं अन्यदफलं इत्युक्ते न कुर्युः ॥ ज्ञानं संपाद्य तत्पूर्वकं कर्तव्यं तथा कृतमेव सफलं ज्ञानसंपादनं तु दुष्करमिति परं अतः कर्माकरणमेव ज्यायः इति मत्वा न कुर्युः ॥ कुर्वाणाश्च त्यजेयुः ॥ ज्ञानवर्जितानां कथं कर्माणि प्रवृत्तिरुत्पद्यते इति चेत् ॥ शिष्टाचारदर्शनेन पूर्वसंस्कारेण च करोत्येवं पिता करोत्येवं पितामहः अतो मयाऽप्येवं कर्तव्यमिति श्रद्धया प्रवृत्तिरुत्पद्यते ॥ अतः विनापि विधिज्ञानं श्रद्धया ये विहितं कर्म कुर्वन्ति तेन तेषां किमपि फलमुत्पद्यते इत्येव वक्तव्यम् ॥ अन्यथा महताऽऽयासेन कृष्णस्य कर्मोपदेशप्रयासोऽनर्थकः स्यादिति मन्यते विना ज्ञानं श्रद्धया कर्म कुर्वतां फलमस्ति न वा ॥ नेति तु न युक्तम् ॥ श्रद्धया कर्म कुर्वद्भ्यः विधिज्ञानाभावदोषेण फलस्याप्रदानमनुचितम् ॥ ददाति हि विना ज्ञानं श्रद्धया शुश्रूषारूपकर्म कुर्वद्भ्यो यथाश्रद्धं फलं प्रसन्ना गुरवो देवाश्च ॥ अतः अस्तीत्येव वक्तव्यम् ॥ अस्ति चेत् तत्कीदृशं कर्मानुगुणमिति चेत् ॥ विना ज्ञानं श्रद्धयाऽनुष्ठितं कर्म कीदृशं किं तत् सात्त्विकं उत राजसं आहो तामसमिति भगवन्तं पृच्छति ॥

अ ॥ 'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥ न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥ ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ इति भगवतोक्तं श्रुतवानर्जुनः केचित् शास्त्रविधिं ज्ञात्वा तमनुसृत्य ज्ञानेन श्रद्धया च कर्म कुर्वन्ति ॥ केचित् ज्ञात्वाऽपि शास्त्रविधिं अश्रद्धया तमुत्सृज्य कामकारेण कर्म कुर्वन्ति ॥ केचित् अज्ञात्वाऽपि शास्त्रविधिं शिष्टाचारदर्शनजनितया श्रद्धया कर्म कुर्वन्ति ॥ तेषु ये शास्त्रविधिं ज्ञात्वा तमनु

ऽप्य श्रद्धया यजन्ते ते दैवस्वभाववन्तो महान्तः ॥ ये ज्ञात्वाऽपि शास्त्रविधिं अश्रद्धया तमुत्सृज्य कामकारेण यजन्ते ते आसुरा इति च भगवतोक्तम् ॥ 'तस्माच्छास्त्रं प्रमाणं ते' इति ॥ 'यः शास्त्रविधिमुत्सृज्य' इति च ॥ ये तु अज्ञात्वा शास्त्रविधिं शिष्टाचारदर्शनजनितया श्रद्धया यजन्ते ते किं सात्त्विका दैवाः उत राजसाः तामसाः आसुराः इति भगवन्तं पृच्छति ॥

यि ॥ 'यः शास्त्रविधिमुत्सृज्य' इत्यादिनोक्तं भगवतार्जुन कर्म द्विविधं शास्त्रीयमशास्त्रीयं चेति॥ तत्र शास्त्रीयं सफलं अशास्त्रीयमासुरं निष्फलमित्युक्तं भगवता 'यः शास्त्रविधिमुत्सृज्य' इत्यादिना ॥ तच्च युक्तम् ॥ अशास्त्रीयस्यापि श्रद्धयाऽनुष्ठाने श्रद्धापूर्वकत्वेन स्यादेव फलमिति मत्वा अशास्त्रीयत्वान्निष्फलत्वमजानानः 'यः शास्त्रविधिमुत्सृज्य' इति पूर्वोक्तं अशास्त्रीयस्य निष्फलत्वं प्रकृष्टविलक्षणसत्फलाभावाभिप्रायकमिति च मन्वानो भगवन्तं अशास्त्रीयस्य श्रद्धापूर्वकमनुष्ठितस्य फलं कीदृशमिति पृच्छति ॥

॥ अर्जुन उवाच ॥

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ॥
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

य इति ॥ हे कृष्ण ये शास्त्रस्य विधिः ज्ञानं शास्त्रे विधिः विधानं वा शास्त्रविधिः तं उत्सृज्य श्रद्धया अन्विताः युक्ताः सन्तः यजन्ते कर्म कुर्वन्ति ॥ तेषां निष्ठा स्थितिस्तु का ॥ किं सत्त्वं आहो उत रजः तमः ॥ १ ॥

ये शास्त्रज्ञानं विहाय अतः शास्त्रविधिं विहाय श्रद्धया युक्ताः देवताराधनादिकं कर्म कुर्वन्ति तेषां निष्ठाशब्दिता कर्मानुष्ठानरूपा स्थितिः किं [1]सात्त्विकी उत राजसी तामसी वा ॥ किं ते सात्त्विकाः उत राजसाः तामसाश्च किं तेषां तत्कर्म सात्त्विकं उत राजसं तामसं वा ॥ किं तस्य सात्त्विकं फलं उत राजसं तामसं वा ॥ तेषां किं [2]सत्त्वमाश्रयः उत रजः तमो वा ॥ तेषां प्रवृत्तिः किं सत्त्वगुणाश्रिता उत [3]रजस्तमःश्रिता ॥ किं तेषां सत्त्वे स्थितिः उत रजसि तमसि वा ॥ 'श्रद्धयाऽन्विताः' इत्यनेन अश्रद्धया ये-

१ सत्त्वादिशब्दाः सात्त्विकादिपराः ॥ २. सत्त्वादिशब्दाः सत्त्वादिगुणपराः ३. सत्त्वमित्येका कोटिः रजस्तमः इत्यपरा कोटिः ॥ अत एव आहो इत्यस्य मध्ये प्रयोगः ॥

ऽनुतिष्ठन्ति स तान् प्रति प्रष्टव्यं मया वक्तव्यं वा त्वया इति सूच्यते ॥ तु शब्दो विशेषसूचकः ॥ तेषां तु तेषामेव इति वा ॥ भक्त्याद्येकपैकत्यासत्व भक्त्याऽनुतिष्ठतां फलसद्भाव उचितः अतः पृच्छामि ब्रूहि ॥ १ ॥

सञ्जयः ॥ एवं पृष्टो भगवान् अर्जुनं प्राह ॥

## ॥ श्रीभगवानुवाच ॥

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ॥
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥

सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत ॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धस्स एव सः ॥ ३ ॥

त्रिविधेति ॥ देहः एषां अस्तीति देहिनः तेषां श्रद्धा वर्तते ॥ स्वभावः जीवस्वरूपं तेन जाता स्वभावजा जीवस्वरूपानुगुणेति यावत् ॥ स्वभावः पूर्वसंस्कारः तज्जा स्वः भावः रुचिरूपधर्मविशेषः तज्जा इति वा ॥ सा श्रद्धा सात्त्विकी राजसी च तामसी चैव इति तिस्रः विधाः प्रकाराः यस्याः सा त्रिविधा भवति ॥ तां श्रद्धां शृणु ॥ २ ॥

सत्वेति ॥ सर्वस्य प्राणिजातस्य श्रद्धा सत्वं जीवस्वरूपं पूर्वजन्मसंस्कारसंस्कृतं अन्तःकरणं वा तस्य अनुरूपा सत्वानुरूपा भवति ॥ हे भारत अर्जुन अयं पुरुषः जीवः श्रद्धामयः श्रद्धास्वरूपः श्रद्धाप्रचुरः श्रद्धाविकारो वा ॥ यः या श्रद्धा यस्य सः यच्छ्रद्धः सः स एव ॥ ३ ॥

द्वै ॥ हे पार्थ 'यजन्ते श्रद्धयाऽन्विताः' इत्युक्तां श्रद्धां फलविभागार्थं विभजामि तां शृणु ॥ जीवानां श्रद्धा सात्त्विकी राजसी च तामसी च इति त्रिविधा भवति ॥ त्रिविधा भवन्ती च सा श्रद्धा स्वभावजैव स्वभावशब्दितजीवस्वरूपजैव ॥ जीवस्वरूपानुगुणैव ॥ सर्वस्य प्राणिजातस्य श्रद्धा सत्वशब्दितजीवस्वरूपानुरूपा भवति ॥ कुत इति चेत् ॥ अयं जीवः श्रद्धामयः श्रद्धास्वरूपः श्रद्धायाः स्वरूपभूतत्वात् ॥ यः यच्छ्रद्धः सः स एव ॥ यस्य या श्रद्धा सः स एव ॥ सात्त्विकश्रद्धावान् सात्त्विकः ॥ राजसश्रद्धावान् राजसः ॥ तामसश्रद्धावान् तामसः ॥ सात्त्विकादीनां कर्माणि क्रमात् सात्त्विकादीनि ॥ तेषां फलानि क्रमात् सात्त्विकादीनि ॥ श्रद्धा तावत् द्विविधा ॥ स्वरूपरूपा मनोवृत्तिरूपा चेति ॥ तत्र स्वरूपरूपा त्रिविधा सात्त्विकी राजसी तामसी

चेति ॥ उत्तमानां सात्त्विकी मध्यमानां राजसी अधमानां तामसी ॥ मनोवृत्तिरूपा तु न तथा ॥ उत्तमानां राजसी तामसी च कदाचित् स्यात् मध्यमानां सात्त्विकी तामसी च कदाचित् स्यात् ॥ अधमानां सात्त्विकी राजसी च कदाचित् स्यात्॥ अतः स्वरूपभूतश्रद्धयैव सात्त्विकादिभेदो ज्ञेयः ॥ त्रिधा भवन्तीं तां श्रद्धां शृणु ॥ तल्लिङ्गभूतान् कर्मभेदान् शृणु ॥ विना विधिज्ञानं श्रद्धया कर्म कुर्वाणाः श्रद्धाभेदात् सात्त्विकाः राजसाः तामसाश्च भवन्ति ॥ तदनुरोधेन तेषां कर्मणां सात्त्विकादीनि फलानि भवन्ति ॥ अतः श्रद्धया कर्म कुर्वाणानां श्रद्धानुगुणं फलमस्त्येव॥ न विध्यज्ञानेन कर्म निष्फलं भवति ॥ 'ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि' इति ज्ञानपूर्वकमनुष्ठेयत्वोक्तिस्तु ज्ञात्वा श्रद्धयाऽनुष्ठाने महत् फलमुदेतीत्येवमभिप्राया ॥ अतो निश्शङ्कमनुतिष्ठन्तु सर्वे स्वीयं कर्मेति निरवद्यम् ॥ २ ॥ ३ ॥

अ ॥ श्रद्धा तावत् द्विविधा ॥ पूर्वसंस्कारजा शास्त्रसंस्कारजा चेति ॥ तत्र शास्त्रसंस्कारजा शास्त्रस्य कारणस्यैकरूपत्वादेका ॥ उक्तं च मया ॥ [1]'व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दने'ति ॥ सा च शास्त्रज्ञानवताम् ॥ तया चानुतिष्ठन्ति ते॥ अतस्तदनुरूपं फलमेकरूपं तेषाम् ॥ या [2] पूर्वसंस्कारजा श्रद्धा सैव त्रिविधा ॥ पूर्वसंस्काररूपहेतोः सात्त्विकादिभेदेन त्रिविधत्वात् ॥ तयैवानुतिष्ठन्ति शास्त्रज्ञानहीनाः॥ अतस्तदनुरूपं सात्त्विकादिभेदेन त्रिविधं फलं तेषां ॥ न तदीयकर्मणां अज्ञानेन शास्त्रविधिमुत्सृज्य श्रद्धया कृतानां नैष्फल्यं ॥ श्रद्धापूर्वकं कृतस्य कर्मणः फलस्यावश्यंभावात् ॥ सत्वमन्तःकरणं पूर्वजन्मसंस्कारसंस्कृतं तदनुरूपा सर्वेषां श्रद्धा भवति॥ अयं कर्माधिकृतः पुरुषः [3]श्रद्धाप्रचुरः अन्नमयो यक्ष इतिवत् ॥ न हि श्रद्धाप्राचुर्याभावे कर्मण्यधिक्रियते ॥ यः यच्छ्रद्धः सः स एव ॥ सर्वाऽपि श्रद्धा सत्वगुणकार्यत्वात् सात्त्विक्येव ॥ न हि रजसा तमसा च श्रद्धोदेति ॥ अतः कथं सत्वादिगुणभेदात् तस्यास्त्रैविध्यमिति चेत् ॥ सत्वगुणानुरूपा सा ॥ सर्वत्र सत्वगुणकार्यभूता सा सात्त्विक्येव ॥ यदि सर्वेषां श्रद्धा सात्त्विक्येव तर्हि तेषां फले भेदो न स्यात् ॥ अतस्तस्याः त्रैविध्यं सत्वादिगुणभेदादङ्गीकर्तव्यम् ॥ कथं सत्वगुणकार्यस्य

---

१. २. ४१. २. स्वभावजा स्वभावः पूर्वसंस्कारः प्रकृतिर्वा॥ स्वेन सह भवतीति व्युत्पत्तिः तज्जन्या॥

३. श्रद्धाविकारः अन्यया यजमानो विक्रियते इति केचित् ॥

रजस्तमोभ्यां राजसत्वं तामसत्वं चेति चेत् ॥ उद्रिक्तसत्वगुणजन्या सात्विकी ॥ उद्रिक्तरजोगुणोपसर्जनीभूतसत्वगुणजन्या राजसी ॥ उद्रिक्ततमोगुणोपसर्जनीभूतसत्वगुणजन्या तामसी इति सत्वगुणकार्यभूताया अपि श्रद्धायाः राजसतामसत्वोपपत्तिः ॥ श्रद्धयाऽनुष्ठितस्य श्रद्धारूपगुणेन फलमस्त्येव ॥ श्रद्धायां भेदसत्वेन फलेऽपि भेदोऽस्त्येव ॥ न त्वज्ञानेन विध्युल्लंघनान्नैष्फल्यम् ॥ अतः ज्ञानरहिता अपि निःशङ्कं स्वीयं कर्मानुतिष्ठन्तु ॥ अज्ञानेन विध्युल्लंघनेऽपि श्रद्धामात्रेण फलसंभवात् ॥ ज्ञात्वा श्रद्धयाऽनुष्ठाने तु महान् फलविशेष इति निष्कर्षः ॥ त्वं तु महाकुलप्रसूतत्वात् माशङ्कितब्रह्मविद्यारतत्वाच्च शुद्धसात्विकः ॥ २ ॥ ३ ॥ ॥

त्रि ॥ हे पार्थ अत्र शास्त्रविधिमुत्सृज्य श्रद्धया अनुष्ठितस्य कर्मणः शास्त्रविध्युल्लंघनात्मकं तामसत्वं श्रद्धायोगात् किं सात्विकत्वं किमुभयमेलनाद्राजसत्वं इति तवाशङ्का ॥ शृणु तस्या उत्तरम् ॥ श्रद्धापूर्वकत्वं फलसाधनत्वायोपयुक्तम् ॥ तच्च शास्त्रीय एव कर्मणि नाशास्त्रीये ॥ अतः नाशास्त्रीयस्य सत्वादिगुणसंबन्धप्रयुक्तं त्रैविध्यं संभवति ॥ किन्तु तत्तामसमात्रमेव ॥ अतो निष्फलमेव ॥ सत्वादिगुणभेदेन त्रैविध्यं गुणभेदेन फलभेदश्च शास्त्रीय एव कर्मणि ॥ सात्विक्यादिश्रद्धात्रयसंबन्धादशास्त्रीयस्यापि सात्विकत्वादिभेदेन त्रैविध्यं संभवतीति चेत् ॥ न तथा ॥ अशास्त्रीये या श्रद्धा सा तामसी एकैव न तद्योगात्फलसंभवः ॥ फलं चेत् प्रतीयमानमप्यनर्थरूपम् ॥ न त्रिविधा श्रद्धा अशास्त्रीये संभवति ॥ यस्याः शास्त्रीये श्रद्धायाः सत्वादिगुणभेदेन त्रैविध्यं संभवति यद्योगात्फलसंभवः तां त्रिधा भवन्तीं श्रद्धां मया विभज्योच्यमानां शृणु ॥ प्राणिनां शास्त्रीये या श्रद्धा भवति सैव त्रिविधा सात्विकी राजसी च तामसी चेति ॥ सा स्वभावजा ॥ स्वो भावः प्राचीनवासनामूलको रुचिरूपो धर्मविशेषः तज्जन्या ॥ यत्र रुचिरुत्पद्यते तत्र हि तया रुच्या श्रद्धा जायते ॥ श्रद्धा नाम स्वाभिमतसाध्यसिद्धावमिति विश्वासपूर्विका साधने त्वरा ॥ कथं तस्याः त्रैविध्यमिति चेत् ॥ सर्वेषां श्रद्धा सत्वानुरूपा भवति ॥ सत्वशब्दितान्तःकरणोपलक्षिता देहेन्द्रियादयः पश्चिमपचिजनकवासनोत्तमकसत्वादिगुणयुक्ताः तद्रूपा भवन्ति ॥ अतस्त्रिविधा सा ॥ अयं पुरुषः श्रद्धामयः श्रद्धाविकारः श्रद्धापरिणामः त्रिकारत्वं च तन्मूलकफलसंबन्धः ॥ श्रद्धामूलकफलसंबन्धवानिति यावत् ॥ यो यच्छ्रद्धः स स एव ॥ यस्य यद्गुणयुक्ता श्रद्धा सः तद्गुणानुरूप-

फलवान् यथा शास्त्रीयस्य कर्मणः श्रद्धानुरूपं फलम् ॥ तथा अशास्त्रीयस्यापि कर्मणः श्रद्धानुरूपं फलमाशङ्कसे ॥ न सा श्रद्धा फलोत्पादिका॥ किंतु अनर्थोत्पादिका अतः श्रद्धया अनुष्ठितमप्यशास्त्रीयमासुरमफलमेव ॥ अतः त्वं श्रद्धया शास्त्रीयमेवानुतिष्ठ ॥ अतः शास्त्रोयं कर्म श्रद्धया कर्तुमर्हसीत्युक्तमिति निर्णेतव्यम् ॥ २ ॥ ३ ॥

अर्जुनः ॥ श्रद्धायोगात् फलं तद्भेदात् फले भेदश्चेत्युक्तं ॥ तत्र यदि इयं श्रद्धा इदं फलमुत्पादयेदिति ज्ञायते ॥ तर्हि महाफलोत्पादिकां श्रद्धां संपादयितुं प्रयतेरन् ॥ तत् केन ज्ञायेत॥ ब्रूहि ॥

कृष्णः ॥ यजन्ते सात्विका देवान् यक्षरक्षांसि राजसाः ॥
[1]प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

यजन्त इति ॥ सात्विकाः देवान् यजन्ते राजसाः यक्षाश्च रक्षांसि राक्षसाः ते च यक्षरक्षांसि यजन्ते ॥ अन्ये तामसाः जनाः प्रेतान् भूतानां गणाः भूतगणाः तान् च यजन्ते ॥ ४ ॥

सात्विक्या श्रद्धया युक्ताः हरिहरविधिशक्रवसुरुद्रादित्यमुखान् देवानाराधयन्ति ॥ राजस्या श्रद्धया युक्ताः यक्षान् कुबेरादीन् राक्षसान् निरृतिप्रमुखान् आराधयन्ति ॥ अन्ये सात्विकेभ्यः राजसेभ्यश्च अत्यन्तविलक्षणाः तामस्या श्रद्धया युक्ताः [2]प्रेतान् भूतगणांश्च आराधयन्ति ॥ तामसानां अत्यन्तविलक्षणत्वद्योतनाय अन्ये इति तत्कर्मणोऽत्यन्तविलक्षणत्वद्योतनाय पुनर्यजन्ते इति चोक्तम् ॥ सात्विक्या श्रद्धया देवानाराधयन्तो दुःखासंभिन्नमुत्कृष्टं फलं मोक्षाख्यं प्राप्नुवन्ति ॥ स्वर्गं वा ॥ राजस्या श्रद्धया यक्षरक्षांसि आराधयन्तो दुःखमिश्रमल्पं फलं स्वर्गसुखादवरं सुखं प्राप्नुवन्ति ॥ तामस्या श्रद्धया प्रेतान् भूतगणांश्च आराधयन्तो दुःखप्रचुरमत्यल्पं स्त्रीराजवशीकारादिजन्यं सुखं प्राप्नुवन्ति ॥ अतः मदुक्त्याऽनया तत् ज्ञात्वा देवताया-

१. भूतान् प्रेतगणांश्चेति पाठान्तरम् ॥ २. प्रेताः पिशाचाः भूतगणाः रुद्रपारिषदाः ॥ ये विप्रादयः स्वधर्मात् प्रच्युताः ते देहपातादूर्ध्वं वायवीयं देहमापन्नाः उल्कामुखकटपूतनादिसंज्ञाः प्रेता भवन्ति इति मनुनोक्तान् पिशाचविशेषान्वा ॥

राधनलिङ्गेन ममेदानीं विद्यमाना श्रद्धा इत्यमिति ज्ञात्वा यदि सा राजसी तामसी च स्यात् तर्हि तां त्यक्त्वा दुःखासंभिन्नस्य फलोत्पादिकां सात्त्विकीं श्रद्धामेव संपादयन्तु महता यत्नेन ॥ यदि सात्त्विकी स्यात् तर्हि तां वर्धयन्तु ॥ [1] सात्त्विकाः राजसाः तामसाश्च अविशेषेण इन्द्राय स्वाहा वरुणाय स्वाहा इत्यादिमन्त्रैरेव यजन्ते न राजसाः यक्षाय स्वाहा रक्षसे स्वाहा इति तामसाः प्रेताय स्वाहा भूताय स्वाहा इति ॥ सति चैवं कथं यक्षरक्षांसि राजसाः भूतान् प्रेतगणांश्च तामसा इत्युच्यते ॥ इति चेत् ॥ ब्रह्मरुद्रादिनामानो देवाः यक्षरक्षोनामानः भूतप्रेतादयश्च सन्ति ॥ सात्त्विकया श्रद्धया क्रियमाणे कर्मणि यज्ञभुक् परमात्मा विष्णुः देवान् भोजयित्वा स्वयमपि भुक्त्वा काम्यं चेत् कर्म स्वर्गादिकं अकाम्यं चेत् कर्म ज्ञानद्वारा मोक्षं ददाति ॥ उक्तं च मया ॥ [2] लभते च ततः कामान् मयैव विहितान् हि तान् ॥ अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥ देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपीति ॥ [3] ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥ ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥ अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ॥ तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ इति च ॥ राजस्या श्रद्धया तामस्या च श्रद्धया क्रियमाणे कर्मणि अस्मात् विष्णुः ब्रह्मरुद्रेन्द्रादिशब्दवाच्यान् देवान् अभोजयित्वा स्वयमप्यभुक्त्वा तत्तन्नाम्नो यक्षराक्षसादीन् भूतप्रेतादींश्च भोजयित्वा स्वर्गादेरवरं सांसारिकस्वर्गं भूतादिसायुज्यसिद्धिं भूतादिस्थं च ददाति ॥ उक्तं च मया ॥ [4] भूतानि यान्ति भूतेज्या इति॥ अतो यक्षरक्षांसि राजसाः भूतान्प्रेतगणांश्च तामसा इत्युक्तं युक्तम् ॥ अतः सात्त्विकया श्रद्धया भक्तिपूर्वकमनभिसन्धाय फलमनुष्ठेयं कर्म ॥ ४ ॥

ह्रे ॥ अर्जुनः ॥ किं देवान् यजन्तोऽविशेषेण सात्त्विकाः उत केनचिद्विशेषेण ब्रूहि ॥ किं तामसानामुक्तमेव फलं उतान्यदपि ॥ ब्रूहि ॥

कृष्णः ॥ अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ॥

दंभाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

---

१. ह्रे केचित् ॥ २. ७. २२. ३. ९. २०. ४. ९. २५.

कर्शयन्तश्शरीरस्थं भूतग्राममचेतसः ॥
मां चैवान्तश्शरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥ ६ ॥

अशास्त्रेति ॥ न विद्यते चेतः विवेकज्ञानं येषां ते अचेतसः ये जनाः दंभश्च अहंकारश्च दंभाहंकारौ ताभ्यां सम्यक् युक्ताः दंभाहङ्कारसंयुक्ताः कामश्च रागश्च बलं च कामरागबलानि तैः अन्विताः कामेषु रागः कामरागः तेन बलं कामरागबलं तेन अन्विताः शरीरे तिष्ठतीति शरीरस्थः तं भूतानां ग्रामः भूतग्रामः तं कर्शयन्तः कृशं कुर्वन्तः शरीरस्य अन्तः अन्तश्शरीरं तस्मिन् तिष्ठतीत्यन्तश्शरीरस्थं मां च कर्शयन्तः शास्त्रे विहितं शास्त्रविहितं न शास्त्रविहितं अशास्त्रे कुशास्त्रे विहितं वा अशास्त्रविहितं घोरं तपः यज्ञादिकर्म तप्यन्ते कुर्वन्ति तान् असुराणां अयं आसुरः आसुरः निश्चयः येषां ते आसुरनिश्चयाः तान् आसुरनिश्चयान् विद्धि ॥ ५ ॥ ६ ॥

शास्त्रे अविहितं कुशास्त्रे विहितं शास्त्रविहितविरुद्धं च आत्मनः परेषां च पीडाकरं तपउपलक्षितयज्ञादिकर्म दंभेन अहङ्कारेण च सम्यक् युक्ताः सन्तः कामः इच्छा रागः आसक्तिः बलं कुर्वन्तः आग्रहो वा तैः युक्ताः सन्तः शरीरस्थं भूतग्रामं अन्तःशरीरस्थं शरीरान्तः सर्वनियामकत्वेन स्थितं मां च शरीरान्तः स्थित्यपेक्षया स्वस्थितेरत्यन्तवैलक्षण्यद्योतनाय पुनः शरीरस्थमितिपदं प्रयुक्तम् ॥ कर्शयन्तः कृशत्वेन अल्पगुणत्वेन जानन्तः अधिकान् अल्पत्वेन अल्पान् अधिकत्वेन च अधिकगुणानल्पगुणत्वेन अल्पगुणानधिकगुणत्वेन च जानन्तः सन्तः ये अविवेकिनः तामसाः जनाः इति सामान्यशब्दप्रयोग, तेषामतितामसत्वसूचनाय॥ तप्यन्ते कुर्वन्ति तान् असुराणामयं आसुरः निश्चयः विपरीतनिश्चयः तद्वतः जानीहि ॥ विपरीतज्ञानवतां तु तमःप्राप्तिरेव ॥ देवानां यजनं अशास्त्रविहितं चेत्तत्तामसमासुरमेव न सात्विकम् ॥ आत्मनः परेषां च पीडाजनकं चेत् तत् शास्त्रीयमप्यासुरमेव ॥ दंभाहङ्कारादिना क्रियमाणं चेत् तत शास्त्रविहितमपि अघोरमपि तामसमासुरमेव ॥ भगवति भगवत्परिवारेषु च विप-

रीतज्ञानबद्धिः क्रियमाणं च । तत् शास्त्रविहितत्वादिसर्वगुणसंपन्नमपि तामसमासुरमेव ॥ देवान् यजन्ते क्रियमाणदेवयजनगतशास्त्रविहितत्वादिगुणविशेषवैशिष्ट्येन सात्विकाः॥ शास्त्रविहितत्वादिगुणगणविशिष्टं देवयजनं ये कुर्वन्ति ते सात्विका इति यावत् ॥ तामसानां भूतादित्वप्राप्त्यादिकमवान्तरफलम्॥ मुख्यफलं तु तमःप्राप्तिरेव ॥ अतः सर्वथा वर्जनीया तामसी श्रद्धा ॥ ५ ॥ ६ ॥

अ ॥ अर्जुनः ॥ शास्त्रविधिमजानन्तः श्रद्धावन्तः कुतः राजसीं तामसीं च श्रद्धां परित्यज्य सात्विकीं श्रद्धां नाददते ॥

कृष्णः ॥ १दंभाहङ्कारसंयुक्ताः कामाः विषयाः भोगोपकरणानि वा तेषु रागः अभिलाषः तेन बलं अत्युग्रदुःखसहनसामर्थ्यं तेनान्विताः इच्छाऽत्यासक्तिदुराग्रहैरन्विता वा ॥ शरीरस्थं भूतग्रामं इन्द्रियाद्याकारपरिणतं पृथिव्यादिभूतसमुदायं स्थूलसूक्ष्मरूपप्राणिसमुदायं वा वृथोपवासादिना कृशीकुर्वन्तः ॥ भोक्तृरूपेण अन्तःशरीरस्थं प्रत्यगात्मरूपं मां भोग्यस्य शरीरस्य कृशीकरणेन हिंसन्तः ॥ मनोबुद्धींद्रियाणामुपवासकृतातिश्रान्त्या प्रवृत्त्युपरमे आत्मचैतन्यस्य स्फुरणं न भवति तदभाव एव प्रत्यगात्मनः कृशीभवनं तत्कुर्वन्तः ॥ अन्तर्यामिरूपेण अन्तःशरीरस्थं ईश्वररूपं मां मदाज्ञोल्लंघनेन हिंसन्तः ॥ राजाज्ञोल्लंघनमेव हि राजद्रोहः ॥ अविवेकिनो ये तामसा जनाः अशास्त्रविहितं घोरं तपः तप्यन्ते तान् आसुरनिश्चयान् जानीहि ॥ केचित् राजसतामसा अपि प्राग्भवीयपुण्यपरिपाकेन तन्मूलकसज्जनसङ्गादिगुणेन च सात्विका भवन्ति ॥ सात्विकीं च श्रद्धामाददते ॥ केचित् दुराग्रहेण दुर्दैवपरिपाकेन तन्मूलकदुर्जनसङ्गादिदोषेण च राजसतामसतामनुश्चन्तो राजस्या तामस्या च श्रद्धया उत्करीत्या २राजसं तामसं च कर्म कुर्वन्तः ऐहिकसकलभोगविधुराः परत्राधमगतिभागिनः सकलपुरुषार्थभ्रष्टा भवन्ति न कदाऽपि ते सात्विकीं श्रद्धामाददते ॥ ५ ॥ ६ ॥

---

१. मन्त्रतन्त्रवेषभाषादिबाह्यपरिकराटोपो दंभः ॥ कुलशीलविद्याऽऽश्रमादिभिरुत्कृष्टोऽहमित्यन्तःकरणाटोपोऽहङ्कारः ॥ २. अशास्त्रविहितमिति राजसविषयम् ॥ कर्शयन्तः शरीरस्थमिति तामसविषयमिति विवेकः ॥

वि ॥ अर्जुनः ॥ शास्त्रीये कर्मणि श्रद्धात्रैविध्यस्य तद्भेदेनफलभेदस्य चोक्तया मदीयप्रश्नस्य किमुत्तरमायातम् ॥ शास्त्रीय एव कर्मणि श्रद्धायास्त्रैविध्यस्य तद्भेदेन फलभेदस्य चोक्तया अशास्त्रीये कर्मणि न श्रद्धात्रैविध्यं न तद्भेदेन फलभेदश्चेत्यर्थात् त्वदीयप्रश्नस्योत्तरमायातमेवेति चेत् ॥ यद्येवं तर्हि कुतः साक्षान्नोच्यते ॥ यद्यशास्त्रीयस्य कर्मणः स्थितिरीदृशीति कंठोक्तया साक्षादुच्येत तर्हि सर्वथा परिहरणीयमशास्त्रीयं कर्मेति स्पष्टं ज्ञायेत ॥ अतः अशास्त्रीस्य कर्मणः स्थितिं साक्षाद् कंठोक्तया ब्रूहि ॥

कृष्णः ॥ दंभाहङ्कारसंयुक्ताः कामरागबलान्विताः शरीरस्थं पृथिव्यादिभूतसमुदायं वृथोपवासादिना कृशीकुर्वन्तः अन्तःशरीरस्थं मां मदंशभूतं जीवात्मानं कृशीकुर्वन्तः कथं जीवात्मनः कृशीकरणमिति चेत् ॥ पृथिव्यादिभूतसमुदायपरिणामभूतशरीरकर्शनेन शरीरिणः आत्मनः ज्ञानसुखादिसङ्कोचरूपकृशीभवनसंभवादात्मनः कर्शनंसंभवति ॥ मदंशभूतमित्यनुक्त्वा मामित्युक्तिः मच्छरीरभूतजीवपीडनं मत्पीडनतुल्यमिति दोषातिशयसूचनाय ॥ मदाज्ञोल्लंघनेन मां पीडयन्त इति वा ॥ आज्ञोल्लंघनमेव हि पीडनम् ॥ ये अविवेकिनः अशास्त्रविहितं घोरं यज्ञदानतपःप्रभृति कर्म कुर्वन्ति तान् आसुरनिश्चयान् जानीहि ॥ अशास्त्रविहितमासुरम् ॥ तत्कारिणस्त्वसुरस्वभावाः ॥ न तेषामैहिकसुखलवः ॥ नाप्यामुष्मिकसुखलवोऽपि ॥ किंतु नरकाद्यनर्थप्राप्तिरेव ॥ उक्तमेव हि तन्मया ॥ १ 'पतन्ति नरकेऽशुचौ' ॥ 'ततोयान्त्यधमाङ्गतिं' ॥ इत्यादि ॥ अतः सर्वथा परिहृत्य अशास्त्रीयं कर्म शास्त्रीयमेव कर्म सात्विकया श्रद्धया कर्तव्यम् ॥ ५ ॥ ६ ॥

अर्जुनः ॥ किं देवताराधनादिकमेव सात्विकत्वादिज्ञापकं लिङ्गं उतान्यदपि ॥ यद्यन्यदपि स्यात् तर्हि तदपि ब्रूहि ॥ यद्यनेकानि लिङ्गान्युच्येरन् तर्हि येनकेनापि लिङ्गेन सात्विकादित्वं ज्ञात्वा राजसतामसतां परिहृत्य सात्विकीभवितुं प्रयतेरन् ॥

कृष्णः ॥ आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ॥
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

आहार इति ॥ सर्वस्य प्राणिजातस्य प्रियः आह्रियते भुज्यते इति आहारः

भुज्यमानोऽन्नादिः सोऽपि तु त्रिविधः ॥ यज्ञः तथा त्रिविधः ॥ तपः दानं च तथा त्रिविधम् ॥ तेषां आहारयज्ञतपोदानानां भेदं सात्विकादिभेदं इमं वक्ष्यमाणं शृणु॥ ७ ॥

**त्रिविधस्य प्राणिजातस्य प्रिय आहारः भुज्यमानोऽन्नादिः सोऽपि सात्विकादिभेदेन त्रिविधो भवति ॥ यज्ञः तथा त्रिविधः तपः दानं च तथा त्रिविधम् ॥ तेषां सात्विकादिभेदं वक्ष्यमाणं शृणु ॥ सात्विकादित्वं ज्ञातुं लिङ्गभूतान् आहारयज्ञतपोदानानां सात्विकादिभेदान् वक्ष्यामि ॥ त्वं श्रुत्वा श्रद्धाय राजसतामसान् विहाय सात्विकानेवोपादाय सात्विकीभवितुं प्रयतस्व ॥ यज्ञादिषु सात्विकत्वादीनां आहारमूलकसत्वशुद्ध्यशुद्धिमूलकत्वरूपविशेषसूचकस्तुशब्दः ॥ अत एव आहारस्य प्रथममुक्तिः ॥ ७ ॥**

कृष्णः ॥ आयुस्सत्वबलारोग्यसुखप्रीतिविवर्धनाः ॥
रस्याः स्निग्धाः स्थिरा हृद्या आहारास्सात्विकप्रियाः ॥ ८ ॥

आयुरिति ॥ आयुश्च सत्वं चित्तशुद्धिः ज्ञानं वा तच्च बलं च न विद्यते रोगः यस्य सः अरोगः तस्य भावः आरोग्यं तच्च सुखं च प्रीतिश्च आयुस्सत्वबलारोग्यसुखप्रीतयः ता वि विशेषेण वर्धयन्तीति आयुस्सत्वबलारोग्यसुखप्रीतिविवर्धनाः रसयितुं योग्याः रस्याः स्निग्धाः स्नेहयुक्ताः स्थिराः हृदयस्य प्रियाः हृद्याः आहाराः सात्विकस्य प्रियाः सात्विकप्रियाः ॥ ८ ॥

**मधुरादितत्तद्रसयुक्ताः मधुररसयुक्ता वा स्नेहशब्दिताज्यादिसंयुक्ताः रसांशेन चिरकालं शरीरोपकारिणः दर्शनादिना मनोहारिणः ये आहाराः अश्यमानाः पदार्थाः ते सात्विकानां प्रियाः ॥ एते चाहाराः आयुषः सत्वस्य चित्तशुद्धेः [1]ज्ञानस्य च बलस्य आरोग्यस्य तात्कालिकसुखस्य भाविसुखस्य च विशेषेण वर्धकाः ॥ सात्विकानामीदृशाहारसेवनं लक्षणं सात्विकीभूयतां साधनम् ॥ अत ईदृश आहारस्सेवनीयः ॥ ८ ॥**

---

१. वि. ॥

**कृष्णः ॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ॥**

**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥**

**कट्विति** ॥ कटवश्च अम्लाश्च लवणाश्च अत्यन्तमुष्णाः अत्युष्णाः ते च तीक्ष्णाश्च रूक्षाश्च वि विशेषेण दाहः एषामस्तीति विदाहिनः ते च कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः दुःखं च शोकश्च आमयः रोगः ते च दुःखशोकामयाः तान् प्र अधिकं ददतीति दुःखशोकामयप्रदाः आहाराः राजसस्य इष्टाः प्रियाः ॥ ९ ॥

[2] अतिकटवः अत्यन्तं तिक्तरसयुक्ताः अत्यम्लाः अतिलवणरसयुक्ताः अत्युष्णाः अत्यन्तं कटुरसयुक्ताः स्नेहहीनाः विशेषेण दाहकाः [3] तीक्ष्णाः शोषकराः रूक्षाः तापकराः विदाहिनः दाहकराः इति वा ॥ ये आहाराः ते राजसानां प्रियाः एते च तात्कालिकदुःखस्य भाविदुःखस्य च रोगस्य च जनकाः ॥ ईदृशाहारसेवनं राजसानां लिङ्गम् ॥ अतः इमे वर्जनीयाः ॥ ९ ॥

**कृष्णः ॥ यातयामं गतरसं पूति पर्युषितं च यत् ॥**

**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥**

**यातयाममिति** ॥ यातः गतः यामः प्रहरः यस्य तत् यातयामं गतः रसः यस्य तत् गतरसं पूति दुर्गन्धयुक्तं पर्युषितं पुरातनं च उच्छिष्टमपि भुक्तशेषं च मेध्यं शुद्धं मेधः यज्ञः तं अर्हतीति मेध्यं यज्ञार्हं वा न मेध्यं अमेध्यं च यत् भोजनं तत् तामसस्य प्रियं तामसप्रियम् ॥ १० ॥

यामान्तरितपाकं अतः शीतलं नीरसं च स्वत एव गतरसं दुर्गन्धयुक्तं दिनान्तरितपाकं पर्युषितपुरातनशब्दितं च शूद्रादिभुक्तशेषं अशुद्धं शास्त्रतो निषिद्धं मेधो यज्ञः देवयज्ञादिः तदनर्हम् ॥ अयज्ञशिष्टमिति यावत् ॥ इति वा ॥ तादृशं च यत् भोजनं अद्यमानं वस्तु आहार इति यावत् तत् तामसानां प्रियं एतद्दोषस्तु प्रसिद्धत्वान्नोक्तः ॥ उक्ताहारभेदेन सात्विकादित्वं ज्ञात्वा राजसतामसतां परिहृत्य सात्विकाहारसेवनेन सात्विकीभवितुं सात्विकतां वर्धयितुं च प्रयतेत ॥ यद्यपि देशभेदेन

---

१. कट्वम्लेति पाठान्तरम् ॥ २. अतिशब्दस्य पूर्वैः उत्तराभ्यां च संबन्धः ॥ ३. वि. ॥

मधुररसभूयिष्ठः अतिकटुरसादिभूयिष्ठश्चाहारः सर्वप्रियः तथाऽपि तत्तद्देशगतेतरजनाहारापेक्षया रस्यत्वातिकटुत्वादिकं विवक्षितम् ॥ आयुराद्यभिवर्धकत्वरूपविशेषणेन दुःखादिप्रदत्वरूपविशेषणेन च रस्यत्वादौ सत्यपि नातथाभूतस्य सात्त्विकत्वं अतिकटुत्वादौ सत्यपि नातथाभूतस्य राजसत्वम् ॥ अतः रसायनोपयोगितया अतिकट्वादिपदार्थस्वीकारेऽपि नराजसत्वापत्तिः ॥ अतस्त्वं राजसं तामसं चाहारं परित्यज्य सात्त्विकमेवाहारं सेवमानः सात्त्विकतां संपादय तां च विद्यमानां वर्धय ॥ १० ॥

अर्जुनः ॥ क्रमप्राप्तान् यज्ञभेदान् ब्रूहि ॥

कृष्णः ॥ अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ॥
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

अफलेति ॥ फलं आकांक्षन्त इति फलाकांक्षिणः न फलाकांक्षिणः अफलाकांक्षिणः तैः यष्टव्यमेव यागः कर्तव्य एव इति मनः समाधाय विधिना विधौ वा दृष्टः विधिदृष्टः यः यज्ञः इज्यते क्रियते सः सात्त्विकः ॥ ११ ॥

फलापेक्षारहितैः विधिना शास्त्रेण दृष्टः ज्ञातः विधायकशास्त्रज्ञानपूर्वकः तदुक्तनियमोपेतः यो यज्ञः भगवदाराधनरूपं यागादिकर्म यष्टव्यमेव विधिप्राप्तत्वात् यज्ञः कर्तव्य एव न तु फले कांक्षा कार्या इति मनसः समाधानमाधाय क्रियते स यज्ञः सात्त्विकः ॥ ११ ॥

कृष्णः ॥ अभिसन्धाय तु फलं दंभार्थमपि चैव यत् ॥
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

अभिसन्धायेति ॥ भरतेषु श्रेष्ठः भरतश्रेष्ठः हे भरतश्रेष्ठ अर्जुन फलं अभिसन्धाय उद्दिश्यैव दंभाय इदं दंभार्थं चैव यत् यज्ञादिकं इज्यते क्रियते तं यज्ञं राजसं विद्धि ॥ १२ ॥

फलमुद्दिश्यैव यत् यज्ञादि कर्म क्रियते स यज्ञो राजसः ॥ फलोद्देशाभावेऽपि

---

१. यः इति पाठान्तरम् ॥

दंभशङ्कितधार्मिकत्वख्यापनार्थमेव यो यज्ञः क्रियते सोऽपि राजसः ॥ फलमुद्दिश्य धार्मिकत्वख्यापनाय च यो यज्ञः क्रियते सोऽपि राजसः॥ चैवेति विकल्पेन द्वौ अपीति समुच्चयेनैकः इति त्रयो राजसभेदाः ॥ सात्विकादस्य उक्तरूपो विशेषः ॥ विकल्पसमुच्चयाभ्यामवान्तरविशेषश्च ॥ महाकुलीनत्वान्नायं यज्ञस्तवोचितः ॥ ज्ञात्वा चेदं यत्नतः परित्यजेमं यज्ञम् ॥ १२ ॥

कृष्णः ॥ विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ॥
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

**विधिहीनमिति** ॥ विधिना हीनः विधिहीनः तं न सृष्टं दत्तं अन्नं यस्मिन् सः असृष्टान्नः तं मन्त्रेण हीनः मन्त्रहीनः तं न विद्यते दक्षिणा यस्मिन् सः अदक्षिणः तं श्रद्धया विरहितः हीनः श्रद्धाविरहितः तं यज्ञं तामसं परिचक्षते वदन्ति ॥ १३ ॥

१ शास्त्रविधिविरुद्धं ब्राह्मणेभ्योऽन्नदानरहितं मन्त्ररहितं स्वरवर्णव्यत्यासादिसहितं च दक्षिणारहितं श्रद्धाशून्यं च यज्ञं तामसमाहुः ॥ पञ्चभिर्विशेषणैः विकल्पेन पञ्चभेदाः समुच्चयेनैकः इति तामसयज्ञभेदाः षट् ॥ द्वित्रिचतुर्विशेषणसमुच्चयेन तद्भेदेन च बहवो भेदाः ज्ञेयाः॥ उक्तभेदैः सात्विकादित्वं ज्ञात्वा राजसतामसतां परित्यज्य सात्विकीभवितुं सात्विकतां वर्धयितुं च प्रयतेत ॥ त्वमपि राजसतामसयज्ञभेदान् परित्यज्य सात्विकयज्ञमेवानुतिष्ठ ॥ १३ ॥

अर्जुनः ॥ क्रमप्राप्तान् तपोभेदान् ब्रूहि ॥

कृष्णः ॥ देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

**देवेति** ॥ देवाश्च द्विजाः ब्राह्मणाः ते च गुरवश्च प्राज्ञाः ज्ञानिनः ते च देवद्वि-

---

**१. वि.** ब्राह्मणोक्तिहीनं सदाचारयुक्तैर्विद्वद्भिः ब्राह्मणैः यजस्वेत्युक्तिहीनमित्यर्थः ॥ असृष्टान्नत्वाद्युक्त्यैव शास्त्रविधिहीनत्वस्य लाभात् ॥ शास्त्रोदितोऽप्यर्थः विद्वद्भिः सद्भिः अनुशिष्ट एवानुष्ठेय इति भावः ॥ २. अचोदितद्रव्यं सृष्टं विहितं न्यायार्जितं शूद्रप्रतिग्रहादिरहितमित्यर्थः ॥ लोभातिशयाद्दक्षिणाया अप्यभावे अन्नदानाभावस्य कैमुत्यन्यायसिद्धत्वेन अदक्षिणत्वोक्त्यैव अन्नदानाभावस्य लाभात् ॥

जगुरुप्राज्ञाः तेषां पूजनं देवद्विज॰ ॰ज्ञपूजनं शुचेः भावः शौचं ऋजोः भावः आर्जवं ब्रह्मचर्यं गुरुकुलवासस्त्रीसङ्गवर्जनादि ब्रह्मचारिधर्मः हिंसायाः अभावः अहिंसा च शरीरेण निर्वृत्तं शारीरं तपः उच्यते ॥ १४ ॥

तपसः सात्विकादिभेदान वक्ष्यामि ॥ प्रकारान्तरेण भेदांस्तावच्छृणु ॥ देवानां ब्राह्मणानां मातापित्रोः आचार्यस्य च तत्वविदां पण्डितानां च प्रणामशुश्रूषादिकं मृज्जलाभ्यां तीर्थस्नानादिना च शरीरशोधनं ॰गग्राम इव विधिप्राप्तेऽपि स्वारसिकशरीरप्रवृत्तिमत्वम् ॥ विहिते कर्मणि शरीरानुकूल्यमिति यावत् ॥ ब्रह्मचर्यं ब्रह्मचारिणां यतीनां च भोग्यत्वबुध्द्या स्त्रीषु निरीक्षणादिवर्जनम् ॥ गृहस्थानां वानप्रस्थानां च निषिद्धदेशकालेषु स्त्रीसंभोगवर्जनं परस्त्रीषु भोग्यत्वबुध्द्यानिरीक्षणादिवर्जनं च ॥ करचरणादिभिः परपीडनवर्जनं च शारीरसाध्यं तप उच्यते॥ यद्यपि सर्वं कर्म अधिष्ठानकर्तृकरणचेष्टादैवाख्यैः पञ्चभिः कारणैः साध्यम ॥ वक्ष्यते च १ पञ्चैते तस्य हेतव इति ॥ तथाऽपि पञ्चसु तेषु करणशब्दोदितसाधनकोटिप्रविष्टशरीरस्य तपस्यास्मिन् प्राधान्यात् इदं तपः शारीरमित्युच्यते ॥ प्राज्ञानां द्विजेभ्यः पृथक् ग्रहणेन बहुजन्मसमार्जितपुण्यपरिपाकलब्धभगवत्प्रसादेन ब्राह्मणेतरेषामपि प्राज्ञत्वं संभवति ॥ विदुरधर्मव्याधप्रभृतिषु दर्शनात् ॥ तेन ते ब्राह्मणेतरत्वेऽपि पूजनीयाः इति सूच्यते ॥ गुरुभ्यः पृथक् ग्रहणेन गुरुत्वाभावेऽपि प्राज्ञत्वमाहिम्नैव ते पूजनीयाः इति सूच्यते॥१४॥

कृष्णः ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ॥
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

अनुद्वेगेति ॥ ॥ उद्वेगः भयं तत् करोतीत्युद्वेगकरं न उद्वेगकरं अनुद्वेगकरम् ॥ उद्वेगस्याभावः अनुद्वेगः तं करोतीत्यनुद्वेगकरं वा ॥ सत्यं प्रियं च तत् हितं च प्रियहितं तादृशं च यद्वाक्यं तत् स्वाध्यायो वेदः तस्य अभ्यसनं अभ्यासः तच्चैव वाङ्मयं वाचा निर्वृत्तं तपः उच्यते ॥ १५ ॥

भयतन्मूलकमनःपीडादेरजनकं तदभावस्य जनकं च यथार्थं प्रियं श्रवणसमये श्रोत्रानन्दकरं हितं पश्चात् सुखजनकं च यद्वाक्यं तत् वाक्साध्यत्वात् वाङ्मयं तपः

१. १८. १४.

उच्यते ॥ चैवेत्येवकारः प्रियहितं चैवेति संबध्यते॥ विशेषणचतुष्टयविशिष्टमेव वाक्यं वाचिकं तपः । न तु एकेन द्वाभ्यां त्रिभिर्वा विशेषणैर्हीनम् ॥ वेदानां तदनुसारिमहापुरुषप्रणीतग्रन्थानां चशब्दात् भगवन्माहिमप्रतिपादकस्तोत्रविशेषाणां च आवर्तनं ब्रह्मयज्ञशब्दितं जपयज्ञशब्दितं वा यत् तदपि वाङ्मयं तप उच्यते॥ वाचः प्राधान्यात् इदं तपो वाङ्मयम् ॥ १५ ॥

कृष्णः ॥ मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥

भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

मन इति ॥ मनसः प्रसादः नैर्मल्यं मनःप्रसादः सौम्यं अक्रूरं तस्य भावः सौम्यत्वं मुनेर्भावः मौनं आत्मनः मनसः वि विशेषेण निग्रहः आत्मनि परमात्मनि विशेषेण नितरां ग्रहः आत्मनः मनसः वा परमात्मनि नितरां ग्रहः आत्मविनिग्रहः भावे आशये सम्यक् शुद्धिः भावसंशुद्धिः इत्येतत् मनसा निर्वृत्तं मानसं तपः उच्यते॥ १६ ॥

मनसः रागद्वेषादिमलराहित्येन नैर्मल्यं मनसः सर्वथा क्रौर्यवर्जनं [1] मननशीलता ॥ आत्मशब्दितस्य मनसो विशेषेण निग्रहः ॥ आत्मनि परमात्मनि मनसः विशेषेण नितरां ग्रहः ॥ आत्मनः मनसः विशाद्यचाञ्चल्ये परमात्मनि नितरां ग्रहः अवस्थापनं वा ॥ आपाततः क्रौर्येऽपि आशये नितरां शुद्धता इत्येतत् मानसं तप उच्यते ॥ अत्र मनसः प्राधान्यात् मानसमिदं तपः ॥ १६ ॥

कृष्णः ॥ परया श्रद्धया तप्तं तपस्तत्त्रिविधं नरैः ॥

अफलाकाङ्क्षिभिर्युक्तैस्सात्त्विकं परिचक्षते ॥ १७ ॥

परयेति ॥ नरैः परया श्रद्धया तप्तं तत् पूर्वोक्तं त्रिविधं तपः त्रिविधं सात्विकादिभेदेन त्रिविधं पूर्वार्धस्य आवृत्तिः ॥ अफलाकाङ्क्षिभिः (११. श्लो) युक्तैः योगयुक्तैः नरैः परया श्रद्धया तप्तं तत् पूर्वोक्तं त्रिविधं तपः सात्विकं परिचक्षते ॥ १७ ॥

---

१. अ. वाक्संयमः वाक्संयमस्यापि मनःसंयमैकसाध्यत्वात् तस्य मानसस्थेऽत्रावनुप्रवेशः ॥

नरैः परया श्रद्धया तप्तं तत् पूर्वोक्तं शारीरादिभेदेन त्रिविधं तपः सात्विकादिभेदेन पुनः त्रिविधम् ॥ तत्र सात्विकं भेदं शृणु ॥ फलापेक्षारहितैः भगवति समर्पणरूपयोगवद्भिः मनःसमाधानवद्भिर्वा ॥ सिद्ध्यसिद्ध्योर्निर्विकारैरिति यावत् ॥ नरैः १ परया श्रद्धया तप्तं शारीरादिभेदेन त्रिविधं तपः प्रत्येकं सात्विकमाचक्षते॥१७॥

कृष्णः ॥ सत्कारमानपूजार्थं तपो दंभेन चैव यत् ॥

क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

सत्कारेति ॥ सत्कारश्च मानश्च पूजा च सत्कारमानपूजाः सत्कारमानपूजाभ्यः इदं सत्कारमानपूजार्थं दंभेन चैव यत् तपः क्रियते तत् राजसं प्रोक्तम् ॥ तत् इह लोके स्वर्गलोके च फलदं प्रोक्तं तत् अध्रुवं फलतोऽनित्यं चलं चञ्चलम् ॥ १८ ॥

सत्कारः अयं तपस्वीतिमानसादरः मानः अयं तपस्वीति वाचा प्रशंसनं पूजा अयं तपस्वीति भक्त्या प्रणामादिकम् ॥ सत्कारः वाचा प्रशंसा मानः प्रत्युत्थानाभिवादनादिकं पूजा पादप्रक्षालनार्चनधनदानादिकं इति वा तेषां प्राप्तये यत् तपः क्रियते तद्राजसम् ॥ स्वस्य महत्त्वख्यापनार्थमेव यत् तपः क्रियते तच्च राजसम् ॥ इह लोके स्वर्गलोके च न तु वैकुण्ठादिषु फलप्रदं प्रोक्तम् ॥ तत् अध्रुवं फलतोऽनित्यं तस्य फलं पशुपुत्रस्वर्गादिकं अनित्यं चलं अनित्यफलानुभवकालेऽपि भाविदुःखानुसन्धानेन मनश्चलनहेतुभूतम् ॥ चलं फलतोऽनित्यं अध्रुवं फलजनकता नियमशून्यमिति वा ॥ १८ ॥

कृष्णः ॥ मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ॥

परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

मूढग्राहेणेति ॥ मूढानां अविवेकिनां ग्राहः दुराग्रहः मूढग्राहः तेन आत्मनः शरीरस्य पीडया परस्य उत्सादनं नाशनं तस्मै इदं उत्सादनार्थं वा यत् तपः क्रियते तत् तामसं उदाहृतम् ॥ १९ ॥

अविवेकिनां यो दुराग्रहः श्रद्धातिशयादिदं साधनीयमित्यभिनिवेशः ॥ तेन आत्मनः शरीरस्य हिंसनेन यत् तपः क्रियते तत्तामसमुक्तम् ॥ अन्यस्य नाशनाय वा

१. परयाश्रद्धयेत्यादिपूर्वार्धस्याग्रुतिः ॥

यत् अभिचारादिरूपं तपः क्रियते तदपि तामसमुदीरितम् ॥ परया श्रद्धयेत्युक्तया श्रद्धाभावे तप एव नेत्युक्तं भवति ॥ अत्र कायिकवाचिकतपसोः सात्त्विकादिभेदेन त्रैविध्यं संभवति ॥ न तथा मानसे तपसि संभवः ॥ मनःप्रसादसौम्यत्वमौनात्मविनिग्रहभावसंशुद्धिमतां सत्काराद्यपेक्षायाः दम्भस्य आत्मपीडनपरोत्सादनप्रवृत्तेश्चासंभवात् ॥ मौनस्य वाक्संयमरूपत्वे आत्मविनिग्रहस्य मनोनिग्रहमात्ररूपत्वे च सौम्यत्वमौनात्मनिग्रहरूपस्य मानसतपसः राजसतामसभेदौ [1]संभवतः ॥ शारीरादिषु त्रिष्वपि तपस्सु राजसतामसभेदौ परित्यज्य राजसतामसतां परिहृत्य सात्त्विकमेव तत् त्रिविधं तपोऽनुष्ठाय सात्त्विकतां संपादयन्तु वर्धयन्तु च ॥ त्वमप्येवं ज्ञात्वा राजसतामसतां परिहृत्य सात्त्विकेनैव तपसा सात्त्विकतां संपादय ॥ तां च यत्नतो वर्धय ॥ १९ ॥

अर्जुनः ॥ क्रमप्राप्तान् दानभेदान् ब्रूहि ॥

कृष्णः ॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ॥
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

दातव्यमिति ॥ पात्रे दातव्यम् इति उपकरोतीत्युपकारी न उपकारी अनुपकारी तस्मै अनुपकारिणे देशे च काले च यत् दानं दीयते तत् दानं सात्त्विकं स्मृतं उक्तम् ॥ २० ॥

पात्रे दातव्यं न तु फलमाकांक्षणीयमिति निश्चित्य ऐहिकं आमुष्मिकं च फलमनभिसन्धायेति यावत् ॥ अनुपकारिणे प्रत्युपकारकरणरहिताय प्रत्युपकारमनपेक्ष्येति यावत् ॥ तस्मै प्रशस्ते पुण्यदेशे प्रशस्ते पुण्यकाले च यद्दानं दीयते क्रियते तद्दानं सात्त्विकं महात्मभिः कथितम् ॥ पात्रे प्राप्ते सति सद्य एव तस्मै दातव्यमिति यद्दीयते इति वा ॥ पात्रे इति सप्तमी चतुर्थ्यर्थे ॥ अनुपकारिणे पात्राय योग्याय इति वा ॥ पातृशब्दाच्चतुर्थी ॥ पात्रे रक्षकाय विद्यातपस्तेजसा आत्मनो दातुश्च रक्षणे क्षमाय वा ॥ गुणहीनो ब्राह्मणः प्रतिगृह्य स्वयं नश्येत् ॥ दातारं च न पालयेत् ॥ अतो रक्षणक्षमायैव दातव्यमिति यद्दानं दीयते तत्सात्त्विकम् ॥ देश-

---

१ अत एवानन्दगिरीये यथासंभवं सात्त्विकादिभेदेन त्रैविध्यमित्युक्तम् ॥

कालापेक्षया पात्रस्याधिक्यं सूचयितुं देशकालाभ्यां परतः पात्रस्योक्तिः ॥ पात्रसम-भिव्याहारात् पात्रभूतप्रतिग्रहीतुरनुकूले देशे तादृशे काले च यद्दानं दीयते तत्सात्त्विकम् ॥ न हि पात्रे प्राप्ते, श्रीएङ्गाद्यादिव्यदेशेषु ग्रहणसंक्रान्त्यादिपुण्यकालेषु च दास्यामि तत्र तदानीमेत्य प्रतिगृह्णीयेति वचनमुचितम् ॥ यस्मिन् देशे काले च पात्रं लभ्यते ॥ स एव पुण्यकालः ॥ स एव तिथिः [१]सर्वतिथ्यात्मकः ॥ दानमिदं सात्त्विकस्य लक्षणम् ॥ सात्त्विकीबुभूषतां साधनम् ॥ अत एवमेव दानं कार्यम् ॥२०॥

कृष्णः ॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ॥
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

यदिति ॥ प्रत्युपकाराय इदं प्रत्युपकारार्थं फलं उद्दिश्य च वा परिक्लिष्टं परिक्लेशयुक्तं यथा तथा च यत् दानं दीयते तत् दानं राजसं स्मृतम् ॥ २१ ॥

इदानीमस्माभिरस्मै दत्ते कालान्तरे अयमुपकुर्यादिति प्रत्युपकारोद्देशेन वा ऐहिकामुष्मिकफलोद्देशेन वा च इदानीमेतावद्व्ययितव्यमस्तीति मनःखेदयुक्तं यथातथा च यद्दानं दीयते तद्दानं राजसं कथितम् ॥ सात्त्विकदानादस्य दानस्य अत्यन्तावरत्व-सूचनाय तुशब्दः ॥ पुनश्शब्दश्चार्थे ॥ विकल्पेन त्रयो भेदाः समुच्चयेनैकः इति चत्वारो राजसदानभेदाः ॥ २१ ॥

कृष्णः ॥ अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ॥
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

अदेशेति ॥ देशश्च कालश्च अनयोः समाहारः देशकालं न देशकालं अदेश-कालं तस्मिन् न पात्राणि अपात्राणि तेभ्यः अपात्रेभ्यश्च न सत्कृतं सत्कारयुक्तं असत्कृतं यथातथा अवज्ञातं अपमाननयुक्तं यथातथा यत् दीयते तत् तामसं उदाहृतं उक्तम् ॥ २२ ॥

अप्रशस्तदेशे अप्रशस्तकाले अयोग्येभ्यो नटविटगायकादिभ्यः पादप्रक्षालनादि-

---

१ अत एव उत्तङ्कमहर्षिरागते अयमेव श्राद्धतिथिरिति निश्चित्य श्राद्धमकृत पौष्यराजः ॥ भारते आदिपर्वणि (३) अध्याये ॥

सत्काररहितं यथातथा वाचा शरीरेण च प्रतिग्रहीतुस्तिरस्कारपूर्वकं च यद्दानं दीयते तद्दानं तामसं कथितम् ॥ अत्र विकल्पेन पञ्च भेदाः ॥ अदेशकाले अपात्रेभ्यः असत्कृतं अवज्ञातं इति विशेषणपंचकसमुच्चयेनैकः इति षट् तामसभेदाः ॥ यथासंभवं द्वित्रिचतुर्विशेषणसमुच्चयभेदेन बहवो भेदाः ॥ उक्तः सात्विकादिदानभेदैः सात्विकादित्वं ज्ञात्वा राजसतामसतां परित्यज्य सात्विकदानं कृत्वा सात्विकतां संपादयन्तु ॥ वर्धयन्तु च ताम् ॥ त्वमपि सात्विकदानं कृत्वा सात्विकतां संपादय ॥ तां च वर्धय ॥ २२ ॥

अर्जुनः ॥ राजसानां तामसानां च हानाय सात्विकानामादानाय च श्रद्धादिषु सात्विकादिभेदा उक्ताः ज्ञात्वेमान् भेदान् राजसतामसान् परित्यज्य सात्विकानामेव महता प्रयत्नेन ग्रहणेऽपि तेषां प्रमादादज्ञानाद्वैगुण्यादिना राजसतामसभेदलक्षणमिश्रणादिना च सात्विकता हीयेत ॥ कथमनुष्ठितमेकैकमपि सात्विकमेव संपद्येत ॥ ब्रूहि ॥

कृष्णः ॥ ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः ॥

ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

ओंतदिति ॥ ब्रह्मणः परब्रह्मणः ओं तत् सत् इति त्रिविधः निर्दिश्यते अनेनेति निर्देशः नाम स्मृतः उक्तः ॥ तेन ब्रह्मणा तेन त्रिविधेन निर्देशेन वा तेन निर्देशेन सह इति वा ब्राह्मणाः वेदाश्च यज्ञाश्च पुरा विहिताः सृष्टाः ॥ २३ ॥

ओम् तत् सत् इति त्रिविधः निर्देशो नाम परब्रह्मणः महर्षिभिरुक्तः ॥ श्रूयते चेदं नामत्रयं परब्रह्मणः १'ओमिति ब्रह्म' २'तत्त्वमसि' ३'सदेव सोम्येदं' इत्यादौ ॥ यस्यायं त्रिविधो निर्देशः तेन ४ परब्रह्मणा स्वाराधनार्थं यज्ञाः तदङ्गोपाङ्गादितत्परिकरप्रतिपादनार्थं वेदाः तदध्ययनाध्यापनार्थं ब्राह्मणाश्च पुरा विहिताः ॥ उक्तनामत्रयवता परमात्मना निर्मितत्वात् ब्राह्मणा-

---

१. तै. १. ८. २. छां. ६. ८. ७ ३ छां ६. २. १. ४ अ. तेन नामत्रयेण तदुच्चारण सामर्थ्येन ब्राह्मणादयः पुरा विधात्रा सृष्टाः ॥ इति केचित् ॥

दयस्त्रयोऽपि ओमादिपदवाच्याः ॥ कार्ये कारणनामवत्त्वस्य मृत्कार्ये घटादौ दर्शनात् ॥ वेदानां निर्माणं नाम प्रकाशनम् ॥ येन स्वाराधनार्थं यज्ञदानतपःप्रभृतीनि कर्माणि तदुपयोगिनो मन्त्रान् तदुपदेशेन ब्राह्मणांश्च निर्माय परमोपकारः कृतः तं परमोपकारिणं परमात्मानं मां [१] स्मृत्वा मदीयमिदं नामत्रयं एतदुपलक्षितनामान्तराणि चोच्चार्य मध्ये मध्ये च तत्स्मरणनामोच्चारणपूर्वकं च यत् क्रियते तदङ्गादिवैगुण्येऽपि राजसतामसभेदलक्षणमिश्रणेऽपि सात्विकमेव संपद्येत ॥ मा शङ्किष्ठाः ॥ मा च व्यथिष्ठाः ॥ लोके सुखसाधनमनुतिष्ठन्तः तत्प्रकारप्रदर्शनेन परमोपकारिणो ये तदनुस्मरणतन्नामोच्चारणपूर्वकमनुतिष्ठन्ति॥ उक्तत्रिविधनिर्देशेन सह ब्राह्मणादयो निर्मिताः ॥ ब्राह्मणादीनां प्रमादादिना वैगुण्यप्राप्तौ तत्परिहरणपूर्वकं साद्गुण्यसंपादनसाधनभूतमिदं [२]नामत्रयमस्तु इति सहानेन ते सृष्टाः विहिताः वैगुण्यपरिहारपूर्वकं सगुणीकृता इति वा ॥ विगुणमपि ईदृशनामत्रयसाहित्येन सगुणं सात्विकं समग्रं सफलं च भवति ॥ २३ ॥

वि ॥ अर्जुनः ॥ शास्त्रशब्दितवेदोदितयज्ञादेः सत्वादिगुणभेदेन सात्विकादिभेदा उक्ताः किं तस्य शास्त्रीयत्वमूलकयोग्यतातिशयानुगुणगौरवावहशब्दसंयोगोऽस्ति ॥ ब्रूहि ॥

कृष्णः ॥ ओं तत् सत् इति त्रिविधः निर्देशः ब्रह्मणः ब्रह्म वेदः लक्षणया वेदोक्तम् कर्म तस्य वैदिकस्य यज्ञदानतपःप्रभृतिकर्मणः संबन्धी उक्तः ॥ तेन ओमादित्रितयेन सहिता एव ब्राह्मणादयस्त्रयो मया पुरा सृष्टाः ब्रह्मशब्दितवेदाधिकारिणः वेदाः यज्ञाश्च पुरा मया सृष्टाः वैदिकस्य कर्मणः ओंपदसाहित्यं ओंपदस्य कर्माङ्गत्वेन प्रयोगादौ प्रयुज्यमानतया ॥ तत्सत्पदसाहित्यं तु त-

१. अत्र 'नकरमकलपुरिन्दु नान्मुककु पूमेल् पकर मेर पयन्द पण्बन् पेयरिनैये ॥ पुन्दियाल् चिन्दियादोदियुरुवेण्णु अन्दियालाम्पयनङ्गेन ॥ इति (३. १. ३३.) गाथाऽनुसन्धेया ॥ 'प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ॥ यानि तेषामशेषाणां कृष्णानुस्मरणं परं' इति वचनं चानुसन्धेयम् ॥ २. अव्यवयवक ओं तत् सत् इत्येकं ब्रह्मणो नाम ॥ अकारोकारमकारात्मकप्रणववत् ॥ इत्येके ॥

तत्सत्पदयोः पूज्यत्वेन तद्वाचकतया ॥ ब्राह्मणादीनां तदन्वयप्रकारो वक्ष्यते ॥ परमगौरवावहः ओंतत्सच्छब्दानां संयोगस्तस्यास्ति ॥ ओमादिपदान्वयित्वं वैदिकस्य यज्ञादेः सवस्य परमगौरवावह साधारणमेकं लक्षणम् ॥ अतः शास्त्रीयमेवानुष्ठेयम् ॥ नाशास्त्रीयम् ॥ अतस्त्वं शास्त्रीयं कर्म अनुतिष्ठ ॥ २३ ॥

कृष्णः ॥ तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ॥
प्रवर्तन्ते विधानोक्तास्सततं ब्रह्मवादिनां ॥ २४ ॥

तस्मादिति ॥ तस्मात् ओं इति उदाहृत्य उक्त्वा, विधाने उक्ताः विधानोक्ताः ब्रह्म वेदं वदन्तीति ब्रह्मवादिनः तेषां ब्रह्मवादिनां यज्ञः दानं च तपश्च यज्ञदानतपांसि तद्रूपाः क्रियाः कर्माणि तेषां क्रियाः करणानि वा प्रवर्तन्ते ॥ २४ ॥

यस्मात् ओमित्यस्य ईदृशो महिमा तस्मात् ब्रह्मवादिनां वेदतदर्थप्रवचनपराणां वेदशास्त्रादिवित्त्युक्ताः यज्ञदानतपःक्रियाः यज्ञदानतपःप्रभृतीनि कर्माणि सदा ओमित्युच्चार्यैव प्रवर्तन्ते आरब्धानि भवन्ति ॥ ताश्च ओमित्युच्चारणपूर्वकं आरभ्य कृतत्वात् प्रकृष्टा वर्तन्ते ॥ उक्तविधया वैगुण्यप्राप्तावपि सगुणास्समग्राः संपद्यन्ते ॥ ओङ्कारवाच्यभगवदनुस्मरणपूर्वकं ओङ्कारतदुपलक्षितनामांतरोच्चारणपूर्वकं च आरभ्य मध्ये तत्साहित्येन करणे विगुणमपि सगुणं सात्विकं भवति ॥ अतस्तथैव कुर्वन्ति वेदवादिनः ॥ त्वमपि तथैवानुतिष्ठ ॥ भगवन्नामसु उक्तनामत्रयस्य प्राधान्यात् अन्योपलक्षकत्वेनास्यैव निर्देशः ॥ तत्रापि ओङ्कारस्य प्राधान्यात् तस्मिन् ओङ्कारस्यैव प्रथमं निर्देशः ॥ भगवतः ओंशब्दवाच्यत्वं तु भगवतो जगति जगतश्च भगवति प्रोतत्वात् भगवतो जगद्रक्षकत्वाच्च ॥ ओत इति ओतमस्मिन्निति अवतीति च ओमिति निरुक्तिः ॥ २४ ॥

वि ॥ तस्मात् ब्राह्मणादीनां त्रयाणां ओंतत्सच्छब्दान्वितत्वेनैव मया विहितत्वात् ओमित्युदाहृत्य यज्ञादयस्सततं प्रवर्तन्ते ॥ ओमित्युच्चार्य क्रियमाणत्वाद्वैदिककर्मणां ओमितिशब्दान्वयः ॥ ओमित्युच्चार्य आरभ्यमाणत्वात् विधानपदेन ब्रह्मपदेन च सूचितानां वेदाश्चेति पूर्वमुक्तानां वेदानां ओमितिशब्दान्वयः ॥ ओमिति-

शब्दान्वितकर्मकरणात् तदन्वितवेदोच्चारणाच्च उदाहृत्येत्युच्चारणकर्तृत्वेन ओमिति-शब्दान्वितकर्मकर्तृत्वेन तदन्वितस्वाध्यायादित्वेन च सूचितानां ब्राह्मणास्तेनेति पूर्वमुक्तानां ब्राह्मणानां ओमितिशब्दान्वयः ॥ २४ ॥

कृष्णः ॥ तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ॥

दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः ॥ २५ ॥

तदिति ॥ तस्मात् तत् इति उदाहृत्य मोक्षं कांक्षन्ते इति मोक्षकांक्षिणः तैः मोक्षकांक्षिभिः फलं अनभिसन्धाय अनपेक्ष्य यज्ञाश्च तपांसि च यज्ञतपांसि यज्ञतपोरूपाः क्रियाः यज्ञतपःक्रियाः यज्ञतपसां क्रियाः इति वा विविधाः विधाः प्रकाराः यासां ताः विविधाः दानरूपाः क्रियाः दानक्रियाः दानानां क्रियाः इति वा ताश्च क्रियन्ते ॥ २५ ॥

तत् इति भगवतो नाम उच्चार्य तत् अतीन्द्रियं अवाङ्मनसगोचरं परोक्षं ब्रह्म कर्मणा अनेन मे स्यात् इत्यभिसन्धाय फलं च अनभिसन्धाय मोक्षेच्छुभिः यज्ञतपोरूपक्रियाः नानाविधदानरूपक्रियाश्च क्रियन्ते ॥ सर्वत्र ततत्वात् अतीन्द्रियत्वेन परोक्षत्वात् अमानित्वादिसाधनहीनानां अनिकृष्टतरत्वाच्च तदिति ब्रह्मणो नाम ॥ उक्तरीत्या तत्पदतदुपलक्षितनामान्तरोच्चारणपूर्वकं मध्ये तच्छब्दितभगवन्नामोच्चारणतदनुस्मरणसहितं च क्रियमाणं विगुणमपि सगुणं समग्रं सात्त्विकं भवति ॥ अत एवमनुतिष्ठन्ति मोक्षकांक्षिणः ॥ त्वमप्येवमनुतिष्ठ ॥ २५ ॥

वि ॥ फलमनभिसन्धाय मोक्षकांक्षिभिः यज्ञतपःक्रियाः विविधाः दानक्रियाश्च क्रियन्ते ॥ ताः १तदितिशब्देन निर्देश्याः तच्छब्दवाच्यतया तच्छब्दान्विताः ॥ परोक्षतया तच्छब्दो ब्रह्मवाची तत्प्राप्तिसाधनत्वेन लक्षणया यज्ञादिकर्माण्यपि तच्छब्दवाच्यानि ॥ अतो यज्ञादीनां तच्छब्दान्वयः ॥ तच्छब्दवाच्यपरब्रह्मप्राप्तिसाधनत्वहेतुना तच्छब्दवाच्यानां वेदानामपि तच्छब्दान्वयः ॥ क्रिया इत्युपलक्षणम् ॥ तदितिशब्दान्वितयज्ञाद्यनुष्ठानेन तथाविधवेदाध्ययनादिना च क्रियन्ते इति कर्तृत्वेन मोक्षकांक्षिभिरिति मुमुक्षुत्वेन च सूचितानां ब्राह्मणोपलक्षितवेदवैदिकाधिकारित्रैवर्णिकानामपि तच्छब्दान्वयः ॥ मोक्षतदितरपुरुषार्थसाधनानां वैदिकानां सर्वेषां

कर्मणां प्रणवान्वयः सामान्यलक्षणम् ॥ ब्रह्मण इति सामान्यतो वैदिककर्मनिर्देशात् ॥ ब्रह्मवादिनामिति सामान्यनिर्देशाच्च ॥ मोक्षसाधनानां कर्मणां तच्छब्दान्वयो विशेषलक्षणम्॥ फलमनभिसन्धायेति मोक्षकांक्षिभिरिति च विशिष्य निर्देशात् ॥ मोक्षेतरपुरुषार्थसाधनानां सच्छब्दान्वयो विशेषलक्षणम् ॥ 'प्रशस्ते कर्मणी'ति प्रशस्ततामात्रस्य निमित्तत्वेन वचनात् ॥ वक्ष्यते चेदमव्ययधानेन ॥ २५ ॥

कृष्णः ॥ सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ॥
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥

यज्ञे तपसि दाने च स्थितिस्सदिति चोच्यते ॥
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

सद्भाव इति ॥ हे पार्थ सतः विद्यमानस्य भावः सद्भावः तस्मिन् सद्भावे साधोः भावः साधुभावः तस्मिन् साधुभावे च सत् इत्येतत् प्रयुज्यते ॥ तथा प्रशस्ते कर्मणि सत् इति शब्दः सच्छब्दः युज्यते प्रयुज्यते ॥ [illegible] इति वा ॥ यज्ञे तपसि दाने च स्थितिः निष्ठा च सत् [illegible] उच्यते ॥ [illegible] तदर्थं तदर्थं [illegible] तदर्थीयं तदर्थं [illegible] ॥ २६ ॥ २७ ॥

सत् [illegible] एवं प्रयुज्यते ॥ तथा साधुसत्कृतं वस्तु तस्य भावः [illegible] सत् इत्येतत् प्रयुज्यते ॥ [illegible] ॥ तथा [illegible] विवाहादौ कर्मणि वाच्ये सच्छब्दः प्रयुज्यते ॥ [illegible] इति वा ॥ [illegible]कर्मवाचकः सच्छब्दः ॥ यज्ञे तपसि दाने च [illegible] निष्ठा या सा च सदिति उच्यते ॥ तस्मिन्नर्थे वाच्ये सच्छब्दः प्रयुज्यते ॥ [illegible] वा-

१. 'शस्तं चाथे'ति कोशेन मङ्गलपर्यायः शस्तशब्दः ॥ प्रशस्तं परममाङ्गलिकम् ॥

चकः सच्छब्दः ॥ यज्ञदानतपोर्थं भवं यज्ञदानतपोरूपेष्वर्थेषु भवं वा यत्कर्म तदनुकूलं कर्म तत् सदित्युच्यते ॥ ब्रह्मण इति प्रकृतं परं ब्रह्म तत् तदर्थं भवं तत्प्राप्त्यर्थं क्रियमाणमकाम्यं यज्ञादिकं कर्म सदित्युच्यते ॥ तदर्थं भगवद्विषयकं ज्ञानं तस्येदं तद्धेतुभूतमकाम्यं कर्म सदित्युच्यते ॥ भगवदर्पणबुद्ध्या कृतं कर्म वा ॥ भगवत्प्राप्तिफलकं यत्कर्म तत् तदर्थं कर्म पूजोपहारगृहांगणपरिमार्जनोपलेपरङ्गमालिकादिक्रिया तस्येदं तदनुकूलं कर्म उद्यानशालिक्षेत्रधनार्जनादिविषयं कर्म सदित्युच्यते ॥ तदर्थीयमेव सत् अतदर्थीयं तु न सत् ॥ तदर्थीयं त्रिगुणमपि सदेव तदर्थीयत्वरूपविशेषात् ॥ भगवतः सर्वदा विद्यमानत्वात् अव्याजकरुणानिधितया साधुभावात् विवाहादिमांगलिककर्मप्रवर्तकत्वात् यज्ञदानतपोनिष्ठाप्राप्यत्वात् तदर्थीयकर्मोद्देश्यत्वाच्च सच्छब्दवाच्यत्वम् ॥ अतः भगवद्वाचकं सदित्येतत् कर्मणां सद्भावनिमित्तं साधुभावनिमित्तं च आदौ प्रयुज्यते ॥ सदित्युच्चार्य सच्छब्दार्थभगवदनुस्मरणपूर्वकमारभ्य मध्ये भगवन्नामोच्चारणानुस्मरणसहितं क्रियमाणं विगुणमपि सगुणं समग्रं सात्विकं भवति ॥ एवं क्रियमाणं कर्म साधु भवति ॥ तस्य च फलं विद्यत एव॥ अत एवं क्रियमाणं कर्म स्वरूपतस्सत् फलतश्च सत्॥ अतस्सदित्युच्चारणपूर्वकमुक्तरीत्या अनुतिष्ठन्ति सन्तः ॥ अतस्त्वमप्येवमनुतिष्ठ ॥ यस्यैकैकोऽप्यवयव ईदृशमहिमवान् किमु वाच्यं स समुदितः त्रिविधः ओंतत्सदिति निर्देशः कर्मसाद्गुण्यापादक इति ॥ हे पार्थ प्रमादोपनतवैगुण्यपरिहरणचणस्य ईदृशमहामहिमवतो महतो निर्देशस्य महत औषधस्येव विद्यमानत्वात् न कथमनुष्ठितं कर्म सगुणं समग्रं सात्विकं सफलं संपत्स्यत इति शङ्काया अवकाशः ॥ अतो निःशङ्कमनुष्ठेयं स्वधर्ममनुतिष्ठ ॥ विमृशेदं सर्वमवधानेन ॥

वि ॥ अतः सच्छब्दस्यकल्याणवाचित्वात् यज्ञादौ स्थितेश्च परममङ्गलत्वात् स्थितिशब्दिता निष्ठा सदित्युच्यते॥ सच्छब्दवाच्यनिष्ठावत्त्वेन सच्छब्दवाच्यनिष्ठाहेतुत्वेन च ब्राह्मणोपलक्षितत्रैवर्णिकानां वेदानां च सच्छब्दान्वयः ॥ तदर्थं ब्राह्मणोपलक्षितत्रैवर्णिकार्थं भवं कर्म यज्ञतपोदानादिकं सदित्यभिधीयते ॥ सच्छब्दवाच्यत्वाद्यज्ञादीनां सच्छब्दान्वयः ॥ एवमुक्तरीत्या वैदिकानां कर्मणां ओंतत्सच्छब्दान्वयरूपसामान्यविशेषलक्षणवत्वेन परमप्रशस्ततया तेषामेव सत्वादिगुणसंबन्धप्रयुक्तं त्रैविध्यम् सात्विक्यादिश्रद्धात्रयसंबन्धप्रयुक्तं च त्रैविध्यम्॥

गुणभेदेन फलभेदश्च ॥ नाशास्त्रीयस्य कर्मणः ॥ इदमेवोक्तं १ 'त्रिविधा भवति श्रद्धे 'त्यनेन २ 'अशास्त्रविहितं घोर 'मित्यनेन च ॥ २६ ॥ २७ ॥

अर्जुनः ॥ ३ विनाऽपि विधिज्ञानं श्रद्धयाऽनुष्ठितं कर्म सफलमेव ॥ किंतु फलं नैकरूपम् ॥ श्रद्धायाः सत्वादिगुणत्रयसंबन्धभेदेन भेदात् कर्मणः सात्विकादिभेदाः संभवन्ति ॥ तदनुसारेण फलेऽपि भेदः संभवति ॥ ज्ञानाभावात्कर्मणो न निष्फलत्वं शंकनीयमित्युक्तम् ॥ किं तथा श्रद्धाविहीनं ज्ञानपूर्वकमनुष्ठितं सफलं भवति उत न ॥ ४ 'किं श्रद्धाविहीनं कर्म ओंतत्सदिति ब्रह्मनिर्देशसाहित्येन सगुणं सात्विकं समग्रं सफलं भवति ॥ उत न ब्रूहि ॥

कृष्णः ॥ अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥

अश्रद्धयेति ॥ हे पार्थ अश्रद्धा श्रद्धायाः अभावः तया हुतं दत्तं तप्तं तपः यत् अन्यत् कृतं कर्म तच्च असत् इत्युच्यते ॥ तत् प्रेत्य मरणानन्तरम् न ॥ इह च नो ॥ सर्वथा निष्फलमित्यर्थः ॥ २८ ॥

सत्यपि ज्ञाने अश्रद्धया हुतं दत्तं तप्तं तपः यच्चान्यत् कृतं कर्म तत्सर्वं असत् फलतः असत् अफलं स्वरूपतः असत् असाधु इत्युच्यते ॥ तत् प्रेत्य मरणानन्तरं नोपकरोति ॥ इह च नोपकरोति ॥ सद्भिर्विगर्हितत्वादस्मिन् लोके यशःफलाय न कल्पते ॥ दांभिकोऽयं परवंचनार्थमश्रद्धया कर्म करोति अतोऽयमासुर इति साधव एनं निन्दन्ति ॥ कर्मणि तत्प्रवर्तके वेदादौ तदुद्देश्यभूतेष्वस्मासु च श्रद्धारहितोऽयं दांभिकः अतो नास्मै किमपि फलं प्रदेयमिति देवा न फलं ददति ॥ ५ 'ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसी 'त्युक्तरीत्या ज्ञानश्रद्धोभयपूर्वकं कृतं कर्म महते फलाय कल्पते ॥ विनाऽपि शास्त्रज्ञानं श्रद्धयाऽनुष्ठितं कर्म श्रद्धानुगुणं कस्मैचित् फलाय कल्पते ॥ विना श्रद्धां कृतं कर्म ज्ञानपूर्वकमपि न कस्मैचिदपि फलाय कल्पते ॥ किंतु अश्रद्धया कृतं तत् निष्फलमेव ॥ ६ अश्रद्धया कृतं कर्म ओं तत् सदिति ब्रह्मनिर्देशसहितमपि न सगुणं सफलं भवति अतः श्रद्धयैव कर्म कर्तव्यं नाश्रद्धया ॥ ज्ञानपूर्वकं चेत् हेम्नः परमामोदः ॥ २८ ॥

---

१. १७. २. २. १७. ५. ३. हे ॥ ४. अ. ॥ ५. १६. २४. ६. अ.

त्ति ॥ अर्जुनः ॥ श्रद्धायुक्तस्याप्यशास्त्रीयस्य आसुरत्वेन असत्त्वमुक्तं १' अशास्त्रविहितं घोर 'मित्यादिना ॥ तेन न श्रद्धया कृत्यं शास्त्रीयत्वमेव फलसाधनत्वायोपयुक्तं इत्युक्तं भवति ॥ यदि तथा तर्हि शास्त्रीयं चेत् श्रद्धाविहीनमपि सफलं स्यात् किं तथा ॥ ब्रूहि ॥

कृष्णः ॥ शास्त्रीयकर्मप्रकरणत्वात् शास्त्रीयमपीति ग्राह्यम् ॥ अश्रद्धया कृतं यज्ञादिकं शास्त्रीयमपि न मोक्षाय न च सांसारिकफलाय अतो निष्फलम् ॥ श्रद्धायुक्तमप्यवैदिकं वैदिकमपि श्रद्धाविहीनं निष्फलम् ॥ तस्मात् वैदिकमेव श्रद्धायुक्तमेव सर्वैरनुष्ठेयमिति परमाशयः॥ वैदिकस्यैव श्रद्धयाऽनुष्ठाने स्यात्तेन परमं श्रेयः॥२८॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते श्रद्धात्रयविभागयोगाख्याध्यायप्रदर्शकः सप्तदशः प्रतिबिम्बः ॥

१. १७. ५.

## ॥ अथ अष्टादशोऽध्यायः ॥

सञ्जयः ॥ अवसितो गीताशास्त्रोपदेशः पञ्चदशे ॥ अत एवोक्तं भगवता ॥ १'इति गुह्यतमं शास्त्रमिदमुक्तं'मिति ॥ ततः त्वदुपदिष्टे परमसहनीये अस्मिन् गीताशास्त्रे अधिकारिणः के अनधिकारिणश्च के इति पार्थेन पृष्टो भगवान् देवासुरस्वभावविभागमुखेन अधिकारिणोऽनधिकारिणश्च प्रादर्शयत् षोडशे ॥ तदन्ते 'ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसी'ति भगवतोक्तं तदनन्तरं विना विधिज्ञानं श्रद्धयाऽनुष्ठितस्य फलमस्ति न वेति भगवन्तमपृच्छत् ॥ पृष्टश्च तेन भगवान् विना विधिज्ञानं श्रद्धयाऽनुष्ठितस्य श्रद्धाभेदेन फलमस्त्येव ॥ श्रद्धा यदि सात्त्विकी स्यात् तर्हि सात्त्विकं निर्मलं फलं भवति ॥ अतः आहारादीनां सात्त्विकादिभेदैः सात्त्विकादीनां ज्ञात्वा राजसतामसभेदपरित्यागेन सात्त्विकानामेवाहारादीनां सेवनेन सात्त्विकतां संपाद्य सात्त्विक्यैव श्रद्धयाऽनुष्ठेयं कर्म ॥ प्रमादादिना प्राप्तवैगुण्यस्य भगवन्नामोच्चारणतदनुस्मरणादिना परिहारः ॥ सत्यपि ज्ञाने अश्रद्धया कृतं निष्फलं श्रद्धया कृतमपि अशास्त्रीयं निष्फलं शास्त्रीयमपि अश्रद्धया कृतं निष्फलम् ॥ अतः शास्त्रीयं कर्म श्रद्धया अनुष्ठेयमित्यब्रवीत् ॥ ततो भगवता २'अशोच्यानन्वशोचस्त्व'मित्यादिना आसप्तदशाध्यायसमाप्ति तत्र तत्र विप्रकीर्णतयोक्तानां अर्थानां एकबुद्ध्यारोहाय दार्ढ्याय च सर्वशास्त्रार्थोपसंहारे तानेवार्थान् पुनर्विवक्षुणा यद्यपृष्टेनैव मया वक्तुमारभ्येत तर्हि उक्तानेवार्थान् कुतोऽयं वक्तुमारभत इति सभ्यानां जामिता चोत्पद्येत ॥ यदि गृहीत प्रार्थितेन मया वक्तुमारभ्येत तर्हि शृणुयादयमादरेणेति मत्वा पृच्छ मामेवमित्यन्तःप्रेरितः पार्थो भगवन्तमभ्यर्थयते ॥

॥ अर्जुन उवाच ॥

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ॥
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥

संन्यासस्येति ॥ महान्तौ बाहू यस्य सः महाबाहुः हे महाबाहो कृष्ण संन्या-

---

१. १५ २० २. २ ११.

स्स्य तत्वं वेदितुं ज्ञातुं इच्छामि ॥ हृषीकाणां इन्द्रियाणां ईशः हृषीकेशः हे हृषीकेश केशिनं तन्नामानमसुरं कंसभृत्यं निषूदयतीति केशिनिषूदनः हे केशिनिषूदन कृष्ण त्यागस्य च तत्वं पृथक् वेदितुं इच्छामि ॥ १ ॥

द्वै ॥ १ 'सन्यासः कर्मयोगश्चे'ति २ 'त्यागाच्छान्तिरनन्तरमिति मोक्षहेतुत्वेनोक्तयोः संन्यासत्यागयोः तत्वं पृथक् वेदितुमिच्छामि ॥ किं तौ शब्दावेकार्थौ उत भिन्नार्थौ ब्रूहि ॥ १ ॥

अ ॥ ३ 'सर्व कर्माणि मनसा संन्यस्य' ४ 'मयिसर्वाणि कर्माणि संन्यस्य' ५ 'ये तु सर्वाणि कर्माणि मयि संन्यस्य' ६ 'संन्यासयोगयुक्तात्मा' ७ 'योगसंन्यस्तकर्माणं' इत्यादिषु कर्मसंन्यास उक्तः ॥ ८ 'त्यक्त्वा कर्मफलासङ्गं' ९ 'सर्वकर्मफलत्यागं' इत्यादिषु कर्मफलत्याग उक्तः ॥ यदि कर्मसंन्यासः कर्मत्यागः तर्हि द्वयोः कर्तव्यतोक्तिरनुपपन्ना ॥ कर्मत्यागफलत्यागयोर्विरोधात् ॥ अतः संन्यासत्यागशब्दार्थौ तत्वतः पृथक् ज्ञातुमिच्छामि ॥ कर्मणा विशुद्धान्तःकरणस्य विदुषः सर्वस्य मिथ्यात्वदर्शनेन सर्वकर्मत्यागोक्तिस्थलेषु १० 'सर्वकर्माणि मनसा संन्यस्ये'त्यादिषु संन्यासशब्दस्य कर्मत्याग एवार्थः॥ न च कर्मत्यागकर्मफलत्यागयोर्विरोधः॥ अविदुषः कर्मफलत्यागः विदुषस्तु कर्मत्याग इत्यधिकारिभेदेन व्यवस्थापनात् ॥ अशुद्धान्तःकरणस्य कर्मयोगविधानस्थलेषु ११ 'मयि सर्वाणि कर्माणी'त्यादिषु यदि कर्मसंन्यासः कर्मत्यागः स्यात् तर्हि कर्मत्यागतत्फलत्यागयोः विरोध एव ॥ उभयोरेकाधिकारिकत्वात् ॥ अतः अशुद्धान्तःकरणस्य कर्मयोगविधानस्थलेषु संन्यासशब्दस्य फलत्यागोक्तिस्थलस्थत्यागशब्दस्येव स्वसमभिव्याहृतपदार्थकर्मकपरित्यागो नार्थः किंतु यागीयहिंसाधिकृतेषु अहिंसाशब्दस्येव योषित्संगाधिकृतेषु ब्रह्मचर्यशब्दस्येव प्रसिद्धार्थादन्योऽर्थः कल्प्यः इति भाति॥ सः कः तं ब्रूहि ॥

उक्ताः श्रद्धादीनां सात्विकादयस्त्रयो भेदाः॥ अधुना १२ 'स सन्यासी च योगी चे'ति षष्ठाद्यायुक्तस्य द्वितीयादिषु चतुर्षु आवश्यकत्वेन प्रतिपादितं यत् कर्माणि

---

१. ५. २. २. १२. १२. ३. ५. १३. ४. ३. ३०. ५. १२. ६. ६. ९. २८. ७. ४. ४१. ८. ४. २०. ९. १२. ११. २०. ५. १३. ११. ३. ३०. १२. ६. १

फलानाश्रयणं तद्रूपस्य त्यागांशसाम्यात् संन्यासस्य स्वरूपं पृथक् सात्विकादिभेदेन ज्ञातुमिच्छामि ॥ कर्मफलत्यागरूपस्य संन्यासस्य सात्विकादिभेदान् ब्रूहि ॥ यदि तत्रतत्रोच्यमानः त्यागः उक्तरूपः संन्यास एव ॥ तर्हि संन्यासस्वरूपव्याख्यानेनैव त्यागस्वरूपमपि व्याख्यातं भविष्यति ॥ न पृथक् त्यागो व्याख्यातव्यः ॥ यदि त्यागः संन्यासादन्यः तर्हि त्यागस्यापि तत्वं पृथक् वेदितुमिच्छामि ॥ एवं मम द्वौ प्रश्नौ ॥ ब्रूहि ॥ संन्यासत्यागयोस्तत्वं वेदितुमिच्छामि इत्यनुक्त्वा संन्यासस्य तत्वं त्यागस्य च तत्वं इत्युक्त्या अयमभिप्रायस्सूच्यते ॥ महाबाहुस्त्वं केशिप्रमुखाननेकानसुरान् निजाश्रितजनसंरक्षणाय निषूदितवानसि ॥ तादृशस्त्वं तत्वोपदेशेन ज्ञानजननादज्ञानरूपान्तःशत्रुनिरसनेन दीनं मामुद्धर्तुमर्हसि ॥ हृषीकेशत्वान्मनोबुद्ध्योर्यथावदवस्थापने समर्थोऽसि ॥

अ ॥ वि ॥ १'त्यागेनैके अमृतत्वमानशुः' २'संन्यासयोगाद्यतयः शुद्धसत्वाः' इत्यत्रत्यौ संन्यासत्यागशब्दौ किं भिन्नार्थौ उत एकार्थौ आद्ये तयोः तत्वं पृथक् वेदितुमिच्छामि ॥ द्वितीये उभाभ्यां ताभ्यां शब्दाभ्यामुच्यमानस्य परित्यागरूपस्यैकस्यार्थस्यस्वरूपं वेदितुमिच्छामि ॥ ब्रूहि ॥ १ ॥

द्वै ॥ सञ्जयः ॥ एवं पृष्टो भगवान् द्वितीयादिषु कर्तव्यत्वेनोक्तस्य कर्मयोगस्य करणप्रकारं यथावद्विवक्षुः संन्यासत्यागशब्दयोः त्यागरूपैकार्थकत्वेन प्रतीयमानयोरवान्तरविशेषविवक्षया भिन्नार्थतामाह ॥

॥ श्रीभगवानुवाच ॥

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

काम्यानामिति ॥ कवयः विद्वांसः काम्यानां कर्मणां न्यासं परित्यागं संन्यासं विदुः जानन्ति ॥ विचक्षणाः पण्डिताः सर्वाणि च तानि कर्माणि च सर्वकर्माणि

---

१. २. ना. १२. ३.

सर्वकर्मणां फलानि सर्वकर्मफलानि सर्वकर्मफलानां त्यागः सर्वकर्मफलत्यागः तं त्यागं प्राहुः ॥ २ ॥

हे पार्थ संन्यासत्यागशब्दौ नैकार्थौ किंतु भिन्नार्थौ कस्तयोरर्थभेद इति चेत् ॥ काम्यानि कर्माणि द्विविधानि वैकल्पिककाम्यानि नियतकाम्यानि चेति ॥ जनकादिभिर्महात्मभिरनुष्ठितानि अश्वमेधादीनि वैकल्पिककाम्यानि ॥ दशरथादिभिरनुष्ठितानि पुत्रकामेष्ट्यादीनि कारीर्यादीनि च नियतकाम्यानि ॥ तत्र वैकल्पिककाम्यानि फलांशं त्यक्त्वा अवश्यमनुष्ठेयानि ॥ जनकादीनामनुष्ठानदर्शनात् ॥ नियतकाम्यानि तु सत्यां फलेच्छायामनुष्ठेयानि॥ दशरथादिभिः फलेच्छयैव अनुष्ठितत्वात्॥ वैकल्पिककाम्यानां फलपरित्यागः फलपरित्यागेनानुष्ठानमिति यावत् नियतकाम्यानां स्वरूपतः परित्यागः इत्येतदुभयं संन्यासशब्दार्थमाहुः ॥ सर्वकर्मफलत्यागं सर्वेषां काम्यकर्मणां वैकल्पिककाम्यानां नियतकाम्यानां च फलत्यागो यः तं त्यागशब्दार्थमाहुः ॥ सर्वकर्मेति द्विविधकाम्यकर्ममात्रग्रहणम् ॥ नित्यनैमित्तिकानामकाम्यानां फलस्य चित्तशुद्धिरूपस्यापेक्षितत्वेन त्यागायोगात् ॥ वैकल्पिककाम्यकर्मणां फलांशत्यागस्य संन्यासत्वे त्यागत्वे च संन्यासत्यागयोर्वैकल्पिककाम्यकर्मविषये को भेद इति चेत् ॥ फलत्यागपूर्वककरणं संन्यासः फलत्यागमात्रं त्यागः इति भेदः ॥ त्यागे करणाकरणे न विवक्षिते ॥ 'अनिच्छयाऽकर्मणा वाऽपि काम्यकर्मन्यासो न्यासः फलत्यागस्तु त्याग' इति प्राचीनशालश्रुतिः ॥ वैकल्पिककाम्यविषये संन्यासत्यागयोः करणाविवक्षाऽविवक्षाभ्यां भेदः ॥ नियतकाम्यविषये तु स्वरूपत्यागफलत्यागरूपेण भेदः ॥ आपाततः प्रतीयमानमेकार्थत्वं तु त्यागांशस्योभयत्र सत्वात् ॥ २ ॥

सञ्जयः ॥ वैकल्पिककाम्यविषये फलत्यागो यः संन्यासत्यागशब्दाभ्यामुक्तः स एव कर्तव्यतया स्वस्याभिमत इति वक्तुं काम्यकर्मविषये आपाततः प्रतीयमानां विप्रतिपत्तिमाह भगवान् ॥

कृष्णः ॥ त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥
यज्ञदानतपःकर्म न त्याज्यमिति चापरे॥ ३ ॥

त्याज्यमिति ॥ एके मनीषा बुद्धिः एषां अस्तीति मनीषिणः विद्वांसः दोषः अस्यास्तीति दोषवत् दुष्टं कर्म त्यक्तुं योग्यं त्याज्यं इति प्राहुः ॥ कर्म दोषेण तुल्यं

दोषवत् दोष इव त्याज्यं इति वा ॥ अपरे च यज्ञश्च दानं च तपश्च यज्ञदानतपांसि तद्रूपं कर्म यज्ञदानतपःकर्म न त्याज्यं इति प्राहुः ॥ ३ ॥

'कर्मणा बध्यते जन्तुः' इत्युक्तरीत्या बन्धकत्वदोषयुक्तं कर्म काम्यकर्म ॥ उक्तं हि मया ॥ १'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः'॥ इति तत् त्याज्यमिति केचन विद्वांसः प्राहुः ॥ यज्ञः दानं तपः इत्येतद्रूपं कर्म यज्ञदानतपांसि तदङ्गभूतानि इतरकर्माणि चेति वा एतत् न त्याज्यं किंतु कार्यं इत्यपरे मनीषिणः प्राहुः ॥ काम्यं कर्म यज्ञादिकं त्याज्यमिति केचित् ॥ न त्याज्यमित्यपरे ॥ उभयेऽपिमनीषिणः ॥ त्याज्यं न त्याज्यं इतीदं तु विरुद्धम् ॥ न च मनीषिणः परस्परविरुद्धं ब्रूयुः ॥ उक्तं हि मया ॥ २'व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दने'ति ॥ अतः अविरोधेन तात्पर्यं कल्पनीयम् ॥ तच्चेत्थम् ॥ न त्याज्यमित्यस्य स्वरूपतो न त्याज्यमित्यर्थः ॥ त्याज्यमित्यस्य फलरूपविशेषणं त्याज्यमित्यर्थः॥ उभयोरेकवाक्यतायां फलं त्यक्त्वा यज्ञादीनि कर्तव्यानीति फलति ॥ अत एक एवायंपक्षः ॥ विरोधप्रतीतिस्त्वापाततः ॥ परस्परविरुद्धौ द्वौ पक्षौ इत्येव कुतो न वाच्यमिति चेत् ॥ यद्येवं तर्हि त्याज्यमित्यस्य स्वरूपतस्त्याज्यमित्यर्थः स्यात् न त्याज्यमित्यस्य येन रूपेण विहितं तेन रूपेण कर्तव्यमित्यर्थः स्यात् ॥ उभयमपि न समञ्जसम् ॥ मदीयनिश्चयविरुद्धत्वात् ॥ न च मनीषिणः मदीयनिश्चयविरुद्धं ब्रूयुः ॥ अतो मदीयनिश्चयानुगुणमेकवाक्यतया त्याज्यं न त्याज्यमित्यनयोः यज्ञादिकं न त्याज्यं किंतु कर्तव्यम् कथं कर्तव्यमिति चेत् फलं त्यक्त्वा कर्तव्यं फलं तु त्याज्यं इत्येकस्मिन्नेव पक्षे पर्यवसानं कल्प्यम् ॥ अत एक एवायं पक्षः ॥ विरोधप्रतीतिस्तु आपाततः इत्युक्तम् ॥ कोऽसौ त्वदीयो निश्चयः यदानुगुण्यायैवं कल्पनीयमिति चेत् ॥ मदीयो निश्चयो वक्ष्यते ॥ ३ ॥

अ ॥ सञ्जयः ॥ एवं पृष्टो भगवानाह ॥

कृष्णः ॥ संन्यासत्यागशब्दौ न भिन्नार्थौ किंतु एकार्थौ त्यागरूपैकार्थवाचकत्वात् ॥ एकार्थकाभ्यां संन्यासत्यागशब्दाभ्यां उच्यमाने त्यागे विप्रतिपत्तयः सन्ति ॥ अविदुषां कर्माधिकृतानां तत्रतत्रोच्यमानः संन्यासशब्दितः कर्मत्यागः काम्यकर्मणां स्वरूपत्याग इति केचित् कवयो जानन्ति ॥ सर्वेषां

---

१. ३. ९. २. २. ४१.

नित्यनैमित्तिकानां फलत्यागः इति केचित् पण्डिताः प्राहुः ॥ दोषवतः बन्धकत्वदोष-१युक्तस्य सर्वस्यापि कर्मणः २दोषस्येव रागादेः स्वरूपतः त्यागः इत्येके ३मनीषिणः प्राहुः ॥ यज्ञदानतपोरूपनित्यनैमित्तिककर्मेतरकर्मत्याग इत्यपरे ४प्राहुः ॥ ५'काम्यकर्मणां स्वरूपतस्त्यागः संन्यासः ॥ नित्यनैमित्तिककर्मणां फलत्यागः संन्यासः ॥ बन्धकस्य कर्मसामान्यस्य स्वरूपतस्त्यागः संन्यासः ॥ यज्ञादिनित्यनैमित्तिकेतरकर्मणां स्वरूपतः त्याग एव संन्यासः न फलपरित्यागः ॥ इति चत्वारः पक्षाः तत्र द्वितीयः प्रथमश्च मदीयः पक्षः ॥ काम्यानि वर्जयित्वा नित्यनैमित्तिकानि फलं त्यक्त्वा कर्तव्यानीत्येवंरूपत्वात् ॥ तस्य च मदीयनिश्चयानुसारित्वात् ॥ कोऽसौ त्वदीयो निश्चय इति चेत् मदीयो निश्चयो वक्ष्यते ॥

संन्यासत्यागशब्दौ न भिन्नार्थौ किंतु त्यागरूपैकार्थवाचकौ ॥ 'संन्यासयोगाद्यतय' इति 'त्यागेनैके अमृतत्वमानशुः' इति च द्वयोर्मोक्षहेतुत्वश्रवणात् ॥ लोके च मयेदं संन्यस्तं त्यक्तं इत्येकस्मिन्नर्थे प्रयोगात् ॥ यद्येकार्थौ तर्हि कर्मसंन्यासः कर्मत्यागः स्यादितिचेत् ॥ अहिंसाशब्दस्येव ब्रह्मचर्यशब्दस्येव च अन्योऽर्थः कल्प्यते ॥ स क इति चेत् ॥ काम्यानां 'पुत्रकामो यजेत' 'स्वर्गकामो यजेत' 'पशुकामो यजेत' त्येवं कामोपबन्धेन विहितानां कर्मणां स्वरूपतस्त्यागमेव कर्माधिकृतस्य संन्यासं कवय आहुः ॥ विचक्षणास्तु सर्वेषां काम्यानां नित्यनैमित्तिकानां च कर्मणां फलत्यागं संन्यासं प्राहुः ॥ यथा ब्रह्मचर्यं स्वस्त्रीव्यतिरिक्तविषयं तथा संन्यासः कर्मफलविषयः न कर्मविषयः ॥ काम्यानां नित्यनैमित्तिकानां च कर्मणां फलं त्यक्त्वा अनुष्ठानमेव कर्मसंन्यासः फलत्यागश्च अतो न विरोधः इति तेषामाशयः ॥ दोषयुक्तं निषिद्धं कर्म त्याज्यम् ॥ दोषः निषेधः ॥ बन्धकत्वरूपदोषयुक्तं कर्मसामान्यं त्याज्यमिति वा ॥ इत्येके मनीषिणः प्राहुः ॥ निषिद्धकर्ममात्रस्य कर्मसामान्यस्य वा त्यागं संन्यासं प्राहुः ॥ यज्ञदानतपोरूपं नित्यं नैमित्तिकं च कर्म न त्याज्यं इति अपरे प्राहुः ॥ यज्ञादिनित्यनैमित्तिकेतरकाम्यनिषिद्धकर्मपरित्याग एव

---

१. दोषः अस्यास्तीति दोषवत् मतुप्प्रत्ययः ॥ २. दोषः यथा त्याज्यः तथा कर्मत्याज्यमिति च वतिप्रत्ययः ॥ ३ सांख्याः ॥ ४. मीमांसकाः ॥ ५. क्रमेण काम्यकर्मत्यागः संन्यासत्वेन सर्वकर्मसु फलत्यागः त्यागत्वेन च स्तूयते काम्यानामिति श्लोकेन अनयोरेव पक्षयोः क्रमेण विवरणं त्याज्यमिति श्लोकेन ॥ इति केचित् ॥

संन्यासः न तु फलत्यागः इति प्राहुः ॥ अत्र उक्तरीत्या चत्वारः पक्षाः ते च न ग्राह्याः मदीयनिश्चयविरुद्धत्वाद् कोऽसौ त्वदीयो निश्चय इति चेत्॥ मदीयो निश्चयो वक्ष्यते ॥

काम्यानां स्वरूपतस्त्यागं काम्यानां नित्यानां नैमित्तिकानां च सर्वेषां कर्मणां फलत्यागं बन्धकत्वदोषयुक्तस्य कर्मसामान्यस्य त्यागं यज्ञदानतपोरूपकर्मेतरकर्मत्यागं क्रमेण संन्यासं कवयो विचक्षणाः एके मनीषिणः अपरे मनीषिणश्च प्राहुः ॥ अत्र द्वितीयः पक्ष एव ग्राह्यः ॥ मदीयनिश्चयानुसारित्वात् ॥ मदीयो निश्चयस्तु वक्ष्यते ॥

संन्यासत्यागशब्दौ किमेकार्थौ उतभिन्नार्थौ इति द्वितीयप्रश्नस्य सूचीकटाहन्यायेन प्रथममुत्तरमुच्यते ॥ तयोरर्थभेदं केचिदाहुः ॥ स क इति चेत् ॥ काम्यानां कर्मणां त्यागं संन्यासं कवय आहुः ॥ काम्यानां नित्यानां नैमित्तिकानां च सर्वेषां कर्मणां फलत्यागं संन्यासं विचक्षणा प्राहु ॥ फलसंयोगेन विहितानि काम्यानि ॥ न तान्यनुष्ठेयानि ॥ किंतु त्याज्यानि ॥ तेषां त्याग एव संन्यासः इत्युच्यते इति केचिदाहुः ॥ तन्मतानुरोधेन संन्यासशब्दस्य काम्यकर्मत्यागार्थकत्वम् ॥ काम्यान्यपि तत्रतत्रोक्ततत्तत्फलपरित्यागे नित्यान्येव भवन्ति ॥ न कर्मणां काम्यत्वं नित्यत्वं च स्वरूपतोऽस्ति ॥ किंतु फलोद्देशतदभावाभ्यां काम्यत्वं नित्यत्वं च ॥ फलाभिसन्धित्यागे सर्वाणि विहितानि कर्माणि नित्यान्येव॥ अतः विहितानि काम्यान्यपि फलपरित्यागेन नित्यत्वादनुष्ठेयान्येव ॥ तत्र यः फलत्यागः स त्याग इत्युच्यते ॥ इत्यपरे प्राहुः ॥ तन्मतानुरोधेन त्यागशब्दस्य फलत्यागार्थकत्वं इति कर्मत्यागफलत्यागरूपेण संन्यासत्यागशब्दयोरर्थभेदः प्रतीयते ॥ संन्यस्तं त्यक्तमिति एकस्मिन्नर्थे प्रयोगदर्शनेन पर्यायता चावगम्यते ॥ अतस्तत्र संशयः किमेकार्थौ उत भिन्नार्थाविति ॥ एकार्थावेव संन्यासत्यागशब्दौ ॥ अर्थभेदस्य विप्रतिपन्नत्वप्रदर्शनेन एकार्थताया अङ्गीकृतत्वज्ञापनात् ॥ स चार्थः त्यागरूपः ॥ कर्मसंन्यासः कर्मत्याग एव स्यादिति चेत् ॥ कर्मसंन्यासः फलत्याग एव ॥ कुतः फलत्यागे कर्मत्यागवाचककर्मसंन्यासशब्दप्रयोग इति चेत् ॥ त्यागांशस्य सत्वेन कर्मसंन्याससाम्यात् ॥ कुतोऽयं गौणः प्रयोग इति चेत् ॥ अज्ञस्य फलपरित्यागः विदुषो विविदिषोश्च यो संन्यासो ताभ्यां तुल्य इति स्तुत्यर्थत्वात् ॥ स्तुत्यर्थं ब्राह्मणत्वेऽपि परिव्राजकानां शब्दान्तरेणाभिधानवत् त्यागत्वेऽपि स्तुत्यर्थं संन्यासशब्देनाभिधानम् ॥ कर्माधिकृतस्य त्यागः संन्यासश्च फलत्याग

एव ॥ अतो न संन्यासत्यागयोः पृथक् निरूपणमावश्यकं एकव्याख्यानेनैव उभयोर्व्याख्यानं भविष्यति ॥ सर्वस्य कर्मणो बन्धकत्वरूपदोषयुक्तत्वात् सर्वमपि कर्म दोषवत् त्याज्यं इति एके मनीषिणः प्राहुः ॥ अपरे तु यज्ञादीनि न त्याज्यानीत्याहुः ॥ अत्र द्वितीयः पक्षो मदीयः ॥ मदीयनिश्चयानुसारात् ॥ मदीयस्तु निश्चयो वक्ष्यते ॥ २ ॥ ३ ॥

वि ॥ सञ्जयः ॥ एवं पृष्टो भगवानाह ॥

कृष्णः ॥ काम्यानां कर्मणां स्वरूपत्यागं संन्यासं कवयः प्राहुः ॥ काम्यानां नित्यानां नैमित्तिकानां च कर्मणां फलमात्रपरित्यागं त्यागं विचक्षणाः प्राहुः ॥ विवादस्य भिन्नविषयत्वाभावेन संन्यासत्यागशब्दयोरेकार्थत्वावश्यंभावात्संन्यासत्यागशब्दयोरेकार्थत्वमङ्गीकृतमिति ज्ञायते ॥ एकार्थत्वादेव संन्यासस्य तत्वं त्यागस्य तत्वं च पृथक् वेदितुमिच्छामि इत्यर्थितेन मया पृथक् तयोः स्वरूपनिरूपणं न क्रियते॥ किंतु त्यागे निश्चयं शृण्वित्येकस्यैव ॥ स्पष्टमनयोः शब्दयोः पर्यायता च प्रदर्शयिष्यते ॥ 'नियतस्य तु संन्यासः' इत्यत्र 'अनिष्टमिष्टं मिश्रं चे'त्यत्र च ॥ अत्र द्वितीय एव पक्षोऽङ्गीकर्तव्यः ॥ मदीयनिश्चयानुसारित्वात् ॥ मदीयनिश्चयस्तु वक्ष्यते ॥ काम्यानि नित्यानि नैमित्तिकानि च सर्वाणि शास्त्रीयाणि कर्माणि बन्धकत्वदोषयुक्तत्वात् रागादिदोषा इव मुमुक्षुणा त्याज्यानीति एके मनीषिणः प्राहुः ॥ यज्ञदानतपःप्रभृतीनि नित्यानि नैमित्तिकानि काम्यानि च कर्माणि न त्याज्यानि॥ विहितत्वात्॥ विहितपरित्यागस्य अन्याय्यत्वात् ॥ विहितकर्मणां त्यागे तत्प्रतिपादकशास्त्रवैयर्थ्यापत्तेश्च ॥ इत्यपरे प्राहुः ॥ द्वयोरनयोः पक्षयोः परस्परविरुद्धत्वात् कः पक्षः उपादेय इति चेत् ॥ द्वितीयः पक्ष एवोपादेयः ॥ मदीयमतानुसारित्वात् ॥ मदीयस्तु पक्षो वक्ष्यते ॥ २ ॥ ३ ॥

अर्जुनः ॥ त्वदीयं निश्चयं ब्रूहि ॥

कृष्णः ॥ निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ॥

त्यागो हि पुरुषव्याघ्र त्रिविधस्संप्रकीर्तितः ॥ ४ ॥

निश्चयमिति ॥ भरतानां भरतेषु वा सत्तमः अतिशयेन सन् भरतसत्तमः हे

भरतसत्तम अर्जुन तत्र तस्मिन् त्यागे विषये मे मम निश्चयं शृणु ॥ पुरुषो व्याघ्र इव पुरुषव्याघ्रः हे पुरुषव्याघ्र मनुष्यश्रेष्ठ अर्जुन त्यागः तिस्रः विधाः प्रकाराः यस्य सः त्रिविधः संप्रकीर्तितः उक्तः ॥ हि प्रसिद्धम् ॥ ४ ॥

**हे पार्थ तत्र विप्रतिपन्ने त्यागे संन्यासत्यागशब्दवाच्ये मे निश्चयं शृणु ॥ किं त्वन्मुखतः श्रुत्वैव त्यागो निर्णेतव्य इति चेत् ॥ कर्माधिकारिकर्तृकः कर्मविधानस्थलेषु संन्यासत्यागशब्दाभ्यां उच्यमानः त्यागः सात्विकराजसतामसभेदेन त्रिविधः ॥ फलत्यागः मदीयफलसाधनतया मदीयमिदमिति ममतात्यागः कर्तृत्वाभिमानत्यागः इति च त्रिविधः ॥ प्रसिद्धमेतत् ॥ त्रिविधः समुदितोऽयं सात्विकः ॥**

**अ ॥ फलसहितकर्मत्यागः त्रिविधः फलरूपविशेषणत्यागात् कर्मरूपविशेष्यत्यागात् उभयत्यागाच्च ॥ तत्राद्यः सात्विक उपादेयः ॥ द्वितीयस्तु द्विविधः ॥ राजसः तामसश्चेति ॥ सात्विकादिभेदानां लक्षणं वक्ष्यते ॥ अविदुषः कर्माधिकृतस्य यः कर्मविषये संन्यासत्यागशब्दितः त्यागः सः सात्विकादिभेदेन त्रिविधः ॥ उभयत्यागरूपस्तृतीयस्तु द्विविधः ॥ विविदिषासंन्यासशब्दितः अङ्गन्यासः विद्वत्संन्यासशब्दितो ऽङ्गिसंन्यासश्चेति ॥ अतो दुर्विज्ञेयत्वात्तस्य त्यागस्य निश्चयं मत्तः शृणु ॥ अहं वक्ष्यामि ॥ महाकुलप्रसूतत्वेन मनुष्योत्तमत्वात्तत्वश्रवणयोग्योऽसि ॥ बाह्यान्तश्शत्रुनिबर्हणसमर्थत्वात् त्याग तत्वं श्रुत्वा त्याज्यत्यागत्यागपूर्वकं उपादेयत्यागोपादाने प्रवर्तितुमर्होऽसि ॥ ४ ॥**

अर्जुनः ॥ कोऽसौ तव निश्चयः वद ॥

कृष्णः ॥ यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ॥

**यज्ञो दानं तपश्चैव पावनानि मनीषिणां ॥ ५ ॥**

यज्ञेति ॥ यज्ञश्च दानं च तपश्च यज्ञदानतपांसि तद्रूपं कर्म न त्याज्यं तत् कार्यमेव ॥ यज्ञः दानं तपश्चैव मनीषिणां अशुद्धबुद्धीनां पावनानि बुद्धिशुद्धिकराणि॥५॥

**यज्ञदानतपःकर्म न त्याज्यं किंतु तत्कार्यमेव ॥ न त्याज्यमित्युक्त्यैव कार्यत्वलाभेऽपि दार्ढ्यार्थं कार्यमेव तदिति कंठत उक्तिः॥ कुतो यज्ञादीनि न त्याज्यानीति**

चेत् ॥ यज्ञो दानं तपश्च मनीषिणां १अशुद्धबुद्धीनां बुद्धिशुद्धिं कामयमानानां मुमुक्षूणां चित्तशुद्धिकराणि ॥ २मनीषिणां ज्ञानिनां मुक्तौ आनन्दातिशयहेतुभूतानि ॥ मनीषिणां बुद्धिमतां अन्तः सारासारविवेकादकृतफलाभिसन्धीनां चित्तशुद्धिकराणि ॥ मनीषिणां मननशब्दितोपासनशीलानां उपासननिष्पत्तिविरोधिप्राचीनकर्मनाशनानि ॥ मनस ईषिणाविति व्युत्पत्तिः ॥ यज्ञदानेति समासेन निर्देशः यज्ञदानादीनां सर्वेषामपि अत्याज्यत्वसूचनार्थः ॥ यज्ञो दानमिति व्यासेन निर्देशः यज्ञदानादीनामन्यतममपि अलमन्तःकरणशुद्धिजननाय ॥ किमुत समुदितानि तानीति सूचनार्थः ॥ यज्ञादीनि पावनान्येव यज्ञादीन्येव पावनानि अतस्तानि न त्याज्यानि किंतु कर्तव्यान्येव ॥ यस्मात् कार्याणि कर्तव्यत्वेन विहितानि तस्मात् न त्याज्यानीति वा ॥ अयं मम निश्चयः ॥ ५ ॥

अर्जुनः ॥ यज्ञादीनि पावनत्वान्न त्याज्यानि किंतु कर्तव्यानीत्युक्तम् ॥ यदि तानि स्वभावतः पावनानि स्युः तर्हि फलकामनया कृतान्यपि पावनान्येव स्युः ॥ किमर्थं तत्रतत्र फलत्यागविधानम्॥ उक्तं हि त्वया॥ ३'कर्मण्येवाधिकारस्ते मा फले' ष्विति ॥ ४'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वे'ति ५'युक्तः कर्मफलं त्यक्त्वे'ति ६'त्यक्त्वा कर्मफलासङ्ग'मिति ७'अनाश्रितः कर्मफल'मिति च ॥ कथमिदम् ॥ वद ॥

कृष्णः ॥ एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ॥
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥

एतानीति ॥ हे पार्थ एतान्यपि कर्माणि संगं फलानि च त्यक्त्वा कर्तव्यानि तु एव इति मे मम मतं अतः निश्चितं अतः उत्तमम् ॥ ६ ॥

हे पार्थ एतानि यज्ञदानतपोरूपाणि कर्माणि कर्तव्यानि ॥ कथं कर्तव्यानीति

---

१. मनीषा बुद्धिः इनिप्रत्ययो निन्दायां ॥ २. इनि प्रत्ययः प्रशंसायाम् ॥ भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ॥ संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः इत्यनुशासनात् ॥ ३. २. ४७. ४. २. ५१ ५. ५. १२. ६. ४. २०. ७. ६. १.

चेत् ममतारूपं कर्तृत्वाभिमानरूपं च सङ्गं फलानि च त्यक्त्वा कर्तव्यानि ॥ एतानि यद्यपि काम्यानि तथाऽपि कर्तव्यानि ॥ कर्तव्यत्वेन विहितत्वात् ॥ कर्तव्यत्वेन विहितान्यपि सङ्गं फलानि च त्यक्त्वैव कर्तव्यानि ॥ तुशब्दः सङ्गेन फलापेक्षया च कृतेभ्यः कर्मभ्यः सङ्गं फलापेक्षां च त्यक्त्वा कृतानां कर्मणां महान्तमतिशयं सूचयति ॥ काम्यान्यपि सङ्गं फलं च त्यक्त्वा कर्तव्यान्येव इति मतं मदीयम् ॥ अतो निश्चितं अत उत्तमम् ॥ काम्यान्यपि अकाम्यतामापाद्य कर्तव्यानि चित्तशुद्ध्यर्थम् ॥ किं पुनः नित्यनैमित्तिकानि ॥

अ ॥ कर्मत्वेन बन्धकान्यपि एतानि यज्ञादिरूपाणि नित्यनैमित्तिकान्येव सङ्गं फलानि च त्यक्त्वा कर्तव्यानि॥ इत्थं कृतानां कर्मणां बन्धकत्वाभावात् ॥ उक्तं हि मया ॥ १ ' यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ' इति ॥ न त्वपिशब्दात् काम्यानां ग्रहणम् ॥ काम्यानां निन्दितत्वेन तेषां कर्तव्यत्वेनोक्त्यनुपपत्तेः ॥ उक्तं हि मया ॥ २ ' कृपणाः फलहेतवः ' ३ ' अयुक्तः कामकारेण फले सक्तो निबध्यते ' इत्यादि ॥ इति मदीयं मतम् ॥ अतो निश्चितम् ॥ अत उत्तमम् ॥

नित्यानि नैमित्तिकानि काम्यानि च सङ्गं फलानि च त्यक्त्वा कर्तव्यानि ॥ नित्यनैमित्तिकानां अकाम्यानां फलाभावात् कथं तत्र फलानि त्यक्त्वेति ॥ न हि वन्ध्यायाः पुत्रत्यागोक्तिर्युक्ता इति चेत् ॥ नित्यनैमित्तिकानामपि फलमस्त्येव ॥ ४ ' सर्व एते पुण्यलोका भवन्ति ' ५ ' कर्मणा पितृलोकः ' ६ ' धर्मेण पापमपनुदती 'त्यादिश्रुतेः ॥ अतः फलं त्यक्त्वेति युक्तम् ॥ फलत्यागे निष्फलत्वात् कथमफलेषु तेषु प्रवृत्तिरिति चेत् ॥ अन्तःकरणशुद्ध्युत्पादनेन विविदिषाजननद्वारा ज्ञानरूपफलसद्भावात् सफलान्येव तानि ॥ कथं सफलत्वे अकाम्यत्वमिति चेत् ॥ फलसत्त्वेऽपि तदनपेक्षया अकाम्यत्वम् ॥ न हि काम्यानामकाम्यानां च फलसद्भावासद्भावाभ्यां भेदः किंतु फलापेक्षाभावाभावाभ्यामेव ॥ स्पष्टमुपपादितमिदं द्वितीये ॥ यद्यपि काम्यानि कर्माणि तथाऽनुष्ठितान्यपि चित्तशुद्धिमुत्पादयन्ति ॥ तथाऽपि न सा शुद्धिर्ज्ञानोपयोगिनी ॥ किंतु तत्तत्फलभोगोपयोगिनी ॥ ज्ञानोपयोगिनीं तु चित्तशुद्धिं फलसङ्गत्यागपूर्वकमनुष्ठितान्येव कर्माण्युत्पादयन्ति ॥ अतस्तदर्थानि तानि कर्माणि तथैवानुष्ठेयानीति मदीयं मतम् ॥ अतो निश्चितं अत उत्तमम् ॥

---

१. ३. ९. २. २. ४९. ३. ५. १२. ४. छां. २. २३. १. ५. बृ. १. ५. १६. ६. ना. ७९.

नित्यादीनां कर्मणां फलपरित्यागपूर्वकमनुष्ठानमेव कर्माधिकृतस्य तत्रतत्रोच्यमानः संन्यासः त्यागश्च न स्वरूपतस्त्याग इति निष्कर्षः ॥

वि ॥ नित्यनैमित्तिकानि काम्यानि च सङ्गं फलानि च त्यक्त्वा कर्तव्यानीति मदीयं मतं निश्चितं अत उत्तमम् ॥ अतस्तदेवोपादेयम् ॥ अतो वर्णाश्रमोचितं विहितं नित्यनैमित्तिकं काम्यं च सङ्गं फलं च त्यक्त्वा अवश्यं कर्तव्यम् ॥ अतस्त्वमपि तानि तथा कुरु ॥ ६ ॥

अर्जुनः ॥ यदि यज्ञादीनि कर्माणि पावनत्वादनुष्ठेयानि न त्याज्यानि तर्हि कुतः केचित् तानि त्यजन्ति ॥ ब्रूहि ॥

कृष्णः ॥ नियतस्य तु संन्यासः कर्मणो नोपपद्यते ॥
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥

नियतस्येति ॥ नियतस्य विहितस्य नित्यस्य वा कर्मणः संन्यासः नैव उपपद्यते युज्यते ॥ तुशब्द एवार्थे ॥ मोहात् विपरीतज्ञानात् तस्य कर्मणः परित्यागः तामसः त्यागः परिकीर्तितः उक्तः ॥ ७ ॥

तस्य कर्तव्यत्वेनोक्तस्य नित्यादेः कर्मणः यः त्यागः सः तमोगुणहेतुकविपरीतज्ञानमूलकः अतः सः तामसः त्यागः कर्तव्यानि कर्माणि बन्धकत्वेन त्याज्यानीति विपरीतज्ञानात् तामसाः त्यजन्ति कर्तव्यकर्मज्ञानाभावाद्वा त्यजन्ति ॥ तामसत्यागो द्विविधः ॥ विपरीतज्ञानमूलकः अज्ञानमूलकश्चेति ॥ अज्ञानविपरीतज्ञानयोरुभयोरपि तमोगुणकार्यत्वात् ॥ उक्तं हि मया ॥ १ 'प्रमादमोहौ तमसो भवतोऽज्ञानमेव च' इति ॥ तत्र अज्ञानमूलकत्यागापेक्षया विपरीतज्ञानमूलकत्यागो नितरां दोषाय ॥ भगवतो मातापित्रादीनां राज्ञश्च विषये यः अज्ञानकृतोऽनादरः तदपेक्षया तेषु विपरीतज्ञानकृतानादरस्य नितरां दोषावहत्वदर्शनात् ॥ कुत एवमज्ञानाद्विपरीतज्ञानाद्वा त्यजन्तीति वक्तव्यम् ॥ त्याज्यानीति सम्यक्ज्ञानादेव त्यजन्तीति कुतो न वाच्यमिति चेत् ॥ नियतस्य २ विहितस्य वर्णाश्रमोचितस्य नित्यस्य नैमित्तिकस्य काम्यस्य च कर्मणः

---

१. १४. १७. २. अ. नियतस्य इति केचित् ॥

स्वरूपतः परित्यागः नैव युक्तः ॥ कुत इति चेत् ॥ तत्प्रतिपादकशास्त्रवैयर्थ्यापातात् ॥ उपायाभावेन चित्तशुद्ध्यनुदयादिविविदिषाऽनुत्पत्त्या ज्ञानाद्यभावेन मोक्षाप्रसक्त्या मोक्षमार्गविलोपापाताच्च ॥ अतः त्याज्यानीति ज्ञानं विपरीतज्ञानमेव ॥ तस्य अनर्थावहत्वेन सत्वगुणमूलकसम्यग्ज्ञानत्वाभावात् ॥ तु शब्दः निषिद्धेभ्यः काम्येभ्यश्च विहितस्य अकाम्यत्वेन नित्यस्य विशेषद्योतकः ॥ नैवोपपद्यते इत्यवधारणार्थो वा ॥ अतः कर्तव्यं कर्म स्वरूपतो मा त्यज ॥ ७ ॥

कृष्णः ॥ दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ॥
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥

दुःखमिति ॥ दुःखं दुःखरूपं दुःखजनकं दुःखसाध्यं वा इति कायस्य देहस्य क्लेशः आयासः तस्मात् भयं कायक्लेशभयं तस्मात् कर्म त्यजेत् त्यजति इति यत् सः त्यागः राजसः त्यागः स तद्वान् पुरुषः राजसत्यागं कृत्वा त्यागस्य फलं त्यागफलं नैव लभेत् लभेत ॥ ८ ॥

धूमादिसहनेन तात्कालिकदुःखहेतुभूतं इति यत् कायक्लेशभयं शरीरास्वास्थ्यं जायेतेति भयं तस्मादेव द्रव्यव्ययसाध्यत्वेन द्रव्यव्ययमूलकमनोदुःखहेतुभूतमिति हेतोः यत् कायक्लेशभयं व्ययितद्रव्यसंपादनार्थं कायक्लेशो भवेदिति भयं तस्माच्चैव वा दुःखरूपद्रव्यार्जनादिसाध्यमिति हेतोः यत् शरीरायासभयं तस्माच्चैव वा राजसास्त्यजन्ति ॥ न तु मोहात् ॥ उक्तहेतुना कर्म त्यजतीति यत् सः राजसस्त्यागः स तद्वान् पुरुषः राजसं त्यागं कृत्वा त्यागस्य फलं नैव लभेत ॥ त्यागस्य कर्माधिकृतस्य कर्मयोगविधानोक्तिस्थलेषु संन्यासत्यागशब्दाभ्यामुच्यमानस्य सात्विकत्यागत्वेन वक्ष्यमाणस्य फलत्यागस्य फलत्यागपूर्वकमनुष्ठानस्येति यावत् ॥ फलं चित्तशुद्धिं तया च ज्ञानं तेन च मोक्षं न प्राप्नोति ॥ त्यागस्य ज्ञानपूर्वककर्मसंन्यासस्य फलं मोक्षं न प्राप्नोतीति वा किंतु विहिताकरणादनर्थमाप्नोति ॥ त्यागस्य वक्ष्यमाणस्य सात्विकत्यागस्य फलं मोक्षं पूर्वोक्तस्य तामसत्यागस्य फलं बलवदनिष्टरूपं च न प्राप्नोति ॥ सत्वगुणमूलकज्ञानादनुष्ठाने मोक्षः ॥ तमोगुणमूलकविपरीतज्ञानादननुष्ठाने महाननर्थः ॥ रजोगुणमूलकद्रव्यलोभशरीरानुरागादिनाऽननुष्ठाने तु न मोक्षः अननुष्ठा-

मात् ॥ न च महाननर्थः ॥ विपरीतज्ञानाभावात् ॥ किंतु विहिताकरणेन यदनिष्टं तदेव ॥ पूर्वोत्तरयोः तामससात्त्विकत्यागयोः तामसः सात्त्विकः इति स्वरूपमात्रोक्तिवत् अस्यापि राजसत्यागस्य राजसः इति स्वरूपमात्रे वक्तव्ये फलं न प्राप्नोतीति फलाभावोक्तिः किमर्थमिति चेत् ॥ सात्त्विकत्यागेन ज्ञानद्वारा मोक्षो भवतीत्यर्थस्य तामसत्यागेन नरकादिर्महाननर्थो भवतीत्यर्थस्य च स्पष्टत्वादनुक्तिः ॥ राजसत्यागे विपरीतज्ञानाभावेन सात्त्विकत्यागतुल्यता ॥ अननुष्ठानेन तामसत्यागतुल्यतायाश्च सत्त्वात् किं राजसत्यागस्य सात्त्विकत्यागफलं उत तामसत्यागफलं इति शङ्कोदयात् नास्य त्यागस्य पूर्वोत्तरयोस्त्यागयोः फलं किंतु विहिताकरणेन यावत् तावदेवेति वचनमावश्यकं अत एव मुक्तिः ॥ राजसतामसयोरालस्यादावेवानुप्रवेशात् कथं फले भेदः स्यात् इति चेत् तामसत्यागं कुर्वन् बन्धकत्वेन परलोकहानिः स्यादिति पारत्रिकदुःखभयात् त्यजति ॥ राजसत्यागं कुर्वन् पारत्रिकदुःखाभावं पारत्रिकसुखं च ज्ञात्वैव कायक्लेशादिरूपैहिकदुःखभयात् त्यजति ॥ अतो भेदः ॥ तामसत्यागं कुर्वन् कुतो न क्रियते इति पृष्टः किमर्थं कर्तव्यं बन्धकत्वेनाकर्तव्यत्वान्न क्रियत इति ब्रूयात् ॥ तेन इतरेऽपि त्यजेयुः ततश्च स्वयं पतन् इतरानपि पातयेत् ॥ राजसत्यागं कुर्वंस्तु अवश्यं कर्तव्यमेव शरीरास्वास्थ्यात् मया न क्रियते यूयं कुरुत इत्येव ब्रूयात्॥ ततश्च स्वयं पतन्नपि नेतरान् पातयेत् ॥ अतस्तामसत्यागाद्राजसत्यागः श्रेयान्॥ अन्धादेकचक्षुरिव [१]मूकाल्लोहल इव ॥ अतः कर्तव्यत्वं ज्ञात्वाऽपि कायक्लेशभयादिना यस्त्यागः तमपि मा कुरु ॥ ८ ॥

अर्जुनः ॥ कुतः केचिद्यज्ञादीनि कर्माणि कुर्वन्ति ॥

कृष्णः ॥ कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ॥

सङ्गं त्यक्त्वा फलं चैव स त्यागस्सात्त्विको मतः ॥ ९ ॥

**कार्यमिति ॥** हे अर्जुन नियतं विहितं नित्यं वा कर्म कार्यं इत्येव सङ्गं फलं चैव त्यक्त्वा क्रियते इति यत् सः त्यागः सात्त्विकः मतः मम संमतः ॥ स एवेति वा ॥ ९ ॥

---

१. लोहलः अस्फुटवाक् ॥ लोहलः स्यादस्फुटवागित्यमरः ॥

नित्यादिकं वर्णाश्रमोचितं विहितं कर्म सङ्गं फलं च त्यक्त्वा कार्यमेव इति सम्यग्ज्ञानात् सात्विकाः कुर्वन्ति ॥ सङ्गं फलं च त्यक्त्वा नियतं कर्म कार्यमेवेति ज्ञात्वा क्रियते इति यत् स एव त्यागः क्रियमाणे विहिते कर्मणि १ फलत्यागः सात्विकः त्यागः ॥ स एव मम संमतः ॥ अयमेव त्यागः 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ॥ कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तम'मिति स्वमतत्वेनोक्तः ॥ २'करोमि कर्म शुक्लं च तेन मामर्जुनं विदु'रित्युक्तरीत्या विशुद्धकर्मकारित्वादर्जुनशब्दवाच्यस्य तव सात्विकत्याग एव युक्तः ॥ अतस्त्वमिममेव सात्विकत्यागं कुरु ॥ सङ्गफलत्यागपूर्वकं विहितं कर्म कुर्विति यावत् ॥ ९. ॥

द्वै ॥ सञ्जयः ॥ एवं संन्यासत्यागशब्दवाच्ये त्यागे वक्तव्यमुक्त्वा स्वानभिमतौ राजसतामसत्यागौ स्वाभिमतं सात्विकत्यागं चोक्त्वा तत्र रुच्युत्पादनाय सात्विकत्यागिनो लक्षणमाह भगवान् ॥

कृष्णः ॥ न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ॥
त्यागी सत्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥

नेति ॥ सम्यक् आविष्टः समाविष्टः सत्वेन समाविष्टः मेधा अस्यास्तीति मेधावी छिन्नाः संशयाः यस्य सः छिन्नसंशयः न कुशलं अकुशलं दुःखदं कर्म न द्वेष्टि कुशले कर्मफले नानुषज्जते इच्छां न करोति एतादृशः त्यागः अस्यास्तीति त्यागी ॥ यः सात्विकत्यागी सः सत्वेन अन्तःकरणशुद्ध्या संस्कारेण वा समाविष्टः मेधावी छिन्नसंशयः सन् अकुशलं काम्यं निषिद्धं च कर्म न द्वेष्टि कुशले अकाम्ये विहिते कर्मणि नानुषज्जते ॥

---

१. कर्मसंन्यासास्त्रयः तेषु द्वौ कर्मत्यागौ एकः फलत्यागः इति कथम् ॥ त्रयाणां सजातीयत्वावश्यंभावात् ॥ न हि त्रयो ब्राह्मणाः भोजयितव्याः तेषु द्वौ कठकौण्डिन्यौ तृतीयस्तु क्षत्रियः इति युज्यते ॥ इति चेत् ॥ अज्ञकृतफलत्यागो विद्वत्कृतकर्मत्यागसाम्यबोधनेन स्तुत्यर्थं तृतीयकर्मत्यागत्वेनोच्यते इत्यदोषः ॥ राजभिन्नोऽपि राजसमश्चेत् राजपंक्तौ निवेश्यते हि लोके ॥ २ भार वि ४३ अ.

सत्वसमाविष्टः मेधावी छिन्नसंशयः त्यागी अकुशलं पापं कर्म न द्वेष्टि ॥ कुशले स्वर्गादिफलके कर्मणि नानुषज्जते ॥ १० ॥

सम्यक् सत्वगुणेन व्याप्तः अतः मेधाशब्दितभगवद्विषयकतत्वज्ञानवान् अतः उक्तज्ञानेन छिन्नसंशयः भगवद्विषये तत्प्रीत्येकोद्देश्यककर्मविषये च संशयरहितः अतः कायक्लेशदुःखदं कर्म न द्वेष्टि ॥ कर्मफले नानुषज्जते इच्छां न करोति ॥ एतादृशः त्यागी सात्विकत्यागवान् ॥ भगवत्तत्वयाथात्म्यज्ञानपूर्वकं सङ्गत्यागेन फलानपेक्षया च कायक्लेशदुःखप्रदमपि विहितं कर्म भगवदर्पणबुध्या कुर्वन् सात्विकत्यागी भवति ॥ १० ॥

अ ॥ सञ्जयः ॥ सात्विकत्यागे रुच्युत्पादनाय सात्विकत्यागस्य फलमाह भगवान् ॥

कृष्णः ॥ यः त्यागी सात्विकत्यागी कर्मफलत्यागी सङ्गफलत्यागपूर्वकविहितकर्मकृदितियावत् ॥ सः तेन कर्मणा सत्वशब्दितान्तःकरणशुद्धियुक्तः ॥ [1] सत्वेन सम्यग्ज्ञानप्रतिबन्धकरजस्तमोमलापकर्षलक्षणेन तत्वज्ञानोत्पत्तियोग्यतापादनलक्षणेन च संस्कारेण समाविष्टः संस्कृतान्तःकरणो वा ॥ तेन मेधावी श्रवणशब्दितवेदान्तवाक्यविचारजन्यं तत्वमस्यादिमहावाक्यार्थज्ञानकरणकं अहं ब्रह्मास्मीति ब्रह्मात्मैक्यज्ञानं मेधा तया नित्ययुक्तः नित्ययोगे विनिः॥ तेन छिन्नसंशयः सञ्चितागामिवर्तमानसर्वकर्मभिर्मम लेपोऽस्ति वा न वा कर्तृत्वभोक्तृत्वादिलक्षणः संसार आत्मनो वाऽनात्मनो वा मोक्षकारणं योगो वा उपास्तिर्वा कर्म वा ज्ञानं वा तन्निष्ठा वा॥ मोक्षः सालोक्यादिर्वा निर्गुणब्रह्मात्मनाऽवस्थानलक्षणो वा अन्यो वा इत्येवमादिसर्वसंशयहीनः ॥ तेन च अकुशलं मोक्षप्रतिबन्धकं काम्यं निषिद्धं च कर्म न द्वेष्टि ॥ कुशले मोक्षसाधने यज्ञादिरूपे नित्यादौ कर्मणि प्रीतिं न करोति॥ 'दोषबुध्योभयातीतो निषिद्धान्न निवर्तते ॥ गुणबुध्या च विहितं न करोति यथाऽर्भकः'॥ इत्यु-

---

१. सः तु असमाविष्टः इति छेदः ॥ त्यागी सात्विकत्यागी तु असमे अशदृशे निरतिशयानन्दरूपे फले आविष्टः इच्छावान् अकुशलं अविवेकिनं जनं शिष्यादिकं न द्वेष्टि ॥ कर्मकुशले इत्येकं पदम् ॥ कर्मकुशले सेवादिरूपकर्मकुशले शिष्यादिजने नानुषज्जते इति केचित् ॥

कर्तोत्या कुशलमकुशलं च सर्वं कर्म संन्यस्यति ॥ १ 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' ॥ इति श्रुतिः ॥ विविदिषासंन्यासं विद्वत्संन्यासं च प्राप्नोति ॥ ततो ब्रह्मात्मना तिष्ठति ॥ सात्विकत्यागस्य उक्तक्रमेण ब्रह्मात्मनाऽवस्थानलक्षणो मोक्षः २ फलम् ॥ अतस्तदर्थिभिः सात्विक एव त्यागः कर्तव्यः ॥ १० ॥

वि ॥ सञ्जयः ॥ रुच्युत्पादनाय सात्विकत्यागिनो लक्षणमाह ॥

कृष्णः ॥ सत्वगुणसमाविष्टः मेधावी यथाऽवस्थितवस्तुतत्वज्ञानवान् तेन छिन्नसंशयः कर्मणि सङ्गफलकर्तृत्वत्यागी अनिष्टनरकादिफलकं पापं कर्म न द्वेष्टि ॥ इष्टस्वर्गपुत्रपश्वादिफलके कर्मणि न प्रीतिं करोति ॥ सङ्गफलकर्तृत्वत्यागात् ॥ कथमिष्टसाधनेऽनिष्टसाधने च कर्मणि रागद्वेषौ न स्यातां इति चेत् ॥ ममताभावाद्रागद्वेषौ न भवतः ॥ स्पष्टं हि लोके अन्यदीये अन्यकर्तृके कर्मणि स्वसंबन्धविरहात् साधकबाधकाभावनिश्चयेन रागद्वेषाभावो दृश्यते ॥ त्यागी मेधावी कुशले नानुषज्जेत ॥ कथमकुशलं न द्विष्यात् ॥ यदि न द्विष्यात् तर्हि कुर्यात् ॥ यदि कुर्यात् तर्हि तत्फलमनुभवेत् ॥ न च यथा काम्यस्यानुष्ठानेऽपि तत्फलस्यानपेक्षया अनन्वयः तथा अकुशलकर्मानुष्ठानेऽपि तत्फलस्य नरकादेरनपेक्षयाऽनन्वयः इति युक्तम्॥ क्वचिदपि कस्यापि प्रत्यवायाभावप्रसङ्गात् ॥ न हि नरकादिकमपेक्षते कोऽपि ॥ ततश्च नरकाद्यनिष्टफलकनिषिद्धकर्मणां निषेधा व्यर्थाः स्युः ॥ करणेऽपि अनपेक्षामात्रेण फलानन्वयसंभवात् ॥ अतो यद्यकुशलं कर्म कुर्यात् तर्हि तत्फलमनुभवेदेव ॥ न च तद्युक्तं सात्विकत्यागिनः ॥ अतः कथमिदमिति चेत् अकुशलं द्विष्यादेव न कुर्यादेव किंतु प्रामादिकमकुशलं न द्वेष्टि ॥ प्रमादादकुशलं करोति चेत् करोतु ॥ उक्तसात्विकत्यागप्रभावात् प्रमादादापतितमकुशलं कर्म न फलाय कल्पते अतः अकुशलं कर्म न द्वेष्टीति युक्तमेव ॥ १० ॥

द्वै ॥ अर्जुनः ॥ कर्मयोगविधानप्रकरणे संन्यासत्यागशब्दाभ्यां उच्यमानः त्यागः फलत्याग एव स एव सात्विकः स एव मम संमत इत्युक्तं कुत एवम् ॥ कर्मणां

---

१. मुं. ३. ८. २. लक्षणमाह ॥ अकुशलं दुःखावहं कुशलं सुखावहम् ॥ सत्वगुणेन समाविष्टः मेधावी स्थिरबुद्धिः अतः छिन्नसंशयः त्यागी भवति ॥ इति केचित् ॥

बन्धकत्वात् स्वरूपतस्त्याग एव कर्तव्यतया त्यागसंन्यासशब्दाभ्यामुच्यते ॥ तथाच त्यागः कर्मत्याग एव इति कुतो न वाच्यं ब्रूहि ॥

कृष्णः ॥ न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ॥
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

नहीति ॥ हि यस्मात् देहं बिभर्तीति देहभृत् तेन देहभृता अशेषतः अशेषाणि सर्वाणि कर्माणि त्यक्तुं न शक्यं अतः यस्तु कर्मणः फलं कर्मफलं त्यजतीति कर्मफलत्यागी स तु स एव त्यागी इति अभिधीयते उच्यते ॥ ११ ॥

देहभृता देहभरणोपयुक्तानि करचरणादिचेष्टादिरूपाणि कर्माणि निःशेषं त्यक्तुं न शक्यानि देहभरणानुपपत्तेः ॥ विहितानि यज्ञादीन्यपि न त्यक्तुं शक्यानि ॥ विहितपरित्यागस्य अनर्थहेतुत्वात् ॥ ज्ञानद्वारा मोक्षसाधनभूतानां तेषां करणायैव भगवता १दत्तं देहं बिभ्रतः तत्त्यागस्य अन्याय्यत्वाच्च ॥ अतः कर्तव्यानि कर्माणि कर्तव्यान्येव ॥ तर्हि त्यागोक्तिः कथमिति चेत् त्यागः क्रियमाणे विहिते कर्मणि फलत्याग एव ॥ न च कर्मणां बन्धकत्वादकर्तव्यत्वं शंक्यम् ॥ फलपरित्यागे बन्धकत्वाभावात् ॥ उक्तं हि मया ॥ २'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥ जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्' ॥ ३'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' ॥ ४'युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीं' ॥ इत्यादि ॥ त्यागोक्तिप्रकरणे अस्मिन् 'यस्तु कर्मफलत्यागः स त्याग इत्यभिधीयते' इति त्यागे वक्तव्ये कुतस्त्यागीत्युच्यते इति चेत् त्यागो धर्मः धर्मस्य उचितत्वानुचितत्वविवेचनं तु धर्मिणो योग्यतामनुसृत्य करणीयम् ॥ अतः धर्मिणो देहभृत्वात्तद्योग्यतानुसारेण फलत्याग एव त्यागो वाच्यः न कर्मत्याग इति बोधयितुं त्यागवत उक्तिः ॥ तुशब्दो

१. अत्र, जीवानां दृषदादिमत्त्वमयतां स्वर्गापवर्गावहं देहं दत्तवति श्रियः प्रियतमे नैवोपकारस्मृतिः ॥ दुःखे जातुचिदागते स्वकलितादुष्कर्मणः पाक्रमात् नाथे हन्त निरागसि व्यसनिभिर्नैर्घृण्यमारोप्यते ' ॥ १ ॥ 'क्लेशत्यागकृतेऽर्पितेन करणव्यूहेन देहेन च स्वानर्थं बत जन्तुरार्जयति चेन्मन्तुर्नियन्तुः कुतः॥ शस्त्रं शत्रुजयाय नैजगुरुणा दत्तेऽथ तेनैव चेत् पुत्रो हन्ति निजं वपुः कथय रे तत्रापराधी तु कः' ॥ २ ॥ 'अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा ॥ करणकलेबरयोगं वितरसि वृषशैलनाथकरुणे त्वं ' ॥ इत्यादयः श्लोका अनुसन्धेयाः॥ २. २. ५१. ३. ३, ९. ४. ५. १२.

वैशिष्ट्यद्योतकः ॥ स एव त्यागीत्यवधारणार्थो वा ॥ अतः कर्मविच्छुद्देश्यभूतपुरुषयोग्यतानुसारेण फलत्याग एव त्यागो वाच्यः ॥ न कर्मत्यागः ॥ अत उक्तं युक्तम् ॥ ११ ॥

अ ॥ अर्जुनः ॥ यः सात्त्विकत्यागी सः कर्मेण सत्त्वसमाविष्टः मेधावी छिन्नसंशयश्च सन् ' न द्वेष्टी 'त्यादिनोक्तः सर्वकर्मसंन्यासेऽधिकारीतीत्युक्तं तेन अविदुषः फलत्यागः विदुषस्तु कर्मत्याग इत्युक्तं भवति ॥ कुत एवं अविदुषः कर्मत्याग एवास्तु कर्मत्यागे विद्यासंपादनसौकर्यलाभात् ॥ ब्रूहि ॥

कृष्णः ॥ देहं असत्यमपि सत्यतया स्वभिन्नमपि स्वाभिन्नतया पश्यन् यो धारयति पोषयति च तस्य न सर्वकर्मसंन्यासेऽधिकारः ॥ सर्वाणि कर्माणि तेन त्यक्तुं न [1]शक्यं न शक्यानि ॥ अकर्त्रात्मज्ञानाभावात् ॥ कर्माधिकारहेतुभूतरागद्वेषादिमत्त्वाच्च ॥ अतस्तस्य कर्मण्येवाधिकारः ॥ त्यागोक्तिस्तु फलत्यागविषया ॥ विदुष एव कर्मसंन्यासे अधिकारः ॥ अकर्त्रात्मविज्ञानात् ॥ कर्माचरणहेतुभूतरागद्वेषाद्यभावाच्च ॥ अतो विद्वानेव संन्यासेऽधिकारीत्युक्तम् ॥ यद्यविदुषः कर्मसंन्यासो न स्यात् तर्हि स कथं संन्यासीत्युच्यते [2] ' ज्ञेयस्स नित्यसंन्यासी ' [3] ' स संन्यासी च ' त्यादाविति चेत् यः कर्मफलत्यागी सः कर्मत्यागी इत्युच्यते ॥ विद्वत्संन्यासशब्दितकर्मत्यागवत्सादृश्यबोधनेन स्तुत्यर्थं तथोच्यते ॥ न संन्यासीत्युक्तिमात्रेण तस्य संन्यासवत्त्वं वाच्यम् ॥ कर्माधिकारित्वेन संन्यासवत्त्वाभावात् ॥ किंतु सादृश्योक्त्यास्तुतौ पर्यवसानम् ॥ चन्द्राभिन्ने मुखे चन्द्रत्वोक्त्या चन्द्रत्वं न बोध्यते किंतु चन्द्रसादृश्योक्त्या स्तुतौ पर्यवसानमिति प्रसिद्धं हि लोके ॥ अत उक्तं युक्तम् ॥

अर्जुनः ॥ सात्त्विकत्याग एव कर्मत्याग इत्युक्त्वा सात्त्विकत्यागवानेव कर्मसंन्यासीत्युक्तं भवति ॥ तत्कथं तामसराजसत्यागवतोरपि कर्मसंन्यासित्वात् ॥ न हि तामसत्यागी राजसत्यागी च कर्म करोति ॥ वद ॥

कृष्णः ॥ तामसत्यागवतः राजसत्यागवतश्च त्यक्तं मया कर्मेति कर्मत्यागाभासमात्रम् ॥ न तु कर्मत्यागः ॥ बुद्धिपूर्वकमबुद्धिपूर्वकं वा तयोः कर्माचरणस्य सत्त्वात् ॥ कुतस्तयोः कर्माचरणमङ्गीकर्तव्यमिति चेत् ॥ न हि देहभृता अशेषतः

---

१. शक्यमितिभावे ॥ भावस्यैकत्वादेकवचनम् ॥ २. ५. ३. ३. ६.

कर्माणि त्यक्तुं शक्यम् ॥ अतः आपातदृष्ट्या कर्मत्यागिनावपि तौ न कर्मसंन्यासिनौ॥ किंतु कर्मिणौ ॥ यः सात्विकत्यागवान् सः आपाततः कर्म्यपि कर्मसंन्यासी इत्युच्यते॥ तत्तुल्यत्वात् ॥ क्रमेण तस्य कर्मसंन्याससंभवाच्च इति च ॥ ११ ॥

वि ॥ अर्जुनः ॥ १'त्यागेनैके अमृतत्वमानशुः' २'संन्यासयोगाद्यतयः शुद्धसत्वाः' इत्यादौ संन्यासत्यागशब्दाभ्यां उच्यमानः त्यागः फलत्याग एव न कर्मत्याग इत्युक्त्वा कुत इति चेत् ३ 'नियतस्य तु संन्यासः कर्मणो नोपपद्यते' इति युक्तिश्चोक्ता ॥ कुतो नियतस्य संन्यासो नोपपद्यते ॥ फलापेक्षाभावान्नियतस्यापि संन्यास उपपद्यत एव ॥ ब्रूहि ॥

कृष्णः ॥ 'शरीरमाद्यं खलु धर्मसाधनं' इत्याद्युक्तन्यायेन मुमुक्षोरधिकारिणः शरीरधारणं तावदावश्यकम् ॥ न चाशनपानादिकं विना शरीरधारणं संभवति ॥ अतो देहधारणार्थमशनपानादिकर्मकरणमावश्यकम् ॥ न चाशनपानादिकं द्रव्यं विना संभवति ॥ अतो धनार्जनादिकमपि कर्तव्यम् ॥ संपाद्य धनमशनपानादिकं क्रियताम् किं यज्ञादिकरणनिर्बन्धेनेति चेत् ॥ पञ्चमहायज्ञादिशिष्टाशनादिनैव मुमुक्षुणा शरीरधारणस्य कर्तव्यत्वात्॥ न च यज्ञादिकरणं विनाऽधिकधनार्जनं संभवति॥ तच्च नान्यायेन कार्यम् ॥ किंतु स्ववर्णाश्रमोचितविहितकर्तव्यकर्मणैव कार्यम् ॥ अतो मुमुक्षुणा देहभृता देहधारणार्थानामवश्यकर्तव्यत्वात् नाशेषतः कर्माणि त्यक्तुं शक्यानि ॥ देहधारणस्य यज्ञशिष्टाशनेनैव कर्तव्यत्वात् यज्ञानां च धनार्जनैकसाध्यत्वात् धनार्जनस्य न्यायेनैव कर्तव्यत्वात् न्यायतो धनार्जनाय विहितकर्माण्यपि कर्तव्यान्येव ॥ अतो न तस्य कर्मत्यागः संभवति ॥ तस्मान्मुमुक्षोः कर्मत्यागः फलत्याग एव ॥ अत उक्तं युक्तम् ॥ उक्तं चेदं मया ॥ ४'शरीरयात्रापि च ते न प्रसिध्येदकर्मणः' ५'यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥ भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्' ६'यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातन'मिति ॥ ११ ॥

द्व ॥ सञ्जयः ॥ मुमुक्षोः कर्तव्यत्वेनोक्तं फलत्यागं करणाकरणयोः अर्थानर्थोक्त्या स्तुवन्नुपसंहरति भगवान् ॥

---

१. २. ना. १२. ३. ३. १८. ७. ४. ३ ८. ५. ३. १३. ६. ४. ३१.

कृष्णः ॥ अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ॥
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥

अनिष्टमिति ॥ न त्यागिनः अत्यागिनः तेषां न इष्टं अनिष्टं इष्टं मिश्रं च इति तिस्रः विधाः प्रकाराः यस्य तत् त्रिविधं कर्मणः फलं प्रेत्य मरणानन्तरं भवति संन्यासः एषामस्तीति संन्यासिनः तेषां तु क्वचिदपि न भवति ॥१२॥

ये अत्यागिनः क्रियमाणे कर्मणि फलत्यागरहिताः फलापेक्षयाविहितं कर्म कुर्वाणाः तेषां अनिष्टं नरकादि इष्टं स्वर्गादि मिश्रं सुखदुःखमिश्रं मनुष्यत्वादि इत्येवं त्रिविधं कर्मणः फलं प्रेत्य मरणानन्तरं भवति ॥ प्रेत्येत्युपलक्षणं उत्तरत्र क्वचिदित्युक्त्यनुरोधात् ॥ यथा संभवं इह परत्र वा भवति ॥ कारीरीष्टिफलस्य वृष्टिरूपस्य इहैव भवनमनुभवसिद्धम् ॥ संन्यासिनां संन्यासत्यागयोः त्यागांशसाम्यात् फलत्यागिनां फलानपेक्षया विहितं कर्म कुर्वतां तु उक्तं त्रिविधं फलं क्वचिदपि इह परत्र वा न भवति॥ किंतु कृतं कर्म ज्ञानद्वारा मोक्षायैव भवति॥ काम्यं कर्म कुर्वतां स्वकृतकर्मोद्दिश्यभूतं स्वर्गादिरूपं पुत्रपश्वादिरूपं च फलं जायेत ॥ नरकादिकमनिष्टं फलं कथं जायेत ॥ न हि नरकादिरूपं फलमुद्दिश्य कर्म कृतवन्तस्ते इति चेत् ॥ स्वर्गाद्युद्देशेन क्रियमाणानां कर्मणां रागद्वेषपूर्वकत्वात् रागद्वेषयोश्च १'ध्यायतोविषयान्' इत्याद्युक्तरीत्या नरकाद्यनर्थहेतुत्वात् काम्यं कर्म कुर्वतां अनपेक्षितमपि नरकादिरूपमनिष्टं फलं जायेतैव ॥ तत्तत्फलकामनया काम्यकर्म कुर्वतां रागद्वेषादिमत्वेन पापपुण्यमिश्ररूपत्रिविधकर्मसंभवात् पुण्येन स्वर्गादिकं पापेन नरकादिकं मिश्रेण मनुष्यत्वादिकं इति वा त्रिविधफलसंभवो बोध्यः॥ तुशब्दो विशेषद्योतकः ॥ नैव भवतीत्यवधारणार्थो वा ॥ २'काम्यानां कर्मणां न्यास 'मित्युक्तरीत्या वैकल्पिककाम्यानां फलत्यागः नियतकाम्यानां स्वरूपत्यागश्च संन्यासः उभयेषामपि काम्यानां फलत्यागः त्यागः इति संन्यासत्यागयोर्भेदसत्वात् कथमत्यागिनामित्यस्य प्रतिनिर्देश्यतया संन्यासिनामित्युक्तिस्संगच्छते ॥ त्यागिनामिति वक्तुं युक्तमिति चेत् ॥ अवांतरविशेषविवक्षया अर्थभेदसत्वेऽपि त्यागांशस्य उभयत्र सत्वादैक्यसत्वेन संन्यासिनामित्युक्तिः ॥ एवं समाधानकरणादपि वरं 'त्यागिनां नैव तु क्वचि'दित्युक्तिरिति

---

१. २. ६२. २. १८. २.

चेत् ॥ त्यागिनः फलं त्यक्त्वा परार्थं नियतकाम्यानि कुर्युः ॥ संन्यासिनस्तु परार्थमपि न तानि कुर्युः इति त्यागिभ्यो संन्यासिनां वैशिष्ट्यं द्योतयितुं संन्यासिनामित्युक्तिः ॥ 'नैव तु त्यागिनां क्वचि'दित्युक्तौ त्यागस्तुत्या त्यागस्य कर्तव्यत्वं प्रतीयेत ॥ ततश्च नियतकाम्यानां फलानपेक्ष्य परार्थमनुष्ठानस्यापि त्यागत्वात् तेषां तथाऽनुष्ठाने प्रवर्तेरन् ॥ संन्यासिनामित्युक्तौ संन्यासस्तुत्या संन्यासस्य कर्तव्यत्वं प्रतीयेत ॥ ततश्च नियतकाम्यानां स्वरूपतस्त्यागस्यैव संन्यासत्वात् न कथमपि तेषां करणे कदाऽपि प्रवर्तेरन्॥ अतः संन्यासिनामित्युक्तिः॥ संन्यासिनां इष्टं न भवतीति कथमुच्यते ॥ इष्टस्य ज्ञानादेः फलस्य नियमेन संभवात् ॥ न च भगवत्प्रीत्युद्देशेन कृतमकाम्यं कर्म निष्फलं भवितुमर्हति ॥ अतः कथमिदमिति चेत् ॥ अन्येषामिष्टं स्वर्गादि संन्यासिनो न भवतीत्यभिप्रायाभ्युपगमे इष्टं न भवतीत्येतदुपपद्यते ॥ अतो नित्यनैमित्तिकान्यनुष्ठेयानि वैकल्पिककाम्यानि तु फलं त्यक्त्वाऽनुष्ठेयानि । इत्ययं कर्मयोगतत्त्वनिष्कर्षः ॥ १२ ॥

अ ॥ अर्जुनः ॥ फलत्यागरूपस्य सात्विकत्यागशब्दितस्य गौणसंन्यासस्य विद्वत्संन्यासशब्दितमुख्यसंन्याससाम्ये उभयोर्विकल्पः स्यात् ॥ गौणो वा मुख्यो वा संन्यास एष्टव्य इति ॥ ततश्च १ 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' ॥ २ 'योगसंन्यस्तकर्माणम्' ३ 'ज्ञानाग्निदग्धकर्माणं' ४ 'सर्वकर्माणि मनसा संन्यस्य' ५ 'न द्वेष्ट्यकुशलं कर्म' इत्यादिभिर्मुख्यसंन्यासस्य आवश्यकताप्रतिपादनमनावश्यकं स्यात् ॥ त्यागांशस्य उभयत्र सत्त्वेन साम्येऽपि फले विशेषसत्त्वान्मुख्यसंन्यास आवश्यक इति चेत् कोऽसौ फले विशेषः ॥ ब्रूहि ॥

कृष्णः ॥ अत्यागिनां त्यागशब्दितकर्मपरित्यागरहितानां फलत्यागेन कर्म कुर्वतां सात्विकत्यागशब्दितगौणसंन्यासवतां अनिष्टमिष्टं मिश्रं च इत्येवं त्रिविधं कर्मणः फलं प्रेत्य भवति ॥ मुख्यसंन्यासिनां तु नैव तत् भवति ॥ अतो गौणमुख्यसंन्यासयोः महान् फले भेदः ॥ सात्विकत्यागवतां यत्कर्म तस्य अकाम्यत्वेन ज्ञानकोटावनुप्रवेशात् कथं तस्य अनिष्टादित्रिविधफलोत्पादकत्वमिति चेत् न कर्मण इति मदीयमकाम्यं कर्म गृह्यते ॥ किंतु तदीयं पूर्वार्जितं कर्म गृह्यते ॥ तत्संबंधि तद्धेतुकम्॥

---

१. ४ ३३. २ ४ ४१. ३ ४. १९ ४ ९ १३ ५ १८. १०.

कर्मण इति पञ्चमो पूर्वार्जितकर्मरूपनिमित्तेनेति वा ॥ फलं नारकितिर्यगादिलक्षणं देवादिलक्षणं मनुष्यलक्षणं च शरीरं फल्गुतया लीयते अदर्शनं गच्छतीति निरुक्तिः ॥ एतद्देहपातादूर्ध्वं भवति ॥ मुख्यसंन्यासिनां तु शरीरग्रहणं न भवति ॥ ज्ञानादज्ञाननिवृत्तौ तत्कार्याणां शरीरान्तरारम्भकाणां कर्मणां सर्वथानाशात् ॥ १ भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' ॥ इति श्रुतिः ॥ सूत्रं च ॥ २ 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशा' दिति ॥ संसारी असंसारीति द्वौ ॥ मुख्यसंन्यासी असंसारी ॥ तद्रहितस्संसारी ॥ स त्रिविधः ॥ तत्रैकः काम्यनिषिद्धादिकर्मकारी शास्त्रानधिकारी ॥ द्वितीयस्तु फलपरित्यागेन विहितकर्मकारी शास्त्राधिकारी गौणसंन्यासी ॥ तृतीयस्तु अकाम्यकर्मकरणादन्तःकरणशुद्ध्या संजातविविदिषः शास्त्राधिकारी श्रवणादिना ज्ञानसंपिपादयिषया त्यक्तसर्वकर्मकलापो विविदिषासंन्यासी ॥ आद्यस्य संसारः प्रसिद्धः ॥ द्वितीयस्य अत्रोक्तः ॥ तृतीयस्य तु ३ 'अयतिः श्रद्धयोपेत' इत्यादिना ४ 'ध्रियते ह्यवशोऽपि सः' इत्यन्तेन निरूपितः षष्ठे ॥ आद्यस्य शरीरग्रहणं न्याय्यम् ॥ द्वितीयतृतीययोस्तु कथमिति चेत् ॥ अकाम्यं कर्म चित्तशुद्ध्यर्थं कुर्वतः अन्तराले कर्मनिष्पत्तेः पूर्वं मृतस्य द्वितीयस्य पूर्वार्जितकर्मानुगुणशरीरग्रहणमवर्जनीयम् ॥ तृतीयस्यतु विविदिषासंन्यासिनः श्रवणादिकं कुर्वतः अन्तराले मृतस्य ५ 'यतते च ततो भूयः संसिद्धौ कुरुनन्दन' इत्युक्तरीत्या भूयःसंसिध्यर्थं शरीरग्रहणमवश्यंभावि ॥ एवं फले महतो विशेषस्य सत्वात् मुख्यः संन्यास आवश्यकः ॥ गौणोऽपि संन्यासः मुख्यसंन्यासार्थमावश्यकः ॥ अतः अङ्गाङ्गिभावेन उभावप्यावश्यकौ ॥ इदमेवोक्तं 'न द्वेष्ट्यकुशलं कर्म' इत्यत्र ॥ ६ 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' ॥ योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छती' ति पञ्चमे च ॥ तस्मादुक्तं सर्वं सुस्थम् ॥

अत्यागिनां फलत्यागमकुर्वतां काम्यं कर्म कुर्वतां त्रिविधं फलं भवति ॥ संन्यासिनां साहचर्यात् संन्यासशब्दितफलत्यागवतां अकाम्यं कर्म कुर्वतां तु नैव तद्भवति ॥ अतः सात्विकत्यागस्य महाफलत्वात् स एव कार्यः ७ इति वा ॥

१. मुं ३. २. ८. २. ४. १. १३. ३. ६. ३७. ४. ६. ४४. ५. ६. ४३. ६. ५. ६. ७. एवं न व्याख्यातव्यम् ॥ संन्यासशब्दस्य मुख्यार्थसंभवे तत्त्यागायोगात् ॥ सात्विकत्यागवतां त्रिविधफलभ्रातः सयुक्तिकमुपपादितत्वेन तेषां तदभावो कैरयुक्तत्वाच्च ॥ इति केचित् ॥

त्यागः सात्विकत्यागः तद्रहितानां तामसराजसत्यागौ कुर्वतां वाचा त्यागेऽपि क्रियया कर्मिणां त्रिविधं कर्मणः फलं भवति ॥ संन्यासिनां तु सात्विकत्यागहेतुकमुख्यसंन्यासवतां तु नैव तद्भवति ॥ किंतु विदेहमुक्तिरेव भवति ॥ अतः परमार्थसंन्यासहेतुभूतस्सात्विकत्याग एव त्यागः ॥ स एवोपादेयः ॥ इति वा ॥

वि ॥ अर्जुनः॥ सङ्गफलत्यागपूर्वकमकाम्यतया कर्माणि कर्तव्यानीत्युक्तम् ॥ तथाकरणेऽपि स्वर्गादिफलमुत्पद्येतैव ॥ कर्मस्वभावात् ॥ न हि बीजावापादिकं फलेच्छाभावेऽपि फलं नोत्पादयति ॥ अतः कर्माणि न कर्तव्यानीति भाति ॥

कृष्णः ॥ अत्यागिनां फलत्यागमकुर्वतां फलेच्छया कर्म कुर्वतां कर्मणः त्रिविधं फलं भवति फलत्यागिनां तु सङ्गफलादिकं त्यक्त्वा कर्म कुर्वतां तु नैव तद्भवति॥ किंतु वेदनोत्पत्तिद्वारेण मोक्षो भवति ॥ यदि कामाधिकार इव मोक्षाधिकारे विनियोगो न स्यात् तर्हि फलेच्छाभावेऽपि कामाधिकारोक्तफलं कर्मस्वभावादुत्पद्येत॥' १ 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'ति ॥ मोक्षे विनियोगात् न कामाधिकारोक्तस्वर्गादिफलोत्पत्तिप्रसङ्गः॥ अतः सङ्गफलादित्यागपूर्वकं कर्माणि कर्तव्यान्येव ॥ अत उक्तं युक्तम् ॥ १२ ॥

द्वे॥ सञ्जयः॥ कर्मयोगविषये वक्तव्यमुक्त्वा त्वमेवं कुर्वित्यभिहितेनार्जुनेन कर्मयोगविषये यज्ज्ञातव्यं तत् सम्यगज्ञासिषम् ॥ एवमेव कर्म करोमीत्युक्ते किमयमेवं करोमीति ब्रूते ॥ 'नैव किंचित् करोमीति युक्तो मन्येत तत्ववित्' इत्युक्तमकर्तृत्वानुसंधानं व्यस्मार्षीदिति भाति ॥ अस्तु स्मारयामि तदिति मनसि कृत्वा हे पार्थ करोमीति कर्तृत्वानुसंधानं मा कुरु ॥ किं व्यस्मार्षीः 'नैव किंचित्करोमि'इत्यादिकम् ॥ स्वसहितैः स्वरहितैर्वा पञ्चभिः संभूय क्रियमाणे कर्मणि एकस्य अहङ्करोमीति कर्तृत्वानुसंधानं कथं घटेत ॥ न हि स्वसहितैः स्वरहितैर्वा बहुभिः संभूयक्रियमाणे रथाकर्षणे अहमेव रथमाकर्षामीति कस्यचिदनुसंधानं वचनं वा युज्यते ॥ अतः कर्तृत्वानुसंधानं विहाय कर्म कुरु ॥ कुत इति चेत् कर्तृत्वानुसंधानत्यागस्य

---

१. मु. ३. ४. २२. २. ५. ८.

संन्यासपूर्वकं कर्म कर्तव्यमिति कर्मागतयोक्ते संन्यासे अन्तर्भावात् ॥ तादृशसंन्यासपूर्वकमेव कर्मणामनुष्ठातव्यत्वस्य १'निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते' ॥ इत्यादिना पञ्चमादौ २'न तु संन्यासिनां क्वचित्' इत्युपसंहारे च प्रतिपादितत्वात् ॥ इत्यभिधाय भगवान् किं कर्मणां कारणानि पञ्च इति त्वयैवात्रोच्यते उतान्यैरन्यत्राऽपीति पृष्टः पार्थस्य तदुपलक्षितश्रोतॄणां च विश्वासजननाय कर्मणां कारणानि पञ्चेति तानि इमानि इति च सांख्यशास्त्रे तत्कर्तृभिरभिहितम् ॥ तदेवाहं ब्रवीमि ॥ शृणु इत्याह ॥

कृष्णः ॥ पञ्चैतानि महाबाहो कारणानि निबोध मे ॥
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥

पञ्चेति ॥ महान्तौ बाहू यस्य सः महाबाहुः हे महाबाहो अर्जुन सर्वाणि च तानि कर्माणि च सर्वकर्माणि तेषां सिद्धये सांख्ये कृतान्ते वेदान्तशास्त्रे प्र सम्यक् उक्तानि एतानि पञ्च कारणानि मे मम सकाशात् त्वं निबोध ॥ सांख्ये बुद्ध्या अनुसन्धातव्ये कृतान्ते निर्णये तन्निमित्तं मत्तः त्वं निबोध इति वा ॥ १३ ॥

सर्वेषामपि कर्मणां निष्पत्तये पञ्च कारणानि ३संख्याशब्दितसर्वज्ञानप्रतिपादकतया सम्यग्ज्ञानजनकतया वा सांख्यशब्दिते निर्णयजनकतया ४कृतान्तशब्दवाच्ये सर्वज्ञकपिलनामकाविष्कृतत्वाख्ये सांख्यशास्त्रे सम्यगुक्तानि तान्येतान्यहं ब्रवीमि तानि मत्सकाशात् श्रुत्वा सम्यक् बुध्यस्व ॥ अशक्तस्य तदपेक्षा न मादृशस्य शक्तस्य इति मा मंस्थाः ॥ महाबाहुरपि भवान् नान्यकारणनिरपेक्षः किमपि कर्म कर्तुमीष्टे ॥ १३ ॥

अ ॥ सञ्जयः ॥ अविदुषः कर्मसंन्यासायोगात् तस्योच्यमानः कर्मन्यासः फलत्याग एवेत्युक्तम् 'न हि देहभृता' इत्यत्र ॥ कुतोऽविदुषः कर्मसंन्यासो नास्तीत्युच्यते ॥ कर्मत्यागस्य सुकरत्वात् स तस्याप्यस्तु ॥ इति पार्थेन पृष्टो भगवान् हे

---

१. ५. ३. २. १८. १२. ३ संख्या ज्ञानं तस्या इदं सांख्यं तस्मिन् ॥ ४ कृतः अन्तः निर्णयः येन यस्मिन् वा सः कृतान्तः तस्मिन् ॥

पार्थ कर्मनिर्वर्तकानि कारणानि च तान्यनात्मभूतानि तान्यात्मत्वेन पश्यतः अत एव आत्मानं कर्तारं मन्यमानस्य अविदुषः कथं कर्मसंन्यासः संभवेत् ॥ संभवति च विदुषः ॥ स हि कर्मनिर्वर्तकतया कर्मसंबंधीनि पञ्च कारणानि नात्मतया पश्यति ॥ किंतु आत्मभिन्नतया असत्यतया च ॥ पश्यति चात्मानमकर्तारम् ॥ अतस्तस्यैव कर्मसंन्यासः संभवतीत्यभिप्राय कृ...कतानि तानि पञ्चेति पृष्टः विश्वासजननाय वेदान्तशास्त्रे प्रोक्तानीत्याह ॥

कृष्णः ॥ जीवः ब्रह्म तयोरैक्यं तत्प्राप्त्युपायाः श्रवणादयश्च इत्येते पदार्थाः सम्यक् ख्यायन्ते प्रतिपाद्यन्ते यत्र तत् सांख्यं कृतस्य कर्मणः अन्तः नाशः ज्ञानेन यस्मिन् तत् कृतान्तं कृतस्य कर्मणः अन्तः परिसमाप्तिः ज्ञानेन यस्मिन् तत्कृतान्तं सांख्ये अकृतान्ते इति छेदः ॥ अकृतः अकृत्रिमः अपौरुषेयः नित्यः वेदः तस्य अन्तः निर्णयः येन तत् अकृतान्तं इति वा तादृशे वेदान्तशास्त्रे सर्वकर्मणां सिद्धये पंच कारणानि सम्यक् उक्तानि तानि इमानि १ मत्तो जानीहि ॥ आत्मतत्त्वप्रतिपादके अध्यात्मशास्त्रे कुतः पंचानां कर्मनिर्वर्तकानां अनात्मवस्तूनां प्रतिपादनमिति चेत् कर्महेतूनां अनात्मवस्तूनां प्रतिपादने तानि यावदात्मत्वेन पश्यति तावदस्य कर्माधिकारः यदा तानि आत्मभिन्नतया असत्यतया च पश्यति तदा कर्मसंन्यासः इति प्रतिपादितं भवति ॥ अतस्तत्र तेषां प्रतिपादनं ॥ तानीमानि, एषामात्मत्वेन ग्रहणादविदुषः कर्मसंन्यासो न संभवतीति ज्ञातुं त्वं मत्तः श्रुत्वा जानीहि॥ ज्ञानस्य कर्मनाशकत्वं २'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति२ सूत्रेण 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हैवास्य सर्वे पाप्मानः प्रदूयंते' इति३ श्रुत्या च सिद्धम् ॥ उक्तं च मया ॥ ४'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति ॥ ५'ज्ञानाग्निदग्धकर्माणं' इति च ॥ ज्ञानस्य कर्मसमापकत्वं च उक्तं मया ॥ ६'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ७ 'यावानर्थ उदपाने सर्वतः संप्लुतोदके' ॥ ८'योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्यादिभिः ॥ महाबाहुत्वात्त्वं पराक्रमसाध्ययुद्धेकर्तृत्वाभिमानं परित्यज्य प्रवर्तस्व ॥

---

१. पञ्चेमानीति पाठः ॥ २. ४. १. १३. ३. छां ५. २४. ३. ४. ४. ३७. ५. ४. १९. ६. ४. ३३. ७. २. ४६. ८. ६. ३.

अर्जुनः ॥ 'न तु संन्यासिनां क्वचि'दिति मुख्यसंन्यासिनां फलाभाव उक्तः॥ तत्कथम् ॥ तेषां शिष्येभ्यस्तत्वोपदेशादिना पुण्यस्य संचारे प्राणिपीडया पापस्य च संभवेन तत्फलावश्यंभावात् । ब्रूहि ॥

कृष्णः ॥ कर्मनिर्वर्तकानां पञ्चानां अनात्मत्वेन दर्शनात् कर्मवन्तोऽपि न ते कर्मिणः ॥ कर्म तेषां फलोत्पादकं न भवति ॥ अकर्त्रभोक्तृशुद्धात्मज्ञानवैभवात् ॥ उक्तं च मया ॥ १'कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति स' इति ॥ तानि कर्मकारणानि पञ्च २आत्मतत्वप्रतिपादके ३आत्मतत्वनिर्णायके ४कर्मनाशके विविदिषासंन्यासेन विद्वत्संन्यासेन वा ५कर्मसमापके वेदान्तशास्त्रे उक्तानि तानीमानि निबोध ॥

अर्जुनः ॥ 'न तु संन्यासिना'मित्यत्र संन्यासिशब्देन गृहीतानां सात्विकत्यागवतां त्रिविधं फलं न भवतीत्युक्तम् तत्कथं तेषां कर्मित्वेन कर्मफलावश्यंभावात् ॥ फलानपेक्षया फलं न भवतीति न युक्तम् ॥ फलेच्छाभावेऽपि कृष्यादेरिव कर्मस्वाभाव्यात् फलमुत्पद्यतेव ॥ अतः फलं न भवतीति कथम् ॥ वद ॥

कृष्णः ॥ आत्मभिन्नैः पञ्चभिः कारणैः कर्माणि क्रियन्ते न तेष्वात्मनः कर्तृत्वं इत्यकर्तृत्वानुसन्धानेन कर्म कुर्वतां तत्कर्म न कर्मफलमुत्पादयति किंतु ज्ञानद्वारा मोक्षमुत्पादयति ॥ अतः त्रिविधं कर्मणः फलं न भवतीति युक्तम् ॥ आत्मभिन्नानि पञ्च कारणानि सम्यक् ख्यायते ज्ञायते परमात्मा अनेनेति सांख्यं ब्रह्मज्ञानजनकं कृतान्तं कर्मसमापकं च तादृशे वेदान्तशास्त्रे कृतान्ते निर्णायके संख्यायन्ते गण्यन्ते तत्वान्यत्रेति सांख्यं तत्वगणनपरं सांख्यशास्त्रं तस्मिन्वा उक्तानि तानि ६एतानि त्वं मत्तो निबोध ॥ १३ ॥

---

१. ४. २०. २. सम्यक् ख्यायते प्रतिपाद्यते तत्वं अनेनेति सांख्यं तस्मिन् ॥ ३. कृतः अन्तः निर्णयः यस्मिन् तत् कृतान्तम् तस्मिन् ॥ ४. कृतस्य कर्मणः अन्तः नाशः यस्मिन् तत् तस्मिन् ५. कृतस्य कर्मणः अन्तः समाप्तिः यस्मिन् यन्निमित्तं यत्लक्षणार्थम् येन वा तस्मिन् ॥ ६. पञ्चैतानीति पाठः ।

27

वि ॥ अर्जुनः ॥ 'त्यागो हि पुरुष व्याघ्र त्रिविधः संप्रकीर्तित ' इति त्यागः फलत्यागकर्तृत्वत्यागममतात्यागरूपेण त्रिविध उक्तः ॥ स एव त्रिविधः समुदितः सात्विकत्यागत्वेनोक्तः ॥ तत्र फलत्यागः स्पष्टो युक्तश्च ॥ कर्तृत्वत्यागममतात्यागौ कथं युज्येयाताम् ॥ कथं स्वकीयैः करणकलेवरादिभिः कर्म कुर्वन् अहं करोमीति ममेदं कर्मेति च नानुसन्दधीत ॥ ब्रूहि ॥

कृष्णः ॥ सर्वकर्मणां निष्पत्तये पञ्च कारणानि प्रोक्तानि तान्येतानि संख्या बुद्धिः तस्या अयं सांख्यः तस्मिन् कृतान्ते सिद्धान्ते वैदिकबुद्ध्यनुसन्धातव्येश्वरकर्तृत्वनिर्णयार्थमितियावत् ॥ मत्तो बुध्यस्व ॥ बुद्ध्या ज्ञातव्ये निर्णायकग्रन्थे प्रोक्तानीति वा ॥ न मन्निर्बंधादकर्तृत्वानुसन्धानमगत्या करणीयं त्वया ॥ किंतु पञ्चानां कर्मकारणानां मन्मुखाच्छ्रवणे त्वद्बुद्ध्यैव अकर्तृत्वानुसन्धानप्रकारो ज्ञायेत ॥ तेन कर्तृत्वत्यागः ममतात्यागश्च सुकरः संपद्येत उपपन्नश्च भवेत् ॥ १३ ॥

अर्जुनः ॥ तानि कानि वद ॥

कृष्णः ॥ अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ॥
[1]विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥

अधिष्ठानमिति॥ अधिष्ठानं तथा कर्ता पृथक् विधाः प्रकाराः यस्य तत् पृथग्विधं करणं च विविधाः विधाः यासां ताः विविधाः पृथक् असङ्कीर्णाः चेष्टाः कारणानि अत्र कारणवर्गे दैवं पञ्चमम् ॥ १४ ॥

द्वै ॥ अधिष्ठानं देहादि कर्ता स्वतन्त्रो विष्णुः अस्वतन्त्रो जीवो वा नानाविधं ज्ञानेन्द्रियकर्मेन्द्रियमनोबुद्ध्यादिरूपं करणं नानाविधाः असंकीर्णाः करचरणादिचेष्टाः पञ्चमं दैवं अदृष्टं कर्ता जीवश्चेत विष्णुः ॥ एतानि पञ्च अत्र कर्मणि कारणानि॥ एतानि पञ्चैव कारणानि ॥ नान्यत् ॥ [2]अदृष्टादीनां करणवर्गे अन्तर्भावः ॥ यथा अधिष्ठानमावश्यकं तथा अन्यदपि कर्त्रादिचतुष्टयमिति बोधयितुं तथाशब्दः ॥ तस्य च तथा कर्ता तथा करणमित्यादिरूपेण सर्वत्रान्वयः ॥ अधिष्ठानादीनि कारणानि

---

१. विविधा च पृथक् चेष्टा इति पाठान्तरम् ॥ २. दैवं विष्णुः इत्यभिप्रायेणेदम् ॥

इत्येतावता पूर्तौ दैवमत्र पञ्चममिति विशिष्योक्तिः किमर्था इति चेत्॥ अत्र पञ्चमं दैवं तदेव परमं कारणं अधिष्ठानादिचतुष्टयानुग्रहे सत्यपि विना दैवानुग्रहं न कस्यापि कर्मणो निष्पत्तिः॥ अधिष्ठानादीनामनुग्राहकत्वमपि दैवाधीनमिति बोधयितुं तथोक्तिः॥ यथा भोजनाख्ये कस्मिंश्चित्कर्मणि भूम्यादेरधिष्ठानस्य भोक्तुः कर्तुः पाचकपरिचारकपात्रतण्डुलादिकपाकपरिवेषणतदुपयोगिदर्वीपिठरादेः करणस्य मिश्रणपिण्डीकरणमुखव्यादानतदन्तःप्रवेशनादिरूपव्यापारस्य भगवतोऽदृष्टस्य च कारणत्वं तथा सर्वेष्वपि कर्मसु शरीरादीनां पञ्चानां कारणत्वं बोध्यम्॥

अ॥ अधिष्ठानं शरीरं कर्ता अन्तःकरणशब्दितः चिदाभासानुविद्धोऽहङ्कारः औपाधिको जीवो वा करणं श्रोत्रादीनि द्वादशेन्द्रियाणि॥ करणवर्गे मनोबुद्धी वृत्तिविशेषौ वृत्तिमांस्तु अहङ्कारः कर्तैव॥ चेष्टाः प्राणापानव्यानोदानसमाननागकूर्मकृकलदेवदत्तधनञ्जयाख्यवायुसञ्चारमूलककरचरणादिव्यापाराः॥ वायुचेष्टा वा प्राणापानादयो वायव एव वा॥ दैवं [१]अधिष्ठानाद्यनुग्राहकदेवजातम्॥ अधिष्ठानस्य शरीरस्य देवता पृथिवी कर्तुरहङ्कारस्य देवता रुद्र करणेषु श्रोत्रत्वक्चक्षूरसनघ्राणानां ज्ञानेन्द्रियाणां देवताः क्रमात् दिग्वातार्कप्रचेतोऽश्विनः॥ वाक्पाणिपादपायूपस्थानां कर्मेन्द्रियाणां क्रमात् वह्नीन्द्रोपेन्द्रमित्रप्रजापतयः॥ मनोबुद्ध्योश्चन्द्रबृहस्पती॥ प्राणापानव्यानोदानसमानानां वायूनां क्रमात् सद्योजातवामदेवाघोरतत्पुरुषेशानाः॥ अत्र करणवर्गे दैवं पञ्चमम्॥ अत्र एषु अधिष्ठानादिषु चतुर्षु नियामकतया स्थितं दैवं पञ्चममिति वा॥ यथा अधिष्ठानं अनात्मभूतं भौतिकं मायाकल्पितं तथा कर्त्रादीनीति तथा शब्दस्य सर्वत्रान्वयः॥ एवकारः तथैवेत्यन्वितो ऽनात्मत्वाद्यवधारणार्थः॥ एतान्येवेत्यन्वितो नान्यत्किमपीति उक्तेतरकारणव्यवच्छेदार्थो वा॥ तत्तद्देवताऽननुगृहीतानां अधिष्ठानादीनां कार्यनिर्वर्तकत्वाभावेन देवतारूपस्य कारणस्य प्राधान्यम्॥ अतएव दैवंचैवात्र पञ्चममिति विशिष्योक्तिः॥ एतानि पञ्च कारणानि प्रोक्तानि तानीमानि बुध्यस्व॥

---

१. ईश्वरस्य दिगादिदेवतानियामकत्वेन दैवे अदृष्टस्य च करणे कर्त्राश्रितत्वात्कर्तरि वा अन्तर्भावः॥ दैवं परमात्मा वा॥

वि ॥ अधिष्ठानं शरीरं कर्ता जीवः करणं समनस्कम् वाक्पाणिपादपायूपस्थाख्यानां कर्मेन्द्रियाणां पञ्चकं मनोव्यापारस्य सर्वत्रावश्यकत्वात् कर्मकारणवर्गे करणत्वेन मनस उक्तिः चेष्टाः लक्षणया प्राणापानादयः वायवः ॥ दैवं अन्तर्यामी परमात्मा ॥ अत्र कर्मकारणकलापे पञ्चमम् ॥ सर्वान्तर्यामिणः परमात्मनः पञ्चमत्वेन गणनं न युक्तमिति चेत् ॥ '[1]इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥ मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तं अव्यक्तात्पुरुषः परः ॥ पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ॥' इति कठवल्यां परमात्मनो वशीकरणीय काष्ठात्वेन निर्देशवत् इह कारणवर्गकाष्ठात्वेन निर्देशः ॥ एतानि पंच कारणानि प्रोक्तानि एतानि मत्तो बुध्यस्व ॥ १४ ॥

अर्जुनः ॥ किमेतानि कारणानि सर्वेषु कर्मसु उत कर्मविशेषे वद ॥

कृष्णः ॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ॥
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥

शरीरेति ॥ नरः मनुष्यः शरीरं च वाक् च मनश्च शरीरवाङ्मनांसि तैः शरीरवाङ्मनोभिः न्यायादनपेतं न्याय्यं वा विपरीतं अन्याय्यं वा यत् कर्म प्रारभते करोति तस्य एते पञ्च हेतवः कारणानि ॥ १५ ॥

नरः शरीरेण वाचा मनसा च न्याय्यं वा अन्याय्यं वा यत्कर्म प्रारभते तस्य सर्वस्य एते पंच हेतवः ॥ कश्चित् पिपासूनां पांथानां श्रमापनोदाय प्रपां निर्माय तत्र तक्रोदकदानादिरूपं पुण्यकार्यं करोति तस्य प्रपारूपमधिष्ठानं तक्रादिदाता कर्ता भाण्डदर्वीपिठरादिकं करणं करचरणादिव्यापाराः दैवशब्दितमदृष्टं ईश्वरो वा इति पंच हेतवः ॥ कश्चित् पथिकस्वापार्जितद्रविणा पृथुदीर्घदण्डहस्तः मार्गे स्थित्वा आहरणप्रहरणसंहरणादिरूपं पापकार्यं करोति ॥ तस्य विजनदेशरूपमधिष्ठानं आहरणादिकारी कर्ता करधृतदण्डादि करणं करचरणादिचेष्टाः दैवं चेति पंच हेतवः ॥ एवं सर्वत्रोहनीयम् ॥ कारणपञ्चकं प्रदर्श्य अकर्तृत्वानुसंधानदोषनस्य मनुष्योद्देश्य-

---

१. क. ३. १०.

कत्वात् नरइत्युक्तिः ॥ प्रारभते इत्यस्य कुरुते इत्यर्थः ॥ अत एव अकरणादिति वक्तव्ये अनारंभादित्युक्तं १'न कर्मणामनारम्भा'दित्यत्र ॥ शरीरेण वाचा मनसा वा प्रारम्भमात्रं कर्मणो निष्पत्तिस्तु अधिष्ठानादिसाधनपञ्चकेनेति सूचयितुं 'यत्कुरुते कर्म वै नरः' इत्यनुक्त्वा प्रारभते इत्युक्तम् ॥ अधिष्ठानादिपंचकसाध्यत्वात्सर्वेषां कर्मणां शरीरवाङ्मनोभिरिति कारणत्रयसाध्यत्वोक्तिः कथमिति चेत् ॥ अधिष्ठानादिपंचकसाध्यं कर्म शारीरवाचिकमानसभेदेन त्रिविधं शरीरप्रधानं शारीरं वाक्प्रधानं वाचिकं मनःप्रधानं मानसमिति बोधयितुं शरीरवाङ्मनोभिरित्युक्तम्॥१५॥

अर्जुनः ॥ अस्त्वेवं ततः किं प्रकृते वद ॥

कृष्णः ॥ तत्रैवंसति कर्तारं आत्मानं केवलं तु यः ॥
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

तत्रेति ॥ तत्र तस्मिन् कर्मणि एवं सति एतादृशे सति यः कृता संस्कृता बुधिः यस्य सः कृतबुधिः न कृतबुधिः अकृतबुधिः तस्य भावः अकृतबुधित्वं तस्मात् हेतोः केवलं आत्मानं तु आत्मानमेव कर्तारं पश्यति जानाति ॥ दुः दुष्टा मतिः यस्य दुः दुष्टे मतिः यस्य सः दुर्मतिः सः न पश्यति जानाति ॥ ११ ॥

द्वै ॥ तत्र कर्मणि एवं सति अधिष्ठानादिकारणपंचकसाध्ये सति कथमात्मानं कर्तारं मन्तुं शक्यते ॥ आत्मा हि केवलः परमात्मप्रेरणां विना स्वतोनिष्क्रियः स्पन्दितुमप्यशक्तः कथं तस्य कर्तृत्वं संभवेत् ॥ अतोऽकर्ता सः । अतः अहं करोमीति कर्तृत्वानुसन्धानं न कार्यम् ॥ इदं च कर्ता स्वतन्त्रो विष्णुरिति व्याख्यानानुरोधेन ॥ कर्ता अस्वतन्त्रकर्ता जीव इति व्याख्याने तु केवलस्य परप्रेरणां विना निष्क्रियस्य स्वातन्त्र्येण कर्तृत्वं न संभवति ॥ अतस्तस्य अहं करोमीति कर्तृत्वानुसंधानं न संभवति ॥ स्वतन्त्रकर्ता हि तथा मन्तुं शक्यम् ॥ यः केवलं स्वतो निष्क्रियं अतः पराधीनकर्तारं स्वतन्त्रकर्तृत्वरहितमेव ॥ तुः एवार्थः ॥ आत्मानं श्रवणादिभिरसंस्कृतबुद्धित्वात् कर्तारं स्वतन्त्रकर्तारं च पश्यति जानाति सः न

---

१. ३. ४.

पश्यति न सम्यक् जानाति न सम्यग्ज्ञानवान् ॥ किंतु सः दुर्मतिः ॥ पराधीनकर्तृत्वात् अकर्तरि जीवे अविद्यमानस्य स्वतन्त्रकर्तृत्वस्य ज्ञानाद्विपरीतज्ञानवान् ॥ विपरीतज्ञानस्य तु फलं महाननर्थः ॥ अतः अहं करोमीति कर्तृत्वानुसन्धानं विहायैव कर्म कर्तव्यम् ॥ अतस्त्वमहं करोमीति मा मंस्थाः मा च वादीः ॥ कर्तृत्वत्यागपूर्वकमुक्तरीत्या कर्तव्यं कर्म कुरु ॥ केवलमित्यस्य एकाकिनमित्यर्थो न वाच्यः ॥ केवलं एकाकिनं आत्मानं कर्तारं यः पश्यति स दुर्मतिरिति निंदया ससहायस्य कर्तृत्वमभ्युपगतं स्यात् ॥ अस्तुनाम का हानिरिति चेत् ॥ ससहायस्यात्मनः कर्तृत्वं ज्ञायतां इत्यभ्यनुज्ञातुं न युक्तम् ॥ स्वतन्त्रकर्तृत्वज्ञानस्य विपरीतज्ञानत्वात् ॥ ससहायत्वविशेषणात् पराधीनकर्तृत्व एव पर्यवस्यतीति न मन्तव्यम् ॥ ससहायत्वोक्तिमात्रेण कर्तृत्वस्य पराधीनताया असिद्धेः ॥ न हि ससहायत्वमात्रेण स्वातन्त्र्यं हीयते ॥ किंतु सहायसत्व मैश्वर्यद्योतकं भवति ॥ [1]'युक्तः शब्दांतराच्चे' ति सूत्रम् ॥ उक्तं चाभियुक्तैः ॥ 'साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते ॥ तदा साधनसंपत्तिरैश्वर्यद्योतिका भवे'दिति ॥ न हि सार्वभौमः ससहायोऽपि पराधीनकर्ता भवति ॥ अतो निष्क्रियमित्येवार्थः ॥ स्वतो निष्क्रियत्वेन पराधीनकर्तारं यः स्वतन्त्रकर्तारं जानाति स दुर्मतिरित्युक्तौ निंदया अनया पराधीनकर्तृत्वमभ्युपगतं भवति ॥ तच्चेष्टम् ॥ तद्विवक्षया कर्ता जीवः इति व्याख्या ॥ स्वतन्त्रकर्तृत्वविवक्षया कर्ता विष्णुः इति व्याख्या ॥ अतस्त्वं स्वतन्त्रकर्तृत्वानुसंधानत्यागपूर्वकं अस्वतन्त्रकर्तृत्वानुसन्धानपूर्वकं च कर्तव्यं कर्म कुरु ॥ अयमेव कर्तृत्वत्यागः पूर्वोक्तः ॥

अ ॥ कृष्णः ॥ तत्र कर्मणि एवं सति अनात्मभूतैरधिष्ठानादिभिः क्रियमाणे सति यः केवलं तु स्वप्रकाशपरमानन्दं अबाध्यं असंगोदासीनं अविक्रियं अद्वितीयं अकर्तारमेव सन्तं आत्मानं अधिष्ठानाद्यनात्मभूतकर्मकर्तृतादात्म्याध्यासात्तदीयं कर्तृत्वं आरोप्य अहं करोमीति कर्तारं पश्यति ॥ तोये चलति तच्चलनमादित्ये आरोप्य आदित्यश्चलतीतिवत् ॥ यथा शुक्तौ रजततादात्म्याध्यासेन शुक्तिं रजतं पश्यति रज्जौ सर्पतादात्म्याध्यासेन रज्जुं सर्पं पश्यति तद्वत् अकर्तारि कर्तृतादात्म्याध्यासेन

१. २. १. १९.

अकर्तारं कर्तारं पश्यति ॥ सः न पश्यति आत्मानं पश्यन्नपि अकर्तृत्वादिरूपेण यथा वन्न जानाति ॥ आत्मस्वरूपाज्ञानादात्मनि अन्यतादात्म्याध्यासः ॥ शुक्तिरज्जुस्वरूपाज्ञानात् शुक्तौ रज्जौ च रजतसर्पतादात्म्याध्यासवत् ॥ कुत इति चेत् ॥ शास्त्राचार्योपदेशादिभिरसंस्कृतबुद्धित्वात् दुष्टबुद्धिर्हि सः ॥ श्रवणादिभिरसंस्कृतबुद्धित्वात् लब्धश्रवणादिसंस्कारत्वेऽपि अकृतात्मविषयकयथावद्दर्शनत्वात् ॥ दुष्टे अधिष्ठानादौ अहमिति ज्ञानवान् हि सः ॥ कुतो यथावदात्मतत्वदर्शनं न संपादयतीति चेत् ॥ दुर्मतिर्हि सः ॥ ज्ञानप्रतिबन्धकपापेन दूषितबुद्धित्वात् तस्य यथावदात्मतत्वदर्शनं न जायते ॥ अतः अकर्तारं कर्तारं पश्यति ॥ यथावदात्मतत्वदर्शनाभावादन्यतादात्म्याध्यासेन अन्यधर्मस्य आत्मनि दर्शनं जायते ॥ अतः अकर्त्रात्मज्ञानाभावादधिष्ठानाद्यन्यतादात्म्याध्यासेन तद्गतकर्मकर्तृत्वं आत्मन्यारोप्य अकर्तारमात्मानं कर्तारं मन्यन्तेऽनात्मज्ञाः ॥ उक्तं हि मया ॥ १'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥ अहङ्कारविमूढात्माकर्ताऽहमिति मन्यते' ॥ इति ॥ एवमन्यदीयं कर्म आत्मन्यारोप्य आत्मानं कर्तारं मन्यमानानां अज्ञानां कथं कर्मसंन्यासः सम्भवेत् ॥ अतो नाज्ञस्य कर्मसंन्यासः ॥ विद्वांस्तु अकर्त्रात्मतत्वज्ञानात् नान्यतादात्म्याध्यासेन आत्मानं कर्तारं मन्यते ॥ उक्तं हि मया ॥ २'तत्ववित्तु महाबाहो गुणकर्मविभागयोः ॥ गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते' ॥ इति ॥ ३'प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ॥ यः पश्यति तथाऽऽत्मानं अकर्तारं स पश्यति' ॥ इति च ॥ अतो विदुष एव कर्मसंन्यासः ॥ अतो 'न हि देहभृते' त्यनेन यदुक्तम् तद्युक्तम् ॥ केवलमित्यस्य एकाकिनं असहायं इति नार्थः ॥ केवलस्य आत्मनः कर्तृत्वदर्शननिंदया ससहायस्य अन्यैस्संभूय कर्तृत्वमस्तीति प्रतीयेत ॥ तादृशकर्तृत्वमपि नात्मनः संभवति॥ अविक्रियस्यात्मनः अन्यैः संहतत्वस्य संहतस्य वा कर्तृत्वस्य चायोगात् ॥ अतः केवलमित्यस्य उक्त एवार्थः ॥

आत्मनि कर्मकर्तृतादात्म्याध्यासाभावात् कर्मकर्तृणामधिष्ठानादीनां अनात्मतयैव दर्शनाच्च मुख्यसंन्यासिनः कर्मिणोऽप्यकर्मिण एव ॥ अतः मुख्यसंन्यासिनां फलं न भवतीत्युक्तम् युक्तम् ॥

आत्मभिन्नैरधिष्ठानादिभिः क्रियमाणे कर्मणि आत्मनोऽकर्तृत्वज्ञानपूर्वकं कृतं सात्विकत्यागिनां कर्म न फलमुत्पादयति ॥ किंतु ज्ञानद्वारा मोक्षमेव ॥ आत्मनोऽ-

१. ३. २७. २. ३. २८. ३. १३. ३०.

कर्तृत्वज्ञानवैभवात्॥ कर्मणामीश्वरे अर्पणेन तत्फलस्य त्यक्तत्वाच्च॥ अतः 'न तु संन्यासिनां क्वचि'दिति सात्विकत्यागिनां फलाभाववचनं युक्तम् ॥

वि॥ कृष्णः॥ एवमधिष्ठानादीनां पंचानां कर्तृत्वोक्त्या जीवात्मनोऽपि कर्तृत्वमुक्तम् कर्तेति तस्य ग्रहणात्॥ परमात्मनोऽपि कर्तृत्वमुक्तम् ॥ दैवमिति तस्य ग्रहणात् ॥ न च उभयोः समानं कर्तृत्वं एकस्य शेषित्वात् अन्यस्य शेषित्वात्॥ किंतु जीवात्मनः कर्तृत्वं प्रयोज्यकर्तृत्वं ॥ ईश्वरस्य कर्तृत्वं प्रयोजककर्तृत्वम् ॥ अतः ईश्वरः स्वानुमतिदानेन जीवात्मानं प्रवर्तयति॥ ततो जीवात्मा स्वेच्छया करोति ॥ अतो जीवात्मनः कर्तृत्वं परमात्माधीनम् ॥ १'य आत्मानमंतरो यमयती'ति २'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मे'ति च श्रुतिः॥ उक्तं च मया॥ ३'सर्वस्य चाहं हृदि संनिविष्ट' इति॥वक्ष्यते च॥ ४'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥ भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' इति च ॥ जीवो हि परमात्मना दत्तैस्तदाधारकैश्च करणकलेबरादिभिस्तदाहितशक्तिभिः स्वयं च तदाधारकः तदाहितशक्तिस्सन् कर्म कर्तुं प्रयतते ॥ तदन्तरवस्थितः परमात्मा तु स्वानुमतिदानेन तं प्रवर्त्य कारयति ॥ अतः पराधीनकर्ता जीवः ॥ तच्च पराधीनकर्तृत्वं बहुभिस्संभूय ॥ अविकारेणैवान्यैस्संहननं सहकारिभिः संभूय कर्तृत्वं च जीवस्यास्ति ॥ अन्यैस्संभूय कर्तृत्वे बहूनां एकस्मिन् कार्ये कर्तृत्वमापद्यत इति चेत् ॥ गुरुतरशिलामहीरुहादिचालने बहुपुरुषसाध्ये बहूनां कर्तृत्वमस्त्येव ॥ एवं सति अतो जीवस्य परमात्माधीनकर्तृत्वे अन्यैः संभूय कर्तृत्वे च सति तत्र कर्मणि केवलं असहायमेव आत्मानं यः कर्तारं मन्यते सः अकृतबुद्धित्वात् अध्यात्मशास्त्रैरनिष्पादितयथावस्थितात्मयाथात्म्यज्ञानत्वात् दुर्मतिः विपरीतज्ञानः पश्यन्नपि न पश्यति ॥ अयथाभावेन दर्शनमदर्शनमेव ॥ एवमसहायस्य कर्तृत्वदर्शननिंदया ससहायस्य कर्तृत्वदर्शनं युक्तमित्युक्तं भवति ॥ ततश्च केवलस्य कर्तृत्वानुसन्धानत्याग एव कर्तृत्वत्यागः ॥ एवमकर्तृत्वानुसन्धानप्रकारे ज्ञाते कर्तृत्वत्यागस्सुकरस्सूपपन्नश्च संपद्यते ॥ स्वकीयैरेव करणकलेबरादिभिः कर्मणः स्वयं करणेऽपि तस्य कर्तृत्वस्य परमात्माधीनत्वज्ञानात् नियन्त्रन्तरनिरपेक्षकर्तृत्वानुसन्धानत्यागस्य क्रियमाणस्य कर्मणः अनेकाधीनत्वज्ञानात् अनन्याधीनत्वाभिमानत्यागस्य च निर्बाधत्वात् ॥ कर्तृत्वस्य परमात्मानुमतिपूर्वकत्वे ज्ञाते ममतापरित्यागोऽपि सुकरः संपद्यते॥ परमात्मा हि स्वकीयेन जीवात्मना स्वकीयैश्च करणकलेबरादिभिः स्वलीलाप्रयोजनाय कर्माणि करोति कारयति इति ज्ञाते भग-

---

१. बृ. ५. ७. २२. २. तै. आ. ३. ११. २. ३. १५. १५. ४. १८. ६१.

वदीयलीलारूपफलसाधनतया भगवदीयमिदं कर्मेति ज्ञानं जायते ॥ तेन मदीयफलसाधनतया मदीयमिदं कर्मेति ममताख्यः परित्यागोऽपि मुकरस्सूपपन्नश्च भवति ॥ अतः त्यागः त्रिविधः त्रिविधत्यागपूर्वकं कर्म कर्तव्यमिति १ त्यागो हि पुरुषव्याघ्र इत्यादिना यदुक्तं तदुक्तम् ॥ १६ ॥

द्वै ॥ सञ्जयः ॥ एवं कर्मणि कर्तृत्वानुसन्धानत्यागस्यावश्यकतां कर्तृत्वानुसन्धानकारिनिन्दया प्रतिपाद्य इदानीं कर्तृत्वानुसन्धानत्यागिस्तुत्या तां प्रतिपादयति भगवान् ॥

कृष्णः ॥ यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥

हत्वाऽपि स इमान् लोकान् न हन्ति न निबध्यते ॥ १७ ॥

यस्येति ॥ यस्य भावः अहं कर्ता अस्मीतीत्यहंकृतः अहङ्कारवान् न ॥ यस्य बुद्धिः न लिप्यते ॥ सः इमान् लोकान् हत्वाऽपि न हन्ति ॥ न निबध्यते ॥ १७ ॥

यस्य भावः अभिप्रायः अहंकृतः अहङ्कारवान् न ॥ अहङ्कृतेत्येवंरूपोऽभिप्रायो यस्य नास्ति ॥ अहमिति कृतः जातः भावः यस्य नास्तीति वा ॥ यस्य बुद्धिः न लिप्यते॥ फलरागरूपलेपवती न भवति ॥ इष्टानिष्टत्वबुद्ध्या कर्माणि सक्तिरूपलेपवती न भवतीति वा ॥ यस्य भावः बुद्धिश्चेति पूर्वो यस्येति द्विग्रहणं उभयोरावश्यकत्वसूचनाय ॥ सः अहङ्करोमीति कर्तृत्वाभिमानत्यागपूर्वकं फलाभिसन्धित्यागपूर्वकं इष्टानिष्टत्वबुद्ध्या कर्माणि सक्तिशब्दितसङ्गत्यागपूर्वकं च कर्तव्यं विहितं कर्म कुर्वन् पुरुषः इमान् सर्वान् लोकान् हत्वाऽपि तेन न निबध्यते ॥ तत्कृतपापरूपफललेपवान् न भवति ॥ कुत इति चेत् ॥ न हन्ति अहं हन्मीति न मन्यते ॥ २ कं घातयति हन्ति कमितिवत् ॥ अहं करोमीति कर्तृत्वाभिमानवान् हि तत्कर्मफलेन लिप्यते ॥ हननस्य हिंसारूपत्वात् कथं सङ्गफलत्यागपूर्वकं तत्करणाभ्यनुज्ञा युज्यतेति चेत् ॥ न सर्वेषां इयं हननाभ्यनुज्ञा किंतु हननरूपकर्मणि भगवता नियुक्तरुद्रधर्मविषयमिदम् ॥ तां हननक्रियां कृत्वाऽपि न बध्यते ॥ अहं हन्मीत्यभिमानाभावात् ॥ सङ्ग-

---

१. १८. ४. २. २. २१.

फलत्यागपूर्वकं कृता हननक्रियापि सङ्गफलत्यागमहिम्ना न तत्फलरूपदोषोत्पादिका ॥ किमुत सङ्गफलत्यागपूर्वकमनुष्ठितं विहितं साधु कर्म स्वर्गादिरूपफलोत्पादकं नेति ॥ अतः अहङ्कारममकारादित्यागपूर्वकं फलत्यागपूर्वकं च विहितं कर्म कर्तव्यम् ॥ अतस्त्वं द्वितीयाद्युक्तरीत्या सङ्गफलत्यागपूर्वकमेव कर्म कुरु ॥

अ ॥ सञ्जयः ॥ यदुक्तं अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ॥ भवत्यत्यागिनां प्रेत्येति कर्तृत्वानुसन्धानवतां त्रिविधफलभाक्त्वम् ॥ ननु 'पञ्चैतानि' इत्यादिभिश्चतुर्भिः श्लोकैस्सम्यगुपपाद्य इदानीं 'न तु संन्यासिनां क्वचि'दिति कर्तृत्वानुसन्धानरहितानां त्रिविधफलराहित्यं यदुक्तम् तदुपपादयन् निदामुखेन प्रतिपादितां अकर्तृत्वानुसन्धानस्यावश्यकतां स्तुतिमुखेनापि प्रतिपादयति भगवान् ॥

कृष्णः ॥ यस्य अहंकृतः अहङ्कारवान् अहं कर्ता इत्येवंरूपः भावः अभिप्रायः नास्ति ॥ अधिष्ठानादयः पञ्चैव सर्वेषां कर्मणां कर्तारः अहं तु न कर्ता किंतु तद्व्यापाराणां साक्षिभूतः शुद्धः सर्वविकारशून्यः परमात्मा इत्यकर्त्रात्मविज्ञानात् ॥ यस्य भावः सद्भावः अहंकृतः अहमितिव्यपदेशार्हो न ॥ शुद्धस्वरूपमात्रावशेषात् इति वा ॥ अहंकृतः अहङ्कारस्य भावः तादात्म्याध्यवसायः यस्य नास्तीति वा ॥ अहंकृतः अहङ्कारस्य भावः स्वभावः कर्तृत्वाभिनिवेशरूपः यस्य नास्तीति वा ॥ यस्य भावः अन्तःकरणं नाहंकृतः इत्येकं पदं अहंकृतं अहङ्कारेण अहङ्कारः न विद्यते यस्य सः अहंभावरहित इति यावत् ॥ इति वा॥ यस्य भावः आत्मा अहं कृतः इति द्वे पदे ॥ अहं न कृतः अहङ्कारतादात्म्यं न प्रापितः इति वा॥ नाहंकृतः इत्येकं पदं षष्ठ्यन्तम् ॥ अहंकाराभिमतां वृत्तिमनुत्पादयतः यस्य भावः सत्ता वर्तते इति वा ॥ अहं अहंकृतिं करोतीत्यहंकृत् तस्य अहंकृतः षष्ठी ॥ यस्य सर्वाभिधनोऽहंकृतः अन्तःकरणस्य भावः स्थितिः नास्ति ॥ यस्यान्तःकरणमहंकृतिशून्यमित्यर्थः ॥ इति वा ॥ अहमा कृतः अहंकृतः अहमध्यासमूलकः भावः ममेत्यध्यासरूपः पदार्थः यस्य नास्ति॥ इति वा ॥ यस्य बुद्धिः न लिप्यते ॥ यस्य बुद्धौ एतेन कर्मणा एतत्फलं भोक्ष्ये इति फलानुभवानुसन्धानरूपः पुण्ये कर्मणि हर्षरूपः पापे कर्मणि मनःक्लेशरूपः अनुशयशब्दितः लेपः नास्ति ॥ इष्टानिष्टत्वबुद्ध्या कर्मसु सक्तिरूपलेपो नास्तीति वा ॥

स इमान् लोकान् सर्वलोकस्थान् सर्वान् प्राणिनः हत्वाऽपि न हन्ति हननक्रियायाः कर्ता न भवति॥ अतः तत्फलेन पापेन न निबध्यते न संबध्यते॥ न बाध्यते इति वा॥ हत्वाऽपि पापेन न संबध्यत इति कथं इति चेत् कर्तृत्वानुसन्धानादित्यागस्य स्तुतिरियम्॥ तथाऽपि विप्रतिषिद्धमुच्यमानं कथमुपपद्येत इति चेत् हत्वाऽपीति कर्तृत्वाभ्यनुज्ञा लौकिकदृष्ट्यनुरोधेन ॥ न हन्तीति कर्तृत्वनिषेधः शास्त्रीयया परमार्थदृष्ट्या ॥ हननक्रियां कुर्वन्नपि न बध्यते किंपुनः सत्त्वशुद्धिद्वारा ज्ञानहेतुभूतानि कर्माणि कुर्वन् न बध्यते इति ॥ उक्तं हि मया ॥ १ 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ॥ कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः' ॥ इति ॥ २ 'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ॥ लिप्यते न स पापेन पद्मपत्रमिवांभसा' ॥ इति च ॥ तस्मात् परमार्थसंन्यासप्राप्तिहेतुभूते कर्मणि अकर्तृत्वाद्यनुसन्धानादिकमावश्यकम् तथाकृतमेव कर्म परमार्थसंन्यासप्राप्तिहेतुर्भवति ॥ उक्तं हि मया ॥ ३ 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः । योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति' ॥ इति ॥ ४ 'वेदाविनाशिनं'मित्यत्र कं घातयति हन्ति कमित्युपक्षिप्तः तत्रतत्रोपपादितः कर्मसंन्यासः सर्वशास्त्रार्थोपसंहारे पुनर्न हन्तीत्युपसंहृतः ॥ १७ ॥

वि ॥ सञ्जयः ॥ निन्दामुखेन प्रतिपादितां केवलस्य कर्तृत्वानुसन्धानत्यागावश्यकतां स्तुतिमुखेनापि प्रतिपादयन् कर्तृत्वानुसन्धानत्यागस्य फलमाह ॥

कृष्णः ॥ यस्य भावः अभिप्रायः अहंकृतः अभक्षन्यायेन सावधारणमिदम्॥ अहमेव केवलः कर्तेत्यभिमानरूपाहङ्कारवान्॥ यस्य उक्तरीत्या परमात्माधीनोऽहं ससहायः करोमीत्येवंरूपः कर्तृत्वत्यागोऽस्ति ॥ यस्य बुद्धिः न लिप्यते ॥ कर्माणि मम कर्तृत्वाभावादेतत्फलं न मया संबध्यते ॥ न च मदीयं कर्म किंतु मदीयं भोजनादिरूपं कर्म क्षुन्निवृत्त्यादिरूपं फलं च परमात्मन एव ॥ पञ्जरशकुन्तपोषणादिकं सेवककर्म तज्जन्यशकुन्तपुष्ट्यादिमूलकसुखादिरूपं फलं च प्रभोरेव हि लोके दृश्यते ॥ उक्तरीत्या कर्तृत्वाकर्तृत्वानुसन्धानप्रकारज्ञानमूलककर्तृत्वत्यागहेतुको ममतात्यागश्च यस्या-

---

१. ४. २०. २. ५. १०. ३. ५. ६. ४. २. २१.

स्ति सः त्वादृशः क्षत्रियश्चेत् इमान् लोकान् सर्वलोकस्थान् [१] सर्वान् जनान् युद्धे [illegible]नापि न हन्ति ॥ हननकर्तृत्वा[illegible]मूलकादृष्टहेतुकफलसंबन्धयोग्यो न भवति ॥ [illegible]: युद्धजन्यफलेन स्वर्गादिना न [illegible]ध्यते ॥ किंतु ज्ञानद्वारा मोक्षरूपमेव फलं भव[illegible]ति ॥ अतः कर्तृत्वाभिमानस्य अमन[illegible]गस्य च सुकरत्वात् [illegible]न्सर्वान् आवश्यकत्वा[illegible]त्व कर्तृत्वत्यागममतात्यागफलत्यागरूपसात्विकत्यागशब्दितत्रिविधत्यागपूर्वकं यज्ञादिरूपं कर्म कर्तव्यमेवेति यदुक्तं तदुत्तमम् ॥ अतस्त्वं त्रिविधत्यागपूर्वकमेव युद्धाख्यं कर्म कुरु ॥ १७ ॥

है ॥ अर्जुनः ॥ जीवस्य स्वतन्त्रकर्तृत्वं नास्तीत्युक्तं तस्य स्वतन्त्रकर्तृत्वाभावे कथं स कर्मविधिविषयो भवति॥ कर्तुर्हि विधिविषयत्वम् ॥ माऽस्तु तस्य विधिविषयत्वमिति चेत् ॥ विधयो व्यर्थास्स्युः ॥ अन्यः कश्चिद्विषयोऽस्तु इति चेत् ॥ जडस्य ईश्वरस्य मुक्तस्य च विधिविषयत्वं न संभवति ॥ तदन्यस्तु नैवास्ति॥ किंच जीवस्य विधिविषयत्वाभावे विहिते कर्मणि न प्रवर्तेत ॥ अतः कथमिदम् ॥ ब्रूहि ॥

कृष्णः ॥ ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ॥
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥

ज्ञानमिति ॥ ज्ञानं ज्ञेयं परिज्ञाता इति कर्मणः चोदना विधिः तिस्रः विधाः प्रकाराः यस्यास्सा त्रिविधा ॥ करणं कर्म कर्ता इति संगृह्यते संग्रहणं प्रतिपाद्यते अनेनेति संग्रहः कर्मणः संग्रहः कर्मसंग्रहः त्रिविधः ॥ १८ ॥

जीवस्य न विधिविषयत्वाभावः अस्वतन्त्रकर्तृत्वसत्त्वेन विधिविषयत्वमुपपद्यते॥ अस्वतन्त्रकर्तुः कथं विधिविषयत्वमिति चेत् अस्वतन्त्रकर्तारो भृत्यादयो विधिविषया-फलभागिनश्च दृश्यन्ते हि लोके ॥ अस्वतन्त्रकर्तारमुद्दिश्य कथं विधिः प्रवर्तेत इति चेत् कर्मणि चोदनाशब्दिता विध्यपरपर्याया प्रेरणा ज्ञानं ज्ञेयं परिज्ञाता इति त्रिवि[illegible]

---

१. न केवलं भीष्मादीनित्यर्थः ॥ इति भाष्यम् ॥ 'कथं भीष्ममहं संख्ये' इति प्रश्नस्य कैमुत्येन प्रतिक्षेपार्थं इमान् लोकानिति सामान्येनोच्यत इत्यभिप्रायेणाह ॥ न केवलमिति ॥ इति टीका ॥

त्रिविधनिमित्तहेतुका निमित्तनिमित्तिनोरभेदात् त्रिविधेत्युक्तिः ॥ विधिविषयज्ञानं एकं निमित्तं तद्वान् अस्वतन्त्रकर्ता जीवः एकं निमित्तं तदीयं इच्छाप्रयत्नादिकमेकं निमित्तं एतानि त्रीणि निमित्तान्यपेक्ष्य यजेतेत्यादिलिङ्लोट्तव्यप्रत्ययघटितकर्मविधयः प्रवर्तन्ते ॥ न स्वतन्त्रकर्तृत्वं विधिविषयत्वे हेतुः ॥ तथासति ईश्वरस्यापि विधिविषयत्वं स्यात्॥ किंतु स्वसंबन्धितया विधिज्ञानकर्मतत्फलोद्देश्यकेच्छाप्रयत्नाधिष्ठानादिसंनिधानकर्मतत्फलसंबन्धादिमत्वमेव विधिविषयत्वे हेतुः ॥ तच्च सर्वस्मिन् परमात्माधीनं जीवे ॥ अतोऽस्वतन्त्रकर्तुर्जीवस्य विधिविषयत्वं संभवति ॥ ईश्वरोऽपि निमित्तं परिज्ञातृपदेन मुख्यकर्तुरीश्वरस्यापि ग्रहणात् ॥ स्वतन्त्रः ईश्वरः जीवे विधिज्ञानमुत्पाद्य कर्मतत्फलोद्देश्यकेच्छाप्रयत्नानुत्पाद्य उक्तरूपैः पञ्चभिः कारणैः कर्म कारयित्वा फलं ददाति ॥ अतः जीवस्य स्वतन्त्रकर्तृत्वाभावेऽपि परमात्माधीन कर्तृत्वसत्वात् कर्मविधिविषयत्वादिकं युक्तम् ॥ जडापेक्षया स्वातन्त्र्यमीश्वराधीनं जीवस्यास्ति तदपेक्ष्य कर्मविधिविषयत्वमिति वा ॥ अस्तुनामेदम् 'पञ्चैते तस्य हेतवः' इत्युक्तं क्वचित् कर्मकारणानि त्रीणीत्युच्यते कथमिदमिति चेत् करणं कर्म चेष्टा कर्ता इति त्रीणि कारणानि इति कर्मकरणानां त्रिविधत्वप्रतिपादकं वचनं संग्रहेण कर्मकारणप्रतिपादकम् ॥ विस्तरेण प्रतिपादने पञ्च संग्रहेण प्रतिपादने त्रीणि ॥ तत्र करणे अधिष्ठानस्य दैवस्य चान्तर्भावः ॥ दैवपदोदितेश्वरस्य कर्तर्यन्तर्भावः ॥ अतः पञ्च त्रीणि इत्येतयोर्न विरोधः ॥ १८ ॥

अ ॥ अर्जुनः ॥ सङ्गफलत्यागपूर्वकं कर्म अवश्यं कर्तव्यमित्युक्तम् ॥ तस्य कर्मणः प्रवर्तकं किम्॥ उक्तरीत्या आत्मनः कर्मासंस्पर्शित्वात्कमुद्दिश्य विधिः प्रवर्तते॥ विधिविषयस्यात्मनः कर्मासंस्पर्शित्वं च कथमुच्यते ॥ ब्रूहि ॥

कृष्णः ॥ ज्ञानं वस्तुप्रकाशकं १ज्ञानं ज्ञेयं ज्ञानविषयीभूतं कर्म परिज्ञाता उपाध्यवच्छिन्नोऽहङ्कारापरनामा विज्ञानात्मा इति त्रिविधा कर्मचोदना इत्येतत् त्रयं कर्मणां प्रवर्तकं निर्वर्तकम्॥ ज्ञानज्ञेयज्ञातॄणां संनिधाने सति कर्म प्रवर्तते ॥ अतः

---

१. ज्ञायते अनेनेति ज्ञानम् ॥ इति केचित् ॥

त्रितयमेतत् कर्मप्रवर्तकम् ॥ ज्ञानं ज्ञेयं परिज्ञाता इति त्रिविधं निमित्तमुद्दिश्य लिङ्लोट्तव्यप्रत्ययघटिता यजेत यज यष्टव्यं कुर्यात् कुरु कर्तव्यं इत्यादिरूपा कर्मणां चोदना विधिः प्रवर्तते॥ कर्तुरहङ्कारस्य विधिविषयस्य सत्वात्तमुद्दिश्य विधिः प्रवर्तते॥ प्रवर्तकमिदं त्रिकं सगुणं तथा करणं श्रोत्रादि कर्म १'कर्तुरीप्सिततमं कर्म' इति निर्दिष्टं कृतिविषयीभूतं कर्ता इति त्रिविधं करणकर्मकर्तृरूपं कारकं एतद्रूपः कर्मसंग्रहः कर्माश्रयः कर्म सम्यक् गृह्यते अस्मिन्निति कर्मसंग्रहः इति निरुक्तिः ॥ उक्तकारकत्रितयं कर्माश्रय ॥ कर्मप्रवर्तकस्य कर्माश्रयस्य च सगुणत्वात् आत्मनश्च निर्गुणत्वात् केवलस्यात्मनो न कर्मसंस्पर्शः ॥ कर्मप्रवर्तकस्य कर्माश्रयस्य च सगुणत्वं उक्तं मया॥ २'त्रैगुण्यविषया वेदा' इति॥ कर्मप्रवर्तकस्य कर्माश्रयस्य च अनात्मत्वादात्मनः कर्मसंबन्धो नास्ति ॥ एवं च यथावदकर्तात्मविज्ञानात् विदुषः कर्मसंन्यास इति यदुक्तं तद्युक्तम् ॥ १८ ॥

वि ॥ अर्जुनः ॥ ३'त्यागो हि पुरुष व्याघ्र त्रिविधः संप्रकीर्तितः' इत्युक्तत्रिविधत्यागरूपः सात्विकत्यागः अकर्तृत्वानुसन्धानप्रकारोक्तिमुखेन किमर्थं विशोधितः ब्रूहि ॥

कृष्णः ॥ एतादृशसात्विकत्यागपूर्वकं क्रियमाणं कर्म सात्विकं संपद्यते ॥ तदेव कर्त्रा राजसतामसकर्मप्रहाणेन सात्विकेन कर्तव्यम्॥ सात्विको भूत्वा सात्विके कर्मणि केन प्रवर्तेतेति चेत् ॥ सात्विकेन ज्ञानेन ॥ सात्विकेन कर्त्रा सात्विकेन ज्ञानेन सात्विकं कर्म कर्तव्यमित्युक्तं भवति ॥ कर्ता कर्म ज्ञानेन कुर्यादिति कर्मणि त्रितयं कुत उच्यत इति चेत् ॥ ज्ञानकर्मकर्तॄणां कर्मविधौ विद्यमानत्वात् ॥ 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिविधिषु कर्ता कर्म च विधेये ॥ ज्ञानद्वारैव विधीनां प्रवर्तकत्वम् ॥ कर्मकर्तव्यतां अनेन विधिना ज्ञात्वा कर्ता कर्म कुर्यादिति विधीनामर्थः ॥ तस्मात् बोधबोद्धव्यबोद्धृशब्दितज्ञानज्ञेयज्ञातृयुक्तो ज्योतिष्टोमादिकर्मविधिः ॥ ज्ञानं कर्तव्यकर्मविषं ज्ञान ज्ञेयं विधिना ज्ञातव्यं कर्तव्यं कर्म परिज्ञाता विधिवाक्यार्थज्ञानजन्यकर्मकर्तव्यताज्ञानवान् कर्ता इति कर्मचोदना त्रिविधा वस्तुत्रयानुबन्धिनी ॥ चोदनासंबन्धिपदार्थत्रिके ज्ञानादीनांप्रकारत्वात् ज्ञानादिरूपेण त्रिप्रकारा चोदनेत्युच्यते ॥ सात्विकेन ज्ञानेन सात्विककर्म बुध्वा सात्विकेन कर्त्रा कर्तव्यं तत् कर्म

१ १. ४. ९. २. २. ४५. ३. १८. ४.

आत्मनः शुद्धय इति बोधयितुं सात्विकत्यागविशोधनं कृतम्॥ देशकालादीनामनुक्तिः कुत इति चेत् ॥ तेषु त्रिषु ज्ञेयशब्दोक्तं यागादिकं कर्म कर्मविधौ प्रधानं तदर्थं हि विधिः ॥ तस्य कर्मणः कर्तृकरणकालदेशदेवतामन्त्रतन्त्रफलादिबहुपरिकरयुक्तत्वेऽपि कर्ता साधनद्रव्यमित्युभयं प्रधानम् कर्ता विहितसाधनेन कर्म कुर्यादिति कर्मणः संग्रहः ॥ विस्तरेण प्रतिपादने सर्वोऽपि परिकरः प्रतिपाद्यते तत्रतत्र ॥ अतः संग्रहे तदनुक्तिः ॥ अतः सात्विकादिभेदान् ज्ञात्वा सात्विकेन ज्ञानेन सात्विकः कर्ता भूत्वा सात्विकं कर्म कुरु ॥ नियोज्यावस्थः विधिशेषः परिज्ञाता ॥ अनुष्ठानावस्थः कर्मशेषः कर्ता इति विवेकः ॥ १८ ॥

अर्जुनः ॥ ज्ञानज्ञेयज्ञातृयुक्त एको विधिः कथं सात्विकराजसतामसभेदेन त्रिप्रकाराणि कर्माणि कारयति ॥ वद ॥

कृष्णः ॥ ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ॥
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥

ज्ञानमिति ॥ ज्ञानं कर्म च कर्ता च गुणानां भेदः गुणभेदः तस्मात् गुणभेदतः हेतोः त्रिधैव त्रिभिः प्रकारैः गुणानां सत्वादीनां संख्यानं सम्यक् प्रतिपादनं यस्मिन् तत् गुणसंख्यानं सांख्यशास्त्रं तस्मिन् प्र सम्यक् उच्यते ॥ तान्यपि यथावत् शृणु ॥ १९ ॥

ज्ञानं त्रिधा सम्यक् उच्यते ज्ञेयशब्दोक्तं कर्म त्रिधा सम्यक् उच्यते ॥ परिज्ञातृशब्दोक्तः कर्ता त्रिधा सम्यक् उच्यते ॥ कुत इति चेत् सत्वादिगुणभेदात् सात्विकादिभेदेन त्रिधा उच्यते ॥ ज्ञानज्ञेयज्ञातॄणां सात्विकादिभेदेन त्रैविध्यात् तद्युक्त एको विधिः त्रिप्रकाराणि कर्माणि कारयति ॥ कुत्रोच्यते इति चेत् ॥ गुणसंख्याने १ गुणानां तत्कार्याणां च सम्यक् प्रतिपादके वैष्णवे कापिले च सांख्यशास्त्रे गुण-कार्यगणनस्थले ॥ ॥ त्रिधैव न तु प्रकारान्तरमस्ति॥ तान्यपि भेदजातानि ज्ञानादीनि यान्यपि यथावत् शृणु ॥ २ गुणतत्कार्यभेदप्रतिपादने ३ मया सम्यगुच्यते श्रुत्वा तत्र निष्ठां कुरु ॥ १९ ॥

---

१. गुणाः सम्यक् ख्यायन्ते प्रतिपाद्यन्ते अत्रेति गुणसंख्यानं तस्मिन् ॥ २. गुणसंख्याने इत्यस्य अर्थान्तरम् ॥ ३ प्रोच्यते इत्यस्य आवृत्तिः ॥

अर्जुनः ॥ अवहितोऽस्मि ज्ञानस्य सात्विकादीन् भेदान् ब्रूहि ॥

कृष्णः ॥ सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥

अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ॥ २० ॥

**सर्वभूतेष्विति** ॥ विभक्तेषु भिन्नेषु सर्वाणि च तानि भूतानि च सर्वभूतानि तेषु स्थितं न विभक्तं अविभक्तं न व्येति इति न विद्यते व्ययः यस्य इति वा अव्ययं एकं भवति सदा विद्यत इति भावं शाश्वतं परब्रह्माख्यं वस्तु आत्माख्यं वस्तु वा येन ज्ञानेन ईक्षते जानाति तत् ज्ञानं सात्विकं विद्धि ॥ २० ॥

**द्वै** ॥ विभक्तेषु भिन्नेषु सर्वेषु भूतशब्दितेषु चेतनेषु जडेषु च स्थितं तथाऽपि अविभक्तं विभागशब्दितभेदरहितं स्थानभेदप्रयुक्तभेदरहितम् ॥ [१] 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति सूत्रम् ॥ एकं स्वसजातीयद्वितीयरहितम् ॥ अव्ययं स्थाननाशप्रयुक्तनाशरहितम् ॥ [२] भावं [३] 'अविनाशि तु तद्विद्धी'त्युक्तरीत्या स्वाभाविकनाशनैमित्तिकनाशरहितं परब्रह्म नारायणाख्यं येन ज्ञानेन विषयीकरोति तज्ज्ञानं सात्विकं जानीहि ॥ येन ज्ञानसाधनेन शास्त्रेण जानाति तत् ज्ञानसाधनं वेदादिशास्त्रं सात्विकं जानीहि इति च ॥ यथावत् परब्रह्मविषयकं ज्ञानं सात्विकं तादृशज्ञानजनकं शास्त्रं च सात्विकम् ॥ [४] 'अथ परा यया तदक्षरमधिगम्यते' इति श्रुतिः ॥ अत्र विभक्तेषु सर्वभूतेष्वित्युक्त्या जीवानां जडानां च परस्परं भेदः जीवानां परस्परं भेदः जडानां परस्परं भेदश्च ॥ एतेषु स्थितमित्याधाराधेयभावोक्त्या जीवेश्वरभेदः जडेश्वरभेदश्च इति पञ्च भेदाः उक्ता भवन्ति ॥ विभक्तेष्वित्यनेन प्रकारभेदबोधनात् जीवजडानां तारतम्यम् ॥ एकमित्युक्त्या जीवात्मपरमात्मनोस्तारतम्यं चोक्तं भवति ॥ तथा च पञ्चभेदतारतम्यविषयकं ज्ञानं सात्विकम् ॥

**अ** ॥ परस्परं भिन्नेषु अव्यक्तादिस्थूलान्तेषु स्थावरजङ्गमात्मकेषु स्थितं तथाऽपि अविभक्तं भेदरहितं एकं अव्ययं सर्वभूतनाशेऽपि नाशरहितं भावं भवति सर्वदा विद्यते इति व्युत्पत्त्या भावशब्दितं उपाधिसंबन्धतदभावाभ्यां जीवात्मपरमात्मशब्दितं

---

१. ३. २. ११. २. भवति सदा विद्यते इति भावं नाशरहितम् ॥ ३. २. १७. ४. मु १. ५.

सगुणनिर्गुणशब्दितं च परब्रह्माख्यं वस्तु येन सर्वं ब्रह्म ब्रह्मैवाहमित्याकारकेण अद्वैतात्मदर्शनेन ज्ञानेन यथावज्जानाति तत् अद्वैतज्ञानं सात्विकं जानीहि ॥ विभक्तेषु सर्वभूतेषु विद्यमानं अविभक्तं अव्ययं जीवात्मरूपं वस्तु एकं परस्परं भेदरहितं परब्रह्मणा च भेदराहितं येन पश्यतीति वा ॥ १ 'समं सर्वेषु भूते'ष्वित्यादिनोक्तरीत्या सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मेति यत् ज्ञानं तत् २ सात्विकम् ॥

वि ॥ सितासितहृस्वदीर्घादिविभागवत्सु ब्राह्मणाद्यनेकाकारेषु ब्राह्मणादिभेदभिन्नेषु ब्रह्मचारिगृहस्थादिभेदभिन्नेषु विकारस्वभावेषु शरीरेषु स्थितान् आत्माख्यान् ३ पदार्थान् ज्ञानाकारतया ४ 'एकजातीयान् ब्राह्मणत्वादिजातिविभागासितत्वादिगुणविभागरहितान् नाशरहितान् ५ विकाररहितान् फलसंयोगानर्हांश्च॥ येन ज्ञानेन विषयीकरोति तज्ज्ञानं सात्विकं जानीहि ॥ यथावदात्मतत्वज्ञानं सात्विकम् ॥ २० ॥

कृष्णः ॥ पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ॥
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥२१॥

पृथक्त्वेनेति ॥ यत् ज्ञानं सर्वेषु भूतेषु स्थितं भावं पृथक् भावः पृथक्त्वं तेन भिन्नत्वेन तु एव वेत्ति ॥ नाना अनेके ते च ते भावाः जीवाश्च नानाभावाः तान् पृथक् विधा प्रकारः येषां ते पृथग्विधाः तान् पृथग्विधान् वेत्ति ॥ सर्वेषु भूतेषु पृथक्त्वेन स्थितान् नानाभावान् पृथग्विधान् वेत्ति ॥ इति वा ॥ तत् ज्ञानं राजसं विद्धि ॥ २१ ॥

---

१. १३. २८. २. सर्वभूतेषु विद्यमानं एकं परमात्मतत्वं येन ईक्षते तत्परमात्मविषयकं ज्ञानं सात्विकम् ॥ ३. भावमिति समुदायाभिप्रायमेकवचनम् ॥ ४. एकमिति जात्येकत्वविवक्षया॥ ५. विकाररहित्यार्थकाव्ययशब्दार्थोऽयम् ॥ विकारश्च फलादिसङ्गरूपः ॥ सङ्गः संबन्धः अनुभवः इत्यर्थः ॥

द्वै ॥ यत् ज्ञानं सर्वेषु १ भूतेषु स्थितं भावं परमात्मानं तेभ्यः पृथक्त्वेन तु भिन्नत्वेनैव जानाति ॥ विषयीकरोति ॥ एवकारार्थकतुशब्देन परमात्मनो भूतेभ्यो भेदमेव जानाति ॥ परमात्मनः स्वातन्त्र्यादौ सर्वरूपेष्वभेदादौ सर्वावयवगुणक्रियाद्भिरभेदादौ च संशयात्मकमिति लभ्यते ॥ २ नानाभावान् परमात्मनः परस्परं च भिन्नान् जीवजडात्मकान् पदार्थान् पृथग्विधान् भिन्नप्रकारान् परमात्मना परस्परं च तारतम्योपेतान् वेत्ति तत् ज्ञानं राजसं विद्धि ॥ ईश्वरादन्यत्र यथार्थज्ञानरूपत्वेऽपि ईश्वरे संशयरूपत्वात् ज्ञानमिदं राजसम् ॥ तुशब्दः सात्विकादस्यापकर्षसूचकः ॥ यज्ज्ञानं तज्ज्ञानमिति ज्ञानपदस्य द्विः प्रयोगः महताऽऽयासेन संपादितमपि ज्ञानमीदृशं चेत् राजसं भवतीत्यनुक्रोशसूचनाय ॥

अ॥ सर्वेषु भूतेषु शरीरेषु पृथक्त्वेन भेदेन स्थितान् प्रतिशरीरं भिन्नान् नानाभावान् अनेकान् जीवान् पृथग्विधान् सुखदुःखादिवैचित्र्येण परस्परविलक्षणान् यत् ज्ञानं वेत्ति॥ करणे कर्तृत्वोपचारः॥ येन ज्ञानेन वेत्ति॥ पृथक्त्वेन भेदेन स्थितेषु भिन्नेषु शरीरेषु स्थितान् नानाभावान् प्रतिशरीरं भिन्नान् जीवानिति वा ॥ तत् ज्ञानं राजसं जानीहि ॥ एकजीववादिनामद्वैतिनां मते प्रतिशरीरमात्मभेदज्ञानस्य तामसत्वावश्यंभावात् कथं राजसत्वोक्तिरिति चेत् ॥ भेदास्तावदौपाधिका विद्यन्त एव ॥ तथा ३ अनौपाधिकत्वेन ज्ञानं राजसम् ॥

त्रि ॥ सर्वेषु भूतेषु आत्माख्यान् अनेकान् भावान् ब्राह्मणाद्याकारपृथक्त्वेन ब्राह्मणादिजातिभेदेन युक्तान् पृथग्विधान् सितासितह्रस्वदीर्घादिपृथग्भावयुक्तान् फलसंयोगयोग्यांश्च ॥ यज्ज्ञानं वेत्ति तज्ज्ञानं राजसं विद्धि ॥ प्रतिशरीरं आत्मभेदावगाहनेन सात्विकत्वस्य जातिभेदगुणभेदावगाहनेन तामसत्वस्य च सत्वात् राजसमिदं ज्ञानम् ॥ २१ ॥

---

१. अधिकरणसप्तमी ॥ विषयसप्तमी ॥ भूतेषु विषये पृथक्त्वेन ज्ञानम् ॥ तस्यैव विवरणं नानाभावानित्यादि ॥ इति केचित् ॥ २. नाना इति भिन्नं पदम् ॥ भावान् नाना भिन्नान् वेत्तीति वा ॥ ३. आत्मनां परस्परं भेदः तेषामीश्वरात् भेदः तेभ्यः ईश्वरात् अन्योन्यतश्चाचेतनवर्गस्य भेदः इत्यनौपाधिकभेदपञ्चकज्ञानं राजसमेव इत्यर्थः ॥

कृष्णः ॥ यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ॥
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

यत्त्विति ॥ यत् ज्ञानं तु एकस्मिन् कार्ये कृत्स्नेन तुल्यं कृत्स्नवत् कृत्स्ने इव कृत्स्नवत् सक्तं न विद्यते हेतुः यस्य तत् अहेतुकं तत्वरूपोऽर्थः तत्वार्थः तत्वार्थः अस्यास्तीति तत्वार्थवत् न तत्वार्थवत् अतत्वार्थवत् न तत्वार्थः अतत्वार्थः तद्वत् अतत्वरूपोऽर्थः अतत्वार्थः तद्वत् इति वा अल्पं च तत् ज्ञानं तामसं ज्ञानं उदाहृतं उक्तम् ॥ २२ ॥

यज्ज्ञानं, बद्धो मुक्तत्वेनान्यथा क्रियते इति कार्यो जीवः ॥ तस्मिन् कार्ये जीवे विषये ब्रह्मवत् ब्रह्मणा तुल्यं यथा तथा सक्तं संबद्धं यथा ब्रह्म स्वं ब्रह्मेति ब्रह्मत्वेन जानाति ॥ १ 'तदात्मानमेवावेदहं ब्रह्मास्मी'ति श्रुतिः ॥ तथा जीवं ब्रह्मेति ब्रह्मत्वेन जानाति विपर्यीकरोति ॥ तत्, यज्ज्ञानं कार्ये जीवे कृत्स्नवत् सकलजगद्वत् सक्तम् ॥ जगतीव जगद्वत् ॥ यथा रजते रजतमिदमिति रजतत्वप्रकारकं ज्ञानं जायते ॥ तथा शुक्तौ रजतमिदमिति रजतत्वप्रकारकं ज्ञानं जायते ॥ तद्वत् यथा जगति जगदिदमिति जगत्त्वप्रकारकं ज्ञानं जायते ॥ तथा जीवे जगदिदमिति जगत्त्वप्रकारकं ज्ञानं जायते ॥ शुक्तौ रजतस्येव जीवे सर्वस्यापि जगत आरोपितत्वात् तत्, यज्ज्ञानं एकस्मिन् कार्ये जीवे जगद्वत् सक्तम् ॥ एतदुक्तं भवति सर्वं जगत्कल्पितं न तु जीवभेदः ॥ एकस्याकाशस्य यथा अनेकोपाधिसंबन्धः तथा एकस्यैव परब्रह्माभिन्नस्यात्मनः अनेकशरीरसंबन्धः ॥ एकमेवात्मानं सर्वजगत्त्वेन जानाति ॥ एकजीवज्ञाने सर्वमपि ज्ञातं भवतीति जानाति ॥ तत्, एककार्ये कृत्स्नवत्सक्तत्वसूचिताभेदासंभवमूलकज्ञानापकर्ष-सूचकमहेतुकम् ॥ अहेतुकं हेतुशून्यं युक्तिशून्यं अतत्त्वार्थयुक्तम् अज्ञानांशबहुलत्वात् अल्पं च ॥ अल्पयति अल्पान् करोतीत्यल्पम् ॥ अल्पतापादकं अनर्थावहमिति यावत् ॥ इति वा ॥ तादृशं ज्ञानं तामसं तमःप्रधानकम् ॥ कृत्स्नवदेकस्मिन् कार्ये सक्तस्य ज्ञान-

---

१. बृ. १. ४. १०.

स्य अहेतुकत्वातत्त्वार्थवत्त्वाल्पत्वाव्यभिचारात् अहेतुकमित्यादि पुनरुक्तमिति चेत् ॥ अहेतुकादित्रयं प्रत्येकं तामसम् ॥ उक्तरूपमिथ्याज्ञानस्वरूपविशेषसहितं चेदति- तामसं इति वक्तुमेवमुक्तम् ॥ उक्तरीत्या कृत्स्नवदेकस्मिन् कार्ये सक्तमिति त्रीणि अहेतुकादीनि त्रीणीति षड्विधानि ज्ञानानि प्रत्येकं तामसानीति वा ॥ एवं योजनायां पुनरुक्तिशङ्कैव नास्ति ॥ राजसतामसज्ञाने विहाय सात्विकमेव ज्ञानं संपादनीयम् ॥ अतस्त्वं सात्विकमेव ज्ञानं संपादय ॥ २२ ॥

अ ॥ यत् ज्ञानं, एकस्मिन् कार्ये देहे प्रतिमादौ च कृत्स्नवत् कृत्स्नः पूर्णः जीवः परमात्मा च तस्मिन्निव सक्तम् ॥ यथा जीवेश्वरादिविषयकं जीवत्वेश्वरत्वप्रकारकं तथा देहविषयकं जीवत्वप्रकारकं प्रतिमादिविषयकं ईश्वरत्वप्रकारकं अहेतुकं अतत्त्वार्थ- वत् अल्पविषयकं अल्पफलकं च तत् ज्ञानं देह एवात्मेति ज्ञानं पाषाणदार्वादिनिर्मित- प्रतिमादिरेवेश्वर इति ज्ञानं देहपरिमाणः आत्मा इति ज्ञानं पाषाणदार्वादिनिर्मितप्रति- मापरिमाणः ईश्वर इति ज्ञानं च तामसमिति बुधैः कथितम् ॥ अद्वैतात्मदर्शनं सा- त्विकं नित्यविभुविभिन्नात्मदर्शनं राजसं अनित्यपरिच्छिन्नात्मदर्शनं तामसमिति विवेकः ॥ २२ ॥

त्रि ॥ यत् ज्ञानं, एकस्मिन् अत्यल्पफले भूतप्रेतगणाद्याराधनरूपे कार्ये कृत्स्न वत् कृत्स्नं पूर्णं पूर्णफलहेतुभूतभगवदाराधनरूपे कर्मणीव सक्तं येन ज्ञानेन अत्यल्प- फलं भूताद्याराधनं महाफलभगवदाराधनतुल्यं जानाति ॥ अहेतुकं तथाविधभ्रमो हेतुरहितम् ॥ अतत्त्वार्थवत् अल्पफलं कर्म महाफलं जानातीत्यतत्त्वार्थयुक्तं राज सज्ञानवत् आत्मनि पृथक्त्वादियुक्ततया मिथ्याभूतार्थयुक्तं च भूताद्यल्पवस्तुविषय- कत्वात् खद्योतप्रकाशवत् स्वरूपतोऽल्पं अल्पफलं च तत् ज्ञानं तामसं तत्त्वज्ञैरुक्तम्॥ त्वं तु भगवदाराधनहेतुभूतं सात्विकज्ञानमेव संपादय ॥ २२ ॥

अर्जुनः ॥ कर्मणः सात्विकादिभेदान् ब्रूहि ॥

कृष्णः ॥ नियतं सङ्गरहितमरागद्वेषतः कृतम् ॥
अफलप्रेप्सुना कर्म यत्तत्सात्विकमुच्यते ॥ २३ ॥

नियतमिति ॥ नियतं विहितं नित्यमिति वा सङ्गेन रहितं सङ्गरहितं रागश्च द्वेषश्च रागद्वेषौ तयोरभावः अरागद्वेषं तस्मात् अरागद्वेषतः कृतं न रागद्वेषाभ्यां कृतं इति वा न विद्येते रागश्च द्वेषश्च रागद्वेषौ यस्य सः अरागद्वेषः तेन अरागद्वेषतः अरागद्वेषेण कर्त्रा कृतं प्राप्तुमिच्छुः प्रेप्सुः फलं प्रेप्सुः फलप्रेप्सुः न फलप्रेप्सुः अफलप्रेप्सुः तेन न फलं अफलं प्रेप्सुः तेन वा कर्त्रा कृतं कर्म यत् तत् सात्विकं कर्म उच्यते ॥ २३ ॥

वर्णाश्रमानुरोधेन विहितं अहं ममेत्याद्यभिमानरहितम् प्राप्तुमिच्छुः प्रेप्सुः फलप्राप्तिकामनारहितेन कर्त्रा कृतं अरागद्वेषतः रागद्वेषयोरभावेन रागद्वेषत्यागेन १ कृतम् ॥ कीर्तिधनादिरागेण अकीर्त्यादिद्वेषेण च पुत्रादिरागेण शत्र्वादिद्वेषेण च न २ कृतमिति वा॥ न विद्येते रागद्वेषौ यस्य सः अरागद्वेषः तेन तृतीयार्थे तसिलप्रत्ययः॥ तादृशेन कर्त्रा कृतमिति वा ॥ ३ फल्गुतया लीयते इति फलं फल्गु अनात्मवस्तु न फलं अफलं परिपूर्णं आत्मवस्तु तत्प्रेप्सुना कृतं इति वा ॥ यत्कर्म तत् सात्विकं कर्म विद्वद्भिरुच्यते ॥ २३ ॥

कृष्णः ॥ यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ॥
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥

यत्त्विति ॥ काम्यत इति कामः फलं तं इप्सुः कामेप्सुः तेन कामेप्सुना अहङ्कारेण सहितः साहङ्कारः तेन साहङ्कारेण वा बहुलः आयासः यस्मिन् तत् बहुलायासं यथा तथा पुनः च यत् कर्म क्रियते तत्तु राजसं कर्म उदाहृतं उक्तम् ॥ २४ ॥

काम्यते इति कामः फलं कामेप्सुना फलप्राप्तिं कामयमानेन अहङ्करोमीति-कर्तृत्वानुसन्धानवता च कर्त्रा रागातिशयेन कष्टसाध्ये कर्मणि प्रवृत्तत्वात् बह्वाया-

---

१. कृतमित्यस्य पूर्वोत्तराभ्यामन्वयः ॥ २. रागद्वेषाभ्यां कृतं यत् तद्विपरीतम् ॥ अ इति भिन्नं पदं नेत्यर्थकम् ॥ फलितोर्थस्सर्वो ॥ ३. अ इति च ॥

सयुक्तं यत्कर्म क्रियते तत्कर्म राजसमुदाहृतम् ॥ तुशब्दो राजसत्वादस्य कर्मणोऽपकर्षं सूचयति ॥ साहंकारेण च बहुलायासं चेति १वा पुनः शब्दो चार्थे॥ कामेप्सुना कृतं राजसम् ॥ अकामेप्सुना कृतत्वेऽपि २साहङ्कारेण कृतं चेत् राजसम् ॥ अकामेप्सुना निरहङ्कारेण च कृतत्वेऽपि बहुलायासं चेत् राजसम् ॥ २४ ॥

कृष्णः ॥ अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ॥
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

अनुबन्धमिति ॥ अनु पश्चात् बध्यत इति अनुबन्धः पश्चाद्भावि फलं क्षयं च अनुबन्धं पश्चाद्भाविनं क्षयं इति वा ॥ हिंसां पुरुषस्य भावः कर्म वा पौरुषं सामर्थ्यं च अनवेक्ष्य अनालोच्य मोहात् यत् कर्म आरभ्यते क्रियते तत् तामसं कर्म उच्यते ॥ २५ ॥

अनु पश्चात् कर्मकरणानन्तरं बध्यते [illegible] इत्यनुबन्धः पश्चाद्भावि ३अशुभरूपं फलं तं च क्षयं कर्मणि क्रियमाणे कृते च जायमानं धनक्षयं बलक्षयं आयुःक्षयं पुण्यक्षयं च हिंसां कर्मणा परस्य जायमानां हिंसां च पौरुषं प्रकृतकार्यनिर्वहणपर्याप्तं स्वसामर्थ्यं च अपर्यालोच्य मदेदं साध्यं अनेनाहं सुखी स्यां अतोऽहं करोमीति मोहात् यत्कर्म आरभ्यते क्रियते तत्कर्म तामसमुदाहृतम् ॥ आरभ्यत इत्युक्त्या अनुबन्धादेरनालोचनादारभ्यते [illegible] समाप्यतेति सूच्यते ॥ त्वं राजसतामसे कर्मणी विहाय सात्त्विकमेव कर्म कुरु ॥ २५ ॥

अर्जुनः ॥ कर्तुः सात्त्विकादिभेदान् ब्रूहि ॥

---

१. पुनः शब्दः पादपूरणार्थः ॥ इति केचित् ॥ अप्यर्थे ॥ साहङ्कारेणापि च इति केचित् ॥ पुनः पुनः इत्यर्थः ॥ यावत्कामनं काम्यार्थ [illegible] ॥ इत्यन्ये ॥ २. साहङ्कारेण कृतं राजसमित्युक्त्या निरहङ्कारेण तत्वज्ञानिना कृतं सात्त्विकमिति प्रतीयते तेन च तत्वज्ञानिनः कर्मकर्तृत्वं प्रतीयते तच्च न युक्तम्॥ कर्मसंन्यासाधिकारित्वात्तस्येति चेत् ॥ यः अनात्मज्ञः कर्माधिकारी स इह निरहङ्कारत्वेन विवक्ष्यते न तु तत्ववित् अतो नानुपपत्तिः ॥ ३. शुभाशुभरूपं फलं इति केचित् ॥ अनुबन्धं क्षयं इति समानाधिकरणं पश्चाद्भाविनं क्षयं इत्यर्थः ॥ इति केचित् ॥

कृष्णः ॥ मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ॥

सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥

मुक्तेति ॥ मुक्तः सङ्गः येन सः मुक्तसङ्गः अहं इति वदितुं शीलमस्य अहंवादी न अहंवादी अनहंवादी धृतिश्च उत्साहश्च धृत्युत्साहौ ताभ्यां सम्यक् अन्वितः युक्तः धृत्युत्साहसमन्वितः सिद्धिश्च असिद्धिश्च सिद्ध्यसिद्धी तयोः निर्गतः विकारः यस्मात् सः निर्विकारः कर्ता सात्त्विकः कर्ता उच्यते ॥ २६ ॥

सङ्गशब्दिताहङ्कारममकारफलापेक्षारहितः॥ अतएव अहंकर्ता इति वचनरहितः॥ अनहंकर्तेत्यनुक्त्वा अनहंवादीत्युक्त्या अहंममेत्यस्य सर्वथा वर्जयितुमशक्यत्वेन अहंममवादो यो त्यज्यतामिति सूचनाय॥ धृतिः अवर्जनीयदुःखसहनं धैर्यं वा उत्साहः प्रयत्नः चिकीर्षाविशेषो वा ताभ्यां सम्यग्युक्तः ॥ कालस्य सिद्धौ असिद्धौ च हर्षविषाद-रूपविकाररहितः कर्ता सात्त्विकः कर्ता उच्यते ॥ २६ ॥

कृष्णः ॥ रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ॥

हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

रागीति ॥ रागः अस्यास्तीति रागी कर्मणः फलं कर्मफलं तत् प्रेप्सुः कर्मफलप्रेप्सुः लुब्धः कृपणः हिंसा आत्मा स्वभावः यस्य सः हिंसात्मकः न शुचिः अशुचिः हर्षश्च शोकश्च हर्षशोकौ ताभ्यां अन्वितः हर्षशोकान्वितः कर्ता राजसः कर्ता परिकीर्तितः उक्तः ॥ २७ ॥

कर्मफलप्राप्तिकामः अतः रागी तत्साधने कर्मणि रागवान् रागी कीर्त्यादिकामः अतः कर्मफलप्रेप्सुः रागी विषयभोगेच्छावान् अतः कर्मफलभूतस्वर्गादिप्राप्तिकामः॥ लुब्धः आवश्यकद्रव्यव्ययस्वभावहीनः परद्रव्यापहरणेच्छुश्च ॥ १ परपीडास्वभावः ॥

---

१. भार्यापुत्रादीन् पीडयित्वा तैः कर्माणि कुर्वाणो वा ॥

बाह्याभ्यन्तरशौचहीनः द्रव्यादिशुद्धिहीनो वा ॥ सिद्ध्यसिद्ध्योः हर्षशोकाभ्यां युक्तः कर्ता राजसः कर्ता उक्तः ॥ २७ ॥

कृष्णः ॥ अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ॥
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

अयुक्तइति ॥ न युक्तः योगवान् अयुक्तः प्र प्रकृष्टः न कृतः प्राकृतः स्तब्धः अनम्रः शठः गूढविप्रियकारी निकृत्या वञ्चनेन जीवतीति नैकृतिकः अलसः आलस्यवान् विषादः मनोदौर्बल्यं अस्यास्तीति विषादी दीर्घं सूत्रं करणं सूचनं वा अस्यास्तीति दीर्घसूत्री च कर्ता तामसः कर्ता उच्यते ॥ २८ ॥

अयुक्तः भगवदर्पणादियोगरहितः मनःसमाधानरहितः शास्त्रीयकर्मायोग्यः ॥ १ प्राकृतः विद्याविहीनः पशुतुल्यः २ स्तब्धः अनम्रः ३ शठः गूढविप्रियकृत् ४ नैकृतिकः निकृतिर्वञ्चना वञ्चनया परवृत्तिच्छेदनकृत् ॥ अलसः आरब्धे कर्मणि मन्दप्रवृत्तिः विषादी मनोदौर्बल्यवान् दीर्घसूत्री चिरकारी अद्य श्वः परश्वो वा यत् कृत्वा समापयितुं शक्यं तत् पक्षेण मासेन वर्षेणापि न कुर्यात् यः सः अभिचारादिकर्म कुर्वन् परेषु ५ दीर्घकालवर्त्यनर्थपर्यालोचनशीलो वा ॥ परकृतं दोषं दीर्घकालगतमपि नवमिव सूचयन् वा कर्ता तामस उच्यते ॥ कर्तुः सात्विकादिभेदान् पर्यालोच्य राजसतामसौ भेदौ विहाय सात्विकः कर्ता भव ॥ २८ ॥

अर्जुनः ॥ सात्विकेन ज्ञानेन सात्विकं कर्म सात्विकेन कर्त्रा कर्तव्यमित्युक्तम् ॥ ज्ञानकर्मकर्तॄणां सात्विकता केन स्यात् बुद्ध्या स्यादिति चेत् ॥ बुद्धिमन्तोऽप्यसात्विका दृश्यन्ते तेषां ज्ञानकर्मणी अपि असात्विके दृश्येते॥ कथमिदम्॥ बुद्धौ सात्विकादिभेदाः सन्ति तत्र सात्विकया बुद्ध्या ज्ञानादीनां सात्विकता संपद्यते ॥ इति चेत् सिद्ध्यसिद्ध्योर्निर्विकारः इत्युक्तम् कथं तद्घटते सति धैर्ये तद्घटते॥ अत एवोक्तं मया॥

---

१. भगवद्भक्त्यादिना प्र प्रकृष्टत्वेन न कृतो वा ॥ २. अनारम्भशीलो वा ३. अभिचारादिकर्मकृत् वा ४. नैष्कृतिक इति पाठान्तरम् ॥ ५. सूत्र सूत्रणे इति धातुः ॥ सूत्रणं करणं चिन्तनं सूचनं वा ॥

१ 'समदुःखसुखं धीरं' इति ॥ इति चेत् धीरा अप्यसात्विका दृश्यन्ते कथमिदं ॥ धृतिशब्दिते धैर्ये सात्विकादिभेदाः सन्ति ॥ तत्र सात्विक्या धृत्या निर्विकारत्वादिकं संपद्यते॥ इति चेत् किं बुध्देः धृतेश्च सात्विकादिभेदाः सन्ति सन्ति इति चेत् ॥ बुद्धेः धृतेश्च तान् भेदान् ब्रूहि ॥

कृष्णः ॥ बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ॥
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥

बुध्देरिति ॥ हे धनञ्जय अर्जुन बुध्देः धृतेश्च गुणानां भेदः गुणभेदः तस्मात् गुणभेदतः तिस्रः विधाः प्रकाराः यस्य सः तं त्रिविधं पृथक् भावः पृथक्त्वं तेन मया प्र सम्यक् उच्यमानं भेदं शेषस्य अभावः अशेषं तेन शृणु ॥ अशेषेण उच्यमानं पृथक्त्वेन शृणु ॥ पृथक्त्वेन गुणभेदतः त्रिविधं मया उच्यमानं भेदं अशेषेण शृणु ॥ इति वा ॥ २९ ॥

बुध्देः धृतेश्च पृथक्त्वेन प्रत्येकं गुणतः सत्वादिगुणभेदेन त्रिविधं भेदं अशेषेण मया सम्यक् उच्यमानं शृणु ॥ पृथक्त्वेन मया उच्यमानमशेषेण शृणु ॥ निरवशेषं मयोच्यमानं अशेषेण पृथक्त्वेन हेयोपादेयविवेकेन शृणु ॥ एवंप्रकारेण सात्विकादिभेदोक्तेस्समाप्तिरस्ति नवेति मा शङ्किष्ठाः ॥ बुद्धेः धृतेश्चैव १ भेदा उच्यन्ते नान्यस्येति सूच्यते ॥ धनञ्जयेत्यनेन दिग्विजयेन मानुषदैवधनवत् अन्तःशत्रुजयेन शमादिधनं च त्वया संपादनीयमिति सूचितं ॥ तदवधारय ॥ २९ ॥

अर्जुनः॥ अवहितोऽस्मि बुद्धेस्सात्विकादिभेदान् ब्रूहि ॥

कृष्णः ॥ प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ॥
बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ सात्विकी ॥ ३० ॥

---

१. बुद्धिधृती अन्तःकरणवृत्तिविशेषौ ज्ञानं तु वृत्तिसामान्यम् ॥ अतो न पुनरुक्तिः ॥ ज्ञानं वृत्तिः बुद्धिस्तु वृत्तिमदन्तःकरणम् ॥ अतो न पुनरुक्तिः ॥ अन्तः करणोपहितश्चिदाभासः कर्ता अन्तःकरणं तूपाधिमात्रं अतः कर्त्रा न पुनरुक्तिः ॥ चि ॥ अनुष्ठानदशाकालिकमनुसन्धानं ज्ञानं तद्धेतुभूतः ततः पूर्वभावी शास्त्रादिजन्योऽध्यवसायो बुद्धिः अतो न पुनरुक्तिः ॥

**प्रवृत्तिमिति** ॥ हे पार्थ या बुद्धिः प्रवृत्तिं च निवृत्तिं च कार्यं च अकार्यं च कार्याकार्ये भयं च अभयं च भयाभये बन्धं मोक्षं च वेत्ति जानाति सा बुद्धिः सात्विकी ॥ ३० ॥

प्रवृत्तिं संसारप्रवृत्तिहेतुभूतं काम्यकर्ममार्गं निवृत्तिं संसारनिवृत्तिहेतुभूतं अकाम्यकर्ममूलकज्ञानमार्गं तत्र मार्गद्वये १ कर्तव्यं अकर्तव्यं च कर्तव्यस्य करणा २ द्भयं अकर्तव्यस्य करणाद्भयं प्रवृत्तिकर्मणा संसारबन्धं निवृत्तिकर्मणा बन्धान्मोक्षं च या वेत्ति विषयीकरोति यया बुद्ध्या यथावत् जानाति ॥ उत्तरत्र अयथावदिति विपरीतानिति च वक्ष्यमाणत्वात् ॥ कर्तव्ये प्रवृत्तिं अकर्तव्यान्निवृत्तिं तदर्थं कर्तव्यं विहितं अकर्तव्यं निषिद्धं प्रवृत्तिनिवृत्यर्थं भयाभये बन्धमोक्षौ च या वेत्ति ॥ भयाभययोः बन्धमोक्षयोश्च स्वरूपमात्रज्ञानं न प्रयोजनाय कल्पते ॥ अतः भयं भयकारणं अभयं अभयकारणं बन्धं ३ बन्धकारणं मोक्षं मोक्षकारणं च या वेत्ति ॥ प्रवृत्तिं विहितं धर्मं निवृत्तिं निषिद्धमधर्मं च देशकालाद्यानुकूल्यानानुकूल्याभ्यां कर्तव्यं त्यक्तव्यं च या वेत्ति सा बुद्धिः सात्विकी ॥ इयमेव बुद्धिरखिलैः संपाद्या ॥ इमामेव त्वं संपादय ॥ परमसात्विकयाः पृथायाः पुत्रस्य तव इयमेव बुद्धिस्संपत्स्यते ॥३०॥

कृष्णः ॥ यया धर्ममधर्मं च कार्यं चाकार्यमेव च ॥
अयथावत्प्रजानाति बुद्धिस्सा पार्थ राजसी ॥ ३१ ॥

**ययेति** ॥ हे पार्थ यया बुद्ध्या धर्मं न धर्मः अधर्मः तं च कार्यं च न कार्यं अकार्यं चैव न यथावत् अयथावत् प्रजानाति सा बुद्धिः राजसी ॥ ३१ ॥

---

१. अ. कार्याकार्यशब्दौ करणाकरणलक्षकौ ॥ प्रवृत्तिमार्गे करणं निवृत्तिमार्गे अकरणम् ॥ कार्यं र[illegible]न्ति अकार्यं निर्यासितव्यं इति वा ॥ २. अ. प्रवृत्तिमार्गे भयं अज्ञानं निवृत्तिमार्गे अभयं ज्ञानं भयं दुःखं अभयं सुखम् ॥ इति वा ॥ वि ॥ भगवदाज्ञाऽतिवृत्तिर्भयम् तदनुवृत्तिरभयं बिभेत्यस्मादिति भयमिति व्युत्पत्तिः ॥ ३ वि ॥ बन्धयाथात्म्यं मोक्षयाथात्म्यं च ॥

१धर्मं अधर्मं च कार्यं अकार्यं चैव पूर्वोक्तं या बुद्धिः अयथावत् अवैपरीत्येन जानाति॥ अभक्षन्यायाद्यथावदेव न जानाति किंतु यथावदयथावच्च जानाति ॥ किंचि यथा वत् किंचिदयथावत् ॥ इदमेवं वा एवं वा इति संदिग्धं जानाति सा बुद्धिः राजसी॥ पार्थोऽसि अतः इयं बुद्धिस्तव नोचिता परिहरेणाम् ॥ एवकारेण बन्धमोक्षौ अयथाव-दपि न जानातीति सूच्यते ॥ ३१ ॥

कृष्ण. ॥ अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ॥
सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ तामसी ॥ ३२ ॥

अधर्ममिति ॥ हे पार्थ या बुद्धिः तमसा तमोगुणेन आवृता सती अधर्मं धर्मं इति मन्यते ॥ धर्मं अधर्मं इति मन्यते ॥ सर्वे च ते अर्थाश्च सर्वार्थाः तान् विपरीतान् च एव मन्यते ॥ सा बुद्धिः तामसी ॥ ३२ ॥

या बुद्धिः तमसा आवृता सती अधर्मं धर्म २मिति मन्यते ३ धर्मं अधर्ममिति मन्यते ॥ यथावत्स्वरूपं ज्ञातव्यान् सर्वान् ४अर्थान् विपरीता ५नेव जानाति सा बुद्धिः तामसी पार्थोऽसि दूरतस्त्यजैनाम् ॥ सर्वार्थान् विपरीतांश्चेत्येव पूर्तौ अधर्मं धर्ममिति पुनरुक्तिः धर्माधर्मयोर्यथावज्ज्ञानमावश्यकं विपरीतज्ञानं तु महानर्थ-हेतुत्वाद्दूरतः परिहरणीयमिति सूचनाय॥ तामसीत्यनेनैव तमोमूलत्वसिद्ध्या तमसा-ऽऽवृतेति किमर्थमिति चेत् अन्धकारेण दृष्टेरिव तमोगुणेन बुद्धेः ग्रहणशक्तिः प्रतिब-ध्यते इति तमोगुणस्य परमहेयत्वज्ञापनाय तमसाऽऽवृतेत्युक्तिः ॥ राजस्यां बुद्धौ असमग्रवेदनं तामस्यां बुद्धौ अन्यथावेदनमिति भेदः ॥ राजस्यां बुद्धौ संशयः ताम स्यां तु विपर्यय इति भेदः ॥ राजस्यां बुद्धौ प्रकारान्यथात्वं शङ्खः पीत इति भ्रमवत् ॥ तामस्यां तु प्रकारिण्यप्यन्यथात्वं शुक्तिरिदं रजतमिति भ्रमवत् ॥ तथा च

१. ध्रियतेऽनेनेति व्युत्पत्त्या धर्मशब्दः प्रवृत्तिनिवृत्त्युभयधर्मपरः ॥ धर्मं पूर्वोक्तं द्विविधं धर्मं अधर्मं तद्विपरीतम् ॥ धर्माधर्मौ अदृष्टार्थौ कार्याकार्ये दृष्टार्थे इति भेदः ॥ २. धर्मशब्दस्य नपुंसकत्वा-भिप्रायेण धर्ममिति मन्यत इति युक्तम् ॥ ३. धर्मं अधर्ममित्यन्वयः ४. दृष्टप्रयोजनान् ज्ञेयपदार्थान् इति केचित् ॥ ५. च एवार्थे ॥

'१पापमेवाश्रयेदस्मान्'॥ २'नरके नियतं वासो भवती'ति या बुद्धिस्तव सा तामसी ॥ ३ 'श्रेयो भोक्तुं भैक्षमपीह लोके' ॥ ४ 'न चैतद्विद्मः कतरन्नो गरीयः' इति या बुद्धिः सा राजसी ॥ परिहृत्येमे ५ बुद्धी युद्धं परमो धर्म इति सात्विकीं बुद्धिं समादय ॥ ३२ ॥

अर्जुनः ॥ धृतेः सात्विकादिभेदान् ब्रूहि ॥

कृष्णः ॥ धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ॥
योगेनाव्यभिचारिण्या धृतिस्सा पार्थ सात्विकी ॥ ३३ ॥

धृत्येति ॥ हे पार्थ मनश्च प्राणाश्च इन्द्रियाणि च मनःप्राणेन्द्रियाणि तेषां क्रियाः मनःप्राणेन्द्रियक्रियाः योगेन न व्यभिचारिणी अव्यभिचारिणी तया अव्यभिचारिण्या यया धृत्या धारयते सा धृतिः सात्विकी ॥ ३३ ॥

योगेन भक्तियोगेन समाधियोगेन मोक्षसाधनभूतभगवदुपासनेन प्रयोजनभूतेन ६अव्यभिचारिण्या व्यभिचारो विनाभावः अविनाभूतया नियमेन योगरूपफलं साधयन्त्या योगेतरफलसङ्गरहितया यया धृत्या धैर्यप्रयत्नापरपर्यायया मनसः प्राणानां इन्द्रियाणां च क्रियाः व्यापारान् धारयते अमार्गप्रवृत्ते ७र्नियच्छति ॥ सा धृतिः सात्विकी ॥ पृथासुतस्य तव इयमेवोचिता ॥ सात्विकी धृतिः मनःप्राणेन्द्रियक्रियाणां अमार्गप्रवृत्तेर्निवर्तनद्वारा योगाख्यं फलं नियमेन साधयति ॥ अतो यत्नतस्सा संपाद्या निःश्रेयसार्थिभिरित्यर्थः ॥ ३३ ॥

---

१. १. ३६. २. १. ४४. ३. २. ५ ४. २. ६. ५ अ. बुद्धिर्द्वयमव्यवसायात्मिका न तु व्यवसायात्मिका॥ यतः सा एकविधैव न तु तस्या द्वैविध्यम्॥ उक्तं च मया॥ 'व्यवसायात्मिका बुद्धिरेके' (२.४१.)ति॥ ६. योगेन अव्यभिचारिण्येत्यन्वयः॥ अव्यभिचारिण्या विहितादन्यत्र अप्रवर्तमानया योगेन युक्तया धृत्या ॥ इति केचित् ॥ योगेन चित्तैकाग्र्येण हेतुना अव्यभिचारिण्या धृत्या ॥ इति केचित् ॥ ७. वि योगोद्देशेन प्रवृत्ताः तत्साधनभूताः मनआदीनां क्रियाः धारयति पोषयति च ॥ धारयते निरोधावस्थायां एकाग्रतावस्थायां वा अवस्थापयति इति केचित् ॥

कृष्णः ॥ यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ॥
प्रसङ्गेन फलाकांक्षी धृतिस्सा पार्थ राजसी ॥ ३४ ॥

ययेति ॥ हे अर्जुन पार्थ फलं आकांक्षतीति फलाकांक्षी सन् प्रकर्षेण सङ्गः प्रसङ्गः तेन धर्मश्च अर्थश्च कामश्च धर्मकामार्थाः तान् यया धृत्या धारयते सा धृतिस्तु राजसी ॥ ३४ ॥

फलाकांक्षी सन् यया धृत्या प्रसङ्गेन कर्तृत्वाद्यभिनिवेशरूपेण अतिशयितेन सङ्गेन धर्मकामार्थान् तत्साधनभूताः [1] मनःप्राणेन्द्रियक्रियाश्च ॥ धारयते धरति न विमुञ्चति ॥ तुशब्दो राजस्याः बुद्धेः सात्विकबुद्ध्यपेक्षया अवरत्वरूपविशेषसूचकः ॥ धर्मकामार्थान् तु एव न तु मोक्षं तत्साधनभूतमनःप्राणेन्द्रियक्रियाश्च इत्यवधारणार्थो वा ॥ प्रसङ्गेन उक्तरूपेण फलाकांक्षी सन् यया धृत्या धर्मकामार्थान् धारयते कर्तव्यतयाऽवधारयति॥ धृत्या धर्मादीन् धारयते प्रसङ्गेन कर्मणि फले च स्नेहातिशयेन फलाकांक्षी च भवति॥ धृत्या धर्मादीन् धारयते प्रसङ्गेन धर्माद्यनुष्ठानप्रसक्तौ फलाकांक्षी च भवति सा धृतिः राजसी ॥ पार्थेदमवधारय ॥ ३४ ॥

कृष्णः ॥ यया स्वप्नं भयं शोकं विषादं मदमेव च ॥
न विमुञ्चति दुर्मेधा धृतिस्सा पार्थ तामसी ॥ ३५ ॥

ययेति ॥ हे पार्थ दुष्टा मेधा बुद्धिः यस्य सः दुर्मेधाः पुरुषः यया धृत्या स्वप्नं भयं शोकं विषादं मदं चैव न विमुञ्चति ॥ सा धृतिः तामसी ॥ ३५ ॥

यया धृत्या दुष्टबुद्धिः निद्रां मदं भयशोकविषाददायिनो विषयान् तत्साधनभूतमनःप्राणेन्द्रियक्रियाश्च नैव विमुञ्चति धारयति ॥ भयदायी विषयः दुर्मानमूलप्रबलविरोधादिः ॥ शोकदायी विषयः क्रोधादिमूलकबन्धुजनकलहादिः॥ विषाददायी विषयः वृथावित्तव्ययादिः ॥ अतिनिद्रादीन् पुरुषार्थविरोधिनो विषयानेव न विमुञ्चति पुरुषार्थसाधनभूतांस्तु मुञ्चति ययेति वा॥ सा धृतिः तामसी॥ पार्थेदमवधेहि॥ परिहृत्य राजसीं तामसीं च धृतिं सात्विकीमेव धृतिं संपादय वर्धय च ॥ ३५ ॥

---

१. अनुवृत्तिः लक्षणा वा ॥

अर्जुनः ॥ पूर्वाध्याये श्रद्धायाः आहारस्य यज्ञस्य तपसः दानस्य च सात्विकादिभेदेन त्रैविध्यं अस्मिन्नध्याये त्यागस्य ज्ञानस्य कर्मणः कर्तुः बुद्धेः धृतेश्च सात्विकादिभेदेन त्रैविध्यं च त्वयाऽभिहितम् ॥ किमर्थमेषां एकादशानां उक्तरूपेण त्रैविध्यमभिहितम् ॥ प्रत्येकं राजसतामसभेदप्रहाणेन सात्विकभेदग्रहणायेति चेत् ॥ किमुभयोः प्रहाणेन एकस्य सात्विकभेदस्य ग्रहणे प्रयोजनम् ॥ सुखसाधनार्थमेव हि सर्वेषां सर्वाऽपि प्रवृत्तिः ॥ एकादशानामेषां सात्विकादिभेदैः सात्विकाः राजसाः तामसाश्च स्वस्वसुखसाधनाय प्रयतन्ते ॥ तत्र राजसतामसाभ्यां भेदाभ्यां सुखसाधनाय प्रयतमानाः राजसं तामसं च सुखं लभन्ते ॥ सात्विकभेदेन प्रयतमानास्तु सात्विकं सुखं लभन्ते ॥ अतः राजसतामससुखप्रहाणेन सात्विकसुखसाधनाय राजसतामसभेदप्रहाणपूर्वकं सात्विकभेदस्योपादेयतया सात्विकादिभेदेन प्रत्येकं त्रैविध्यकथनमिति चेत् ॥ किं सुखेऽपि सात्विकादिभेदा वर्तन्ते ॥ यदि वर्तन्ते तर्हि तान् ब्रूहि ॥

कृष्णः ॥ सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ॥ ३५॥ ॥

सुखमिति ॥ भरताः भरतवंश्याः राजर्षयः तेषां तेषु वा ऋषभः भरतर्षभः हे भरतर्षभ त्रिविधं सुखं तु इदानीं मे सकाशात् शृणु ॥ ३५॥ ॥

सुखं फलभूतं यत्साधनाय श्रद्धादीनां सात्विकादिभेदोक्त्या प्रत्येकमुपदेश इति सुखस्य सर्वापेक्षया वैशिष्ट्यद्योतकस्तुशब्दः ॥ सुखे सात्विकादिभेदा वर्तन्ते ॥ एतावता कालेन त्वया अज्ञातान् तानहमिदानीं ब्रवीमि ॥ तत् त्रिविधं सुखं इदानीं मे सकाशात् शृणु ॥ श्रुत्वा सात्विकसुखसंपादनाय यतस्व ॥ ३५॥ ॥

अर्जुनः ॥ अवहितोऽस्मि सुखस्यसात्विकादिभेदान् ब्रूहि ॥

अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

कृष्णः ॥ यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ॥

तत्सुखं सात्विकं प्रोक्तं आत्मबुद्धिप्रसादजम् ॥ ३७ ॥

अभ्यासादिति ॥ यत्र सुखे अभ्यासात् रमते ॥ दुःखस्यांतो दुःखांतः तं निगच्छति प्राप्नोति च ॥ तत् प्रसिद्धं यत् सुखं अग्रे विषमिव परिणामे अमृतं उपमा यस्य तत् अमृतोपमं ॥ आत्मा च बुद्धिश्च आत्मबुद्धी तयोः प्रसादौ आत्मबुद्धिप्रसादौ ताभ्यां जायते इति आत्मनः स्वस्य बुद्धिः तस्याः प्रसादः तस्माज्जायते इति आत्मनः

बुद्धिः आत्मविषयकं ज्ञानं तस्याः प्रसादः तस्माज्जायत इति वा आत्मबुद्धिप्रसादजं तत् सुखं सात्विकं प्र सम्यक् उक्तम् ॥ ३६ ॥ ३७ ॥

यत्र सुखे अभ्यासात् पुनः पुनरावृत्या रमते मनसो निरतिशयं उल्लासातिशयं लभते ॥ न तु राजससुख इव सद्यो रमते ॥ न तु राजससुख इव आवृत्या विरज्यते॥ राजससुखावृत्तौ तत्र विरसा भवन्ति ॥ यत्र न तथा किंतु आवृत्तावधिकं रज्यन्ति॥ यत्र सुखे आवृत्या रममाणः दुःखस्य चिरोपनतस्य तादात्विकस्य च नाशं नितरां प्राप्नोति ॥ यत्र सुखे रमणेन दुःखं नश्यति ॥ न तु राजससुख इव अन्ते दुःखमाप्नोति ॥ तत् प्रसिद्धं यत् सुखं अग्रे स्वासिद्धिसाधनसाधनानुष्ठानदशायां विषमिव मास्त्विदमिति द्वेषास्पदं भवति ॥ परिणामे अशक्यसाधनानां महता आयासेन साधितानां साधनानां परिपाके साधनपरिपाकेन स्वाविर्भावकाले अमृतोपमं अमृतमिव परमप्रीत्यास्पदं च भवति ॥ तत् सुखं सात्विकमिति सम्यगुक्तं सुखभेदविद्भिः ॥ एतादृशं सुखं केन जायते इति चेत् ॥ आत्मबुद्धिप्रसादजम् ॥ आत्मनः परमात्मनः प्रसादेन तद्धेतुकबुद्धिप्रसादेन च जायते ॥ १ आत्मनः बुद्धिः आत्मविषयकज्ञानं तस्याः प्रसादः स्वच्छता निवृत्तसकलेतरविषयत्वरूपा तेन जायते ॥ एतादृशसात्विकसुखसंपादनाय श्रद्धादिष्वेकादशसु राजसतामसभेदप्रहाणेन सात्विकभेदस्यैव स्वीकरणीयतया तद्बोधनाय प्रत्येकं सात्विकादिभेदत्रयोक्तिः ॥ अतस्त्वं सुखसाधनेषु सात्विकानेव भेदान् गृहीत्वा सात्विकमेव उत्कृष्टं महत्सुखं संपादय ॥ निरतिशयं हीदं सुखम् ॥ अतो दुर्लभम् ॥ सुखस्यास्य साधनभूतः सद्समागमो दुर्लभः मुमुक्षुत्वं ततो दुर्लभं वैराग्यं ततो दुर्लभं शमदमादिसंपत्तिस्ततो दुर्लभा संन्यासस्ततो दुर्लभः श्रद्धैक..लः श्रवणादिस्ततोऽपि दुर्लभः मुक्तिसाधनं श्रवणादजन्यं ज्ञानं ततो दुर्लभतरं तत्परिपाकमूलकस्समाधियोगस्ततोऽपि दुर्लभतमः ॥ एवं स्वासिद्धिसाधनानां दौर्लभ्यात् स्वयमपि दुर्लभं सुखमिदम् ॥ तदेव 'अभ्यासाद्रमते यत्रे'ति पूर्वश्लोकोत्तरार्धेन

---

१. आत्मनः स्वस्य बुद्धिः इति वा ॥

'यत्तदग्रे' इति श्लोकेन च सात्त्विकसुखोक्तिः ॥ 'अभ्यासाद्रमते यत्रे'ति पूर्व-श्लोकोत्तरार्धं सामान्यतस्सुखलक्षणपरम् ॥ 'यत्तग्रे' इति श्लोक एव सात्त्विकसु-खोक्तिपरः ॥ इति वा ॥ अस्मिन् पक्षे यत्र अभ्यासाच्च अभ्यासादपि रमते न तु इतरेषामभ्यासादिव क्लिश्यति ॥ यत्र अभ्यासात् दुःखनिवृत्तिं च प्राप्नोति ॥ न तु इतरेषामभ्यासादिव दुःखमाप्नोति तत्सुखम् तच्च त्रिविधं वक्ष्यमाणसात्त्विकादि-भेदेन ॥ त्रिविधं तदिदानीं शृणु ॥ साधनत्रैविध्यश्रवणानन्तरं साध्यत्रैविध्यश्रवण-स्य अवसरप्राप्तत्वात् साध्यभूतसुखत्रैविध्यमिदानीं शृणु इत्यर्थः॥ भरतर्षभत्वादस्यैव सुखस्य योग्योऽसि ॥ ३७ ॥

कृष्णः ॥ विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ॥

परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥ ३८ ॥

विषयेति ॥ तत् प्रसिद्धं विषयाश्च इन्द्रियाणि च विषयेन्द्रियाणि तेषां संयोगः विषयेन्द्रियसंयोगः तस्मात् हेतोः अग्रे अमृतोपमं परिणामे विषमिव यत् सुखं तत् सुखं राजसं सुखं स्मृतं उक्तम् ॥ ३८ ॥

तत् प्रसिद्धं यत् सुखं विषयाणां इन्द्रियाणां च मिथः संयोगाज्जायते ॥ यत् स्रक्चन्दनवनिताद्यनुभवजन्यं सुखम्॥ यत् अग्रे स्वसिद्धिसाधनविषयानुभवकालिक-स्वानुभवदशायाममृतोपमं अमृतमिव परमप्रीत्यास्पदम् ॥ सदेदं मे भूयादिति लाल-सास्पदम् ॥ परिणामे स्वसिद्धिसाधनविषयानुभवावसानकालिकस्वानुभवावसाने विषमिव द्वेषास्पदं मास्त्विदमन्ततो विरसं मे भूय इति वैरस्यास्पदं तत्सुखं राजसं प्रोक्तम् ॥ ३८ ॥

कृष्णः ॥ यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ॥

निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

यदिति ॥ यत् सुखं अग्रे च अनुबन्धे उत्तरकाले च आत्मनः स्वस्य मनसो वा मोहनं मोहजनकम् ॥ निद्रा च आलस्यं च प्रमादश्च निद्राऽऽलस्यप्रमादाः तेभ्यः उत्तिष्ठतीति निद्राऽऽलस्यप्रमादोत्थं तत् सुखं तामसं सुखं उदाहृतं उक्तम् ॥ ३९ ॥

यत् सुखं अग्रे स्वानुभवकाले अनुबन्धे स्वानुभवोत्तरकाले च आत्मनः स्वस्य बुद्धेर्वा मोहनं मोहजनकं विवेकशक्तितिरोधायकं यथावस्थितवस्तुप्रकाशाहेतुः भवति॥ निद्रया प्रवृत्तिमांद्यरूपेण आलस्येन कर्तव्यानवधानरूपेण [1]प्रमादेन च जातं तत् सुखं तामसं प्रोक्तम् ॥ मोहनस्य तस्य सुखत्वं कथमिति चेत् ॥ निद्रायाः सुखहेतुत्वं आयासविश्रामहेतुत्वात् तद्विरोधिषु द्वेषदर्शनाच्च सिद्धम् ॥ इन्द्रियव्यापारमांद्यरूपालस्यस्य सुखहेतुत्वं च अङ्गसंक्षोभादिनिवृत्तिहेतुत्वात्सिद्धम् ॥ अनवधानरूपस्य प्रमादस्य सुखहेतुत्वं च बुद्धेरेकाग्रताकल्पनरूपप्रयासनिवृत्तिहेतुत्वात्सिद्धम् ॥ एवं निद्रालस्यप्रमादोत्थसुखस्य सुखजातीयत्वेऽपि उद्दिष्टकार्यस्य यथावन्निर्वहणविरोधित्वात्तामससुखत्वम् ॥ सात्विकसुखस्य जरामरणादिनिवर्तकत्वात् भोग्यतमत्वेन हातुमशक्यत्वाच्च अमृतोपमत्वम् ॥ राजससुखस्य जराव्याधिमरणादिहेतुत्वात् विषोपमत्वम् ॥ राजससुखं [2]' सकामभिर्जायते तत्रतत्रे 'ति न्यायेन नानायोनिषु पातयित्वा पुनःपुनर्मृत्युं गमयति ॥ पारदारिकरसादीनि भयादिभूयिष्ठक्षणिकक्षुद्रतरसुखानि अनन्तकालभाव्यतियोगनिरतिशयदुःखफलानि भवन्ति ॥ तामसं सुखं तु न सात्विकसुखमिवामृतोपमं न वा राजससुखमिव विषोपमं किंतु मोहजनकं उद्दिष्टकार्यस्य यथावन्निर्वहणविरोधि ॥ एवं चेत् विषोपमस्य राजससुखस्य तामससुखादवरत्वं स्यादिति चेत् ॥ सत्यं तथाऽपि अग्रे अमृतोपमत्वेन तामससुखाद्वैशिष्ट्यम् ॥ [3]देवामृतं सेवमानः पुनर्जन्म प्राप्नोति ॥ सात्विकसुखं सेवमानस्तु न पुनर्जनिमश्नुते ॥ अतः प्रसिद्धामृतात् सात्विकसुखं वरिष्ठम् ॥ सकृन्मरणदुःखहेतुभूताद्विषात् पुनःपुनर्मरणदुःखहेतुभूतं राजससुखं वरिष्ठम् ॥ तथाऽपि किंचित्साम्येन अमृतोपमं विषोपममित्युक्तिः ॥ अमृतं उपमा यस्येति विषं उपमा यस्येति च विग्रहे एवम् ॥ उपमा सादृश्यं अस्यास्तीति उपमं अमृतं उपमं येनेति विषं उपमं येनेति च विग्रहे अमृतस्य विषस्य च उपमानभूतमित्यर्थः पर्यवस्यति ॥ ततश्च अधिकगुणमुपमानं न्यूनगुणमुपमेयमिति न्यायेन उपमानभूतसात्विकराजससुखयोः अमृत-

---

१. अकार्यकरणं तद्धेतुकं सुखं मद्यपानादिजनितं सुखं वा । २. मु ६.२. ३. अत्र, देवामृतं पिबन् मर्त्यः पुनर्भवमुपाश्नुते ॥ पिबन् गीतामृतं मर्त्यः न पुनर्जनिमश्नुते ॥ इति गीतामाहात्म्यवचनमनुसन्धेयं ॥ अतएव ' गीतामृतं महे 'दिति महत्वेन विशेषितम् ॥

विषापेक्षया आधिक्यमुक्तं भवति ॥ विषयेन्द्रियसंयोगजन्यसुखस्य राजसतया सर्वथा हेयत्वे गृहस्थाश्रमस्वीकारोच्छेदप्रसङ्गः १ 'रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ॥ आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छती'ति मनःप्रसादहेतुभूतानिषिद्धविषयसुखानुभवाभ्यनुज्ञाविरोधप्रसङ्गश्चेति चेत् ॥ विषोपममित्युक्त्या विषवदनर्थावहस्य विषयसुखस्यैव हेयत्वम् ॥ न तु विषयसुखसामान्यस्य ॥ २ 'जाग्रतोनैवचार्जुन'॥ ३'युक्तस्वप्नावबोधस्य' इत्युक्त्या निद्रायाः ४'युक्तचेष्टस्य कर्मसु' इत्युक्त्या आलस्यस्य च कर्तव्यता प्रतीयते ॥ अत्र तज्जन्यसुखस्य तामसत्वेन हेयत्वोक्त्या तयोरकर्तव्यता प्रतीयते ॥ कथमिदमिति चेत् ॥ मोहनमिति विशेषणेन अतिनिद्राया अत्यालस्यस्य च हेयत्वमिह विवक्षितम् ॥ अतो न पूर्वोत्तरविरोधः ॥ निद्रालस्ययोस्तदात्वे वस्तुप्रकाशहेतुत्वेऽपि पश्चादिन्द्रियाणां पटुतरप्रवृत्तिद्वारा विषयाणां सम्यगवभासहेतुत्वात् अनुबन्धे मोहनत्वं कथमिति चेत् अतिनिद्राऽऽलस्याभ्यां मुधाकालातिपाते पश्चात्कार्येषु व्यग्रतया प्रवृत्तस्य वस्तुविपर्यास एव भवतीति प्रसिद्धं हि लोके ॥ ५ 'प्रमादालस्यनिद्राभिः' ६ 'यया स्वप्नं भयं शोक मित्यादौ अतिनिद्राऽऽलस्ययोरेव ग्रहणमित्यवधेयम् ॥ राजसतामससुखे विहाय सात्विकसुखसंपादन एव प्रयतस्व ॥ तदर्थमेव त्रिविधसुखसाधनानां श्रद्धादिगतसात्विकादिभेदानां पृथगुक्तिः ॥ विमृशेदमवधानेन ॥ ३९ ॥

अर्जुनः ॥ किमेतेषामेव सात्विकादिभेदेन त्रैविध्यम् ॥ उत अन्यस्यापि ॥ सत्वादिगुणयुक्तस्य सर्वस्यापि तत्तद्गुणोद्रेकेण सात्विकादिभेदेन त्रैविध्यमस्तीति चेत् किं किं वस्तु सत्वादिगुणयुक्तम् ॥ तद्ब्रूहि ॥

कृष्णः ॥ न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ॥
सत्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात् त्रिभिर्गुणैः ॥ ४० ॥

नेति ॥ प्रकृतेः जायन्ते इति प्रकृतिजाः तैः प्रकृतिजैः एभिः पूर्वोक्तैः त्रिभिर्गुणैः सत्वरजस्तमोगुणैः यत् वस्तु मुक्तं स्यात् तत् वस्तु पृथिव्यां वा च दिवि वा च

---

१. २. ६४. २. ६ १६. ३. ६. १७. ४. ६ १७. ५. १४ ८. ६. १८. ३५.

देवेषु पुनः च नास्ति ॥ अदिवीति च्छेदः ॥ न द्यौः अद्यौः तस्यां अदिवि अतलाद्य धोलोकेषु च नास्ति ॥ ४० ॥

वाशब्दश्चार्थे ॥ पृथिव्यां च [१] स्वर्गे च तदुपलक्षितोर्ध्वलोकेषु च ॥ पुनः शब्दश्चार्थे ॥ देवेषु च कैमुत्यन्यायेन मनुष्येषु च उपलक्षणया च शब्दाद्वा जडेषु च मध्ये यत्सत्वं वस्तु [२] प्रकृतिसंभवैः एभिः सत्वादिभिः त्रिभिः गुणैः मुक्तं स्यात् ॥ तत् तादृशं सत्वादिगुणरहितं वस्तु नास्ति ॥ सर्वमपि वस्तु सत्वादिगुणसहितमेव ॥ प्रकृतिबद्धत्वात् ॥ प्रकृतेश्च त्रिगुणात्मकत्वात् ॥ तत्तद्गुणोद्रेकेण सात्विकादिभेदेन त्रैविध्यं तत्रतत्रोह्यम् ॥ राजसतामससुखप्रहाणेन सात्विकसुखस्यैव संपादने प्रवर्तयितुं यावतां त्रैविध्योक्तिरावश्यकी तावतां सात्विकादिभेदेन त्रैविध्यं कण्ठत उक्तम् ॥ उक्तरूपेण त्रैविध्यवतां सर्वेषां वस्तूनां साकल्येन वचनमशक्यं पुरुषायुषेणापि ॥ अतः स्वयमूहनीयम् ॥ पृथिव्यां दिवीत्यनेन मुक्तव्यावृत्तिः ॥ ४० ॥

अर्जुनः ॥ [३] 'इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघे'ति कृत्स्नगीताशास्त्रा[illegible]देशोपसंहारः कृतः ॥ ततस्तत्राधिकारिणः के अनधिकारिणः के इति मया पृष्टेन भवता देवस्वभाववन्तोऽधिकारिणः असुरस्वभाववन्तोऽनधिकारिणः इति तत्तत्स्वभावप्रतिनियतगुणदोषनिरूपणपुरस्सरमभिहितम् ॥ तदवसाने च [४] 'ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसी'ति त्वदुक्तं श्रुतवता मया विना ज्ञानं श्रद्धयाऽनुतिष्ठतां फलमस्ति न वेति पृष्टेन भवता ज्ञानराहित्येऽपि श्रद्धासत्वे श्रद्धाभेदानुसारि फलमस्त्येव ॥ सत्यपि ज्ञाने अश्रद्धया कृतं तु निष्फलमिहपरत्र चेति प्रतिपादितम् ॥ ततश्च आदित आरभ्य तत्रतत्र श्रुतानां सर्वेषामर्थानां अवगाहनसौकर्यार्थमेकत्रैव शुश्रूषया कर्मयोगसंबंधिसंन्यासत्यागतत्वविवरणं प्रति मया प्रार्थितेन भवता एकार्थकसंन्यासत्यागशब्दोक्तत्यागत्रैविध्योक्तिपूर्वकं कर्मयोगे वक्तव्यमुक्त्वा तत्प्रवर्तकविधिसंबन्धिनां ज्ञानज्ञेयज्ञातॄणां बुद्धेर्धृतेश्च त्रैविध्यमुक्त्वा उक्तसकलार्थानां परमप्रयोजनरूपे

---

१. अदिवीति च्छेदः ॥ द्युभिन्नेषु परलोकत्वेन तत्सदृशेषु विवरात्मकेषु अतलादिषु पाताल्यन्तेषु इति च ॥ २. जन्मान्तरीयधर्माधर्मसंस्कारजैर्वा ॥ ३. १५. २०. ४. १६. २४.

गुणै त्रैविध्यमभिधाय एवं सर्वत्राप्यूहनीयं इत्युपसंहारः कृतः ॥ श्रुतमिदमखिलमादरेण मया ॥ विदितार्थश्चाभूवम् ॥ किं मयेदानीं करणीयं तद्वद ॥ यदर्थं एतावानुपदेशः तत्कर्तव्यं त्वया इति चेत् मदीयशोकमोहापाकरणपूर्वकं मोक्षसाधनानुष्ठापनाय ह्युपदेशः ॥ अतः मोक्षसाधनं यत् तन्मयाऽनुष्ठेयम् ॥ तत्किमिति चेत् ज्ञानं सत्यं अथापि अशुद्धान्तःकरणस्य तव ज्ञानयोगे नाधिकारः किन्तु कर्मण्येव ॥ उक्तं च मया ॥ १ 'कर्मण्येवाधिकारस्ते' इति ॥ अतस्त्वया ज्ञानसाधनं कर्मैव कर्तव्यमिति चेत् ॥ करिष्याम्येव कर्मयोगम् ॥ किन्तु युद्धं परं मास्तु ॥ न तथा त्वया वक्तव्यम् ॥ क्षत्रियेण त्वया युद्धरूपमेव हि कर्मानुष्ठेयम् ॥ उक्तं च मया ॥ २ 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते' ॥ इति इति चेत् ॥ युद्धमनिच्छता क्षत्रियेण ब्राह्मणादिधर्मः किं न करणीयः अतो मास्तु युद्धं अन्यत्किमपि कर्म करिष्यामि । हे पार्थ युद्धमेव कारयितव्यमिति न ममाग्रहः किन्तु ब्राह्मणादिभिरिदमिदं करणीयमिति विभज्य ब्राह्मणादीनां कर्माणि विहितानि न तु यथेच्छं यद्वातद्वा कर्म करणीयमित्यभिहितं पूर्वैमहर्षिभिः ॥ अतः क्षत्रियस्य तव यद्विहितं तदेव त्वं कर्तुमर्हसि ॥ तच्च युद्धमेव इति चेत् ॥ किं तथा विभज्य विहितं पूर्वैः ॥ विभज्य विधाने कारणं किम् ॥ ब्राह्मणादिषु किं कस्य विहितम् ॥ ब्रूहि तदशेषेण ॥

कृष्णः ॥ ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ॥
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

ब्राह्मणेति ॥ परान् शत्रून् तपतीति परन्तपः हे परन्तप अर्जुन ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशः तेषां ब्राह्मणक्षत्रियविशां शूद्राणां च कर्माणि स्वभावः प्रभवः कारणं येषां ते स्वभावप्रभवाः तैः गुणैः प्र सम्यक् विभक्तानि ॥ ४१ ॥

ब्राह्मणानां क्षत्रियाणां विशां वैश्यानां शूद्राणां च कर्माणि प्र सम्यक् असंकीर्णरूपेण विभक्तानि इदमिदमस्येति विभागशो विहितानि ॥ केन हेतुनेति चेत् स्वभावप्रभवैर्गुणैर्हेतुभिः प्रविभक्तानि ॥ स्वभावानां ब्राह्मणत्वादिस्वभावानां प्रभवैः ३ हेतुभूतैः ॥ ब्राह्मणादि-

१. २. ४७. २. २. ३१. ३. प्रभवन्ति एभ्यः इति प्रभवाः तैः ।

स्वभाव १हेतुकैर्वा॥ सात्विकत्वादयः ये ब्राह्मणादीनां स्वभावाः तेषां प्रभवैर्हेतुभूतैः॥ स्वभावः प्रकृतिर्माया प्रभवः येषां तैः प्रकृतिसंभवैः॥ स्वभावः पूर्वसंस्कारः प्रभवो येषां तैः॥ स्वकीयो भावः स्वभावः ब्राह्मणादिजन्महेतुभूतं प्राचीनं कर्म तद्धेतुकैः॥ भव एव भावः जन्म २ 'ब्राह्मणोऽस्य मुखमासीत् ॥ बाहू राजन्यः कृतः॥ ऊरू तदस्य यद्वैश्यः॥ पद्भ्यां शूद्रो अजायत' ॥ इति श्रुत्युक्तरीत्या मुखादिभ्यो ब्राह्मणादीनां यज्जन्म तन्मूलकैः गुणैः उत्तमत्वमध्यमत्वाधमत्वाधमाधमत्वैः युक्तानां ब्राह्मणक्षत्रियविशां शूद्राणां च कर्माणीति वा ॥ शास्त्राण्येव कर्माणि विदधति न गुणाः तथाऽपि गुणानुसारेणैव शास्त्रैर्विधानात् गुणैः प्रविभक्तानीत्युच्यते ॥ गुणैरुत्पन्नानि वा ॥ ब्राह्मणक्षत्रियवैश्यानां द्विजत्वसाम्यात् समासेन निर्देशः तन्मूलकवेदाधिकाराभावेन शूद्राणां पृथक्कृत्य निर्देशः ॥ सत्वप्रधानो ब्रा... ...गोपसर्जनकरजःप्रधानः क्षत्रियः तमोगुणोपसर्जनकरजः प्रधानो वैश्यः ॥ ...ोगुणोपसर्जनकतमःप्रधानः शूद्रः इत्यादिकं व्याख्यानान्तरेभ्यः स्मृतिभ्यश्चानुसन्धेयम् ॥ परन्तपः अन्तःशत्रुतापनोऽसि ॥ अतस्त्वं परित्यज्य दुराग्रहं मदुक्तमङ्गीकर्तुमर्होऽसि ॥ अतः तव यद्धितं तदेव त्वया कर्तव्यम् ॥ ४१ ॥

कृष्णः ॥ शमो दमस्तपश्शौचं क्षान्तिरार्जवमेव च ॥
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥ ४२ ॥

शमइति ॥ शमः मनोनिग्रहः दमः बाह्येन्द्रियनिग्रहः तपः कृच्छ्रचान्द्रायणादिव्रतानुष्ठानं शुचेः भावः शौचं क्षान्तिः क्षमा ऋजोः भावः आर्जवं ज्ञानं विज्ञानं अस्ति इति मतिः यस्य सः आस्तिकः तस्य भावः आस्तिक्यं चैव स्वभावाज्जायत इति स्वभावजं ब्रह्मणां ब्राह्मणानां इदं ब्राह्मं कर्म ॥ ४२ ॥

३ शमः अन्तःकरणनिग्रहः दमः बाह्येन्द्रियनिग्रहः ॥ तपः कृच्छ्रचान्द्रायणादिव्रतानुष्ठानेन कायशोषणं सप्तदशाध्यायोक्तं त्रिविधं तपो वा ॥ बाह्यमाभ्यन्तरं च शौचम् ॥ तेन शास्त्रीयकर्मकरणयोग्यता च ॥ क्षान्तिः क्षमा आर्जवं मनोवा-

१. स्वभावः प्रभवः कारणं येषां तैः ॥ २. तै. आ. ३. १२. ५. ३. वि. शमः बाह्येंद्रियनियमनम् ॥ दमः अन्तरिंद्रियनियमनम् ॥

षकायकर्मणामैकरूप्यम् ॥ ज्ञानं विज्ञानं सामान्यज्ञानं विशेषज्ञानं शास्त्रीयज्ञानं अनुभवज्ञानं परापरतत्त्वयाथात्म्यज्ञानम् ॥ परतत्त्वगतासाधारणविशेषविषयं ज्ञानं आस्तिक्यं अस्ति परलोक इति बुद्धिः ॥ चकारात् यजनयाजनादिकमन्यदपि ग्राह्यम् ॥ एतत्सर्वं स्वभावजं १ ब्राह्मं ब्रह्मणां ब्राह्मणानामिदं कर्म ॥ शमादीनि ब्राह्मणानामेव कर्माणि ब्राह्मणानां कर्माण्येव शमादीन्येव ब्राह्मणकर्माणीत्येवकारान्वयः ॥ शमादयो यथासंभवमन्येषामपि धर्मा भवन्ति ॥ ब्राह्मणेष्वेव तेषां प्राधान्यात् तत्कर्मत्वोक्तिः ॥ गुडस्य माधुर्यवत् ब्राह्मणस्य शमादिकं स्वाभाविकम् ॥ अन्येषां प्रयत्नसाध्यम् ॥ अतः ब्राह्मणकर्मत्वोक्तिरिति च ॥ ४२ ॥

कृष्णः ॥ शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

शौर्यमिति ॥ शूरस्य भावः शौर्यं तेजः धृतिः धैर्यं दक्षस्य भावः दाक्ष्यं सामर्थ्यं युद्धे पलायनस्य अभावः अपलायनं च दानं ईश्वरस्य भावः ईश्वरभावः स च स्वभावजं क्षत्राणां क्षत्रियाणां इदं क्षात्रं कर्म ॥ ४३ ॥

शौर्यम् अभीरुत्वं तेजः परैरप्रधृष्यत्वं धृतिः धैर्यं दाक्ष्यं सामर्थ्यं आरब्धकार्यनिर्वहणसामर्थ्यं युद्धं यस्य क्षत्रियस्य युद्धप्रसक्तिरेव नायाति तस्य का गतिरिति चेत् ॥ न सर्वैः क्षत्रियैः येन केनापि युद्धं करणीयमेवेति नियमः किंतु दैवादुपनते युद्धे अपलायनम् ॥ भयादिना युद्धं विहाय पराङ्मुखीभूय स्वैरमन्यत्रगमनं दानं ईश्वरत्वं ईशितव्यसकलयोगक्षेमनिर्वहणसामर्थ्यं दण्डनादिकर्तृत्वं वा ॥ चशब्दो समुच्चये ॥ मोहादिना अनर्थसंभावनायामपि भयादिना मरणसंभावनायामपि मरणनिश्चयेऽपि अपलायनमित्यर्थद्योतनायापि शब्दः ॥ एतदखिलं स्वभावजं क्षत्राणां क्षत्रियाणामिदं २ क्षात्रं कर्म ॥ एते धर्माः क्षत्रियस्य प्रधानाः ॥ यथासंभवं इतरेषामप्रधानाः ॥ अत्र ब्राह्मणगतशमादिभ्योऽवराः शमादयोऽपि ग्राह्याः ॥ त्वं तु क्षत्रियः अतस्तव युद्धार्थं युद्धरंगमागत्य केनापि हेतुना पलायनमन्याय्यम् ॥ उक्तं च मया ॥

---

१. ब्राह्मकर्म ब्रह्मकर्म इति च पाठान्तरम् ॥ २. क्षात्रकर्म क्षत्रकर्म इति च पाठान्तरम् ॥

१ 'स्वधर्ममपि चावेक्ष्ये'त्यादि ॥ २ 'नैवं पापमवाप्स्यसी'त्यन्तं ॥ ३ 'श्रेयान् स्वधर्मो विगुण' इत्यादि च ॥ ४३ ॥

कृष्णः ॥ कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ॥
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

कृषीति ॥ कृषिश्च गोः रक्षा यस्मिन् तत् गोरक्षं तच्च वणिजः कर्म वाणिज्यं तच्च कृषिगोरक्षवाणिज्यं स्वभावजं वैश्यानां कर्म वैश्यकर्म ॥ परिचर्या शुश्रूषा आत्मा स्वरूपं यस्य तत् परिचर्यात्मकं कर्म शूद्रस्य स्वभावजं कर्म ॥ अपिशब्दात् कर्मेत्यनुवर्तते ॥ ४४ ॥

कृषिः कृषिजीवनं कृष्ट्वा भूमिं लाङ्गलेन उप्त्वा बीजं प्रयत्नेन तदुपनतधान्यागमादिना जीवनम् ॥ ४ 'गोः रक्षा यस्मिन् कर्मणि तत् गोरक्षं कर्म वणिक् वैश्यः तस्य कर्म वाणिज्यं क्रयविक्रयादिरूपम् ॥ इदमुपलक्षणं कुसीदं चात्र ग्राह्यम् ॥ वृद्ध्यर्थं ऋणत्वेन धनं प्रदाय तदुपनतया वृद्ध्या जीवनं ५ कुसीदम् ॥ इदमखिलं स्वभावजं ६ वैश्यानां कर्म उक्तत्रिवर्णशुश्रूषारूपं यत्कर्म तत् स्वभावजं शूद्रस्य ७ कर्म ॥ ब्राह्मणः यजनयाजनाध्ययनाध्यापनादिप्रधानः ॥ क्षत्रियः स्वेतरवर्णरक्षणप्रधानः वैश्यः तत्तत्कुटुंबनिर्वहणाय कृष्यादिना धान्याद्युत्पादनम् ब्राह्मणक्षत्रियसुखाद्यौपयिकगोधनानां निवासस्थलकल्पनं यवसोदकदानादिना परिरक्षणम् तण्डुलादि दत्वा द्रव्यग्रहणं विक्रयः द्रव्यं दत्वा तण्डुलादिग्रहणं क्रयः एतदुभयकरणम् एतत्त्रितयनिर्वहणार्थं वृद्ध्या धनस्य वर्धनं इत्येतत्प्रधानः ॥ एवं ब्राह्मणक्षत्रियवैश्येषु स्वस्वकर्मनिरतेषु तत्तद्योगक्षेमनिर्वहणार्थं कश्चिदावश्यकः तदर्थं शूद्रेण तच्छुश्रूषापरेण भवितव्यम् ॥ अतएव शूद्राः तेषां त्रयाणां सदनेषु कर्मकरा

---

१. २. ३१. २. २. ३८. ३. ३. ३५. ४. गौरक्ष्येति पाठः ॥ गाः रक्षतीति गोरक्षः तस्य भावः कर्म वा गौरक्ष्यम् ॥ गोरक्ष्येति पाठः॥ गोः रक्ष्या यस्मिन् कर्मणि तत् गोरक्ष्यं कर्म॥ रक्ष्यमिति भावे व्यप् ॥ गोः रक्ष्यं रक्षणं गोरक्ष्यम् ॥ ५. 'कुसीदं वृद्धिजीविके'त्यमरः ॥ ६. वैश्यं कर्मेति पाठान्तरम् ॥ विशामिदं विशामर्हं वा वैश्यम् ॥ ७. अपिशब्दात्कर्मेत्यनुवर्तते ॥

दृश्यन्ते ॥ अतिमानी शूद्रो न ब्राह्मणादीन् परिचरेत् ॥ अतस्तेन अतिमानस्त्यक्तव्यः॥ उक्तं च मया १ 'नातिमानिते'ति ॥ एवं कर्माणि प्रविभक्तानि ॥ तत्र यत्ते विहितं तदेव त्वया अनुष्ठेयम् ॥ तच्च युद्धम् ॥ अतः अकामेनापि त्वया अकामेन तदेव कर्त्तव्यम् ॥ ४४ ॥

अर्जुनः ॥ यथाविभागं स्वं स्वं कर्म कुर्वतः किं फलं ब्रूहि ॥

कृष्णः ॥ स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः ॥ ४४॥ ॥

स्वेस्वइति ॥ स्वेस्वे कर्माणि अभिरतः नरः मनुष्यः संसिद्धिं परमं फलं लभते ॥ ४४ ॥

विभागेन विधानात् स्वस्य स्वस्य यत् कर्म कर्तव्यतया प्राप्तं तस्मिन् कर्मणि अभिरतः सम्यक् प्रवृत्तः स्वकीयं कर्म श्रद्धया कुर्वन् नरः संसिद्धिं परमं फलं ज्ञानं मोक्षं च प्राप्नोति ॥ अन्तःकरणशुद्धिद्वारा तत्वज्ञाननिष्ठायोग्यतालक्षणं परमं फलं वा प्राप्नोति ॥ परम[illegible]रूपं फलं वा प्राप्नोति २ 'शाश्वतं पद'मिति वक्ष्यते॥ ध्यानयोगनिष्ठारू[illegible] वा ॥ ३'नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छती'ति वक्ष्यते ॥ नर इत्यनेन स्वे स्वे कर्मण्यभिरत एव मनुष्यः अन्यस्तु पशुरिति सूच्यते ॥ स्वस्वकर्मकरणमात्रं संसिध्युपयोगि न तु तत्र ब्राह्मणत्वादेरपेक्षेति सूचयितुं नर इति सामान्यशब्दप्रयोग इति वा ॥ मनुष्याणामेव वर्णाश्रमापेक्षे कर्मणि अधिकारः न तथा देवानां ॥ तेषां वर्णाश्रमकल्पनाभावात् ॥ वर्णाश्रमभेदानपेक्षे तु भगवदाराधनरूपे कर्मणि तेषामधिकारः ॥ इति सूचनाय वा ॥ आदरेण करणं फलाय भवति अनादरेण कृतमफलमेवेति सूचनाय 'नियतं कर्म कुर्वाणः'

---

१. १६. ३. २. १८. ५६. ३. १८. ४९.

इत्यनुक्त्वा अभिरत इत्युक्तम् ॥ १ 'श्रद्धावन्तोऽनसूयन्त' इत्यत्र अपिशब्देन अनुष्ठान-श्रद्धाऽनसूयानां पृथक्फलत्वबोधनानुरोधेन अनसूयत्वमात्रेण क्रमात्सिद्धिर्भवेदिति सूचनाय 'संसिद्धिं लभते मर्त्यः स्वं स्वं कर्म समाचर'न्नित्यनुक्त्वा अभिरत इत्युक्तमिति वा ॥ ४४॥ ॥

**अर्जुनः** ॥ कर्म तु जडं किं तत् सिद्धिं प्रयच्छति चेतन इव किं च विहितं कर्म कुर्वन् संसिद्धिं लभते इति कथमुच्यते ॥ विहितं कर्म कुर्वाणानां ब्राह्मणादीनां अन्तःकरणशुद्धिध्यानभक्तिज्ञानानां अनुदयदर्शनात् ॥ वद ॥

**कृष्णः** ॥ **स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ४५** ॥

**स्वेति** ॥ स्वस्य कर्म स्वकर्म तस्मिन् निरतः स्वकर्मनिरतः सिद्धिं यथा विन्दति तत् तथा शृणु ॥ ४५ ॥

स्वकर्मणि निरतः नरः १ सिद्धिं उत्कृष्टां यथा येन प्रकारेण लभते तत् तं प्रकारं शृणु ॥ वक्ष्यामि ॥ श्रुत्वेदं यथावत् ज्ञात्वा उक्तेऽर्थे श्रद्धत्स्व ॥ ४५ ॥

**कृष्णः** ॥ **यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्** ॥
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६** ॥

**यत इति** ॥ मानवः मनुष्यः यतः यस्मात् भूतानां प्रवृत्तिः जायते येन इदं सर्वं ततं व्याप्तं तं स्वस्य कर्म स्वकर्म तेन अभ्यर्च्य आराध्य सिद्धिं विन्दति लभते ॥ मानवः ज्ञानी सन् इति वा ॥ ४६ ॥

स्वस्य विहितेन कर्मणा तं ३ 'भोक्तारं यज्ञतपसां' ४ 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्युक्तरीत्या सर्वकर्मसमाराध्यं ५ परमात्मानं भक्तिश्रद्धापूर्वकमाराध्य तत्प्रसादात् चित्तशुद्धिद्वारा मानवः सन् मननादिद्वारा ज्ञानी भूत्वा 'सिद्धिं यथा विन्दति' त्युक्तां सिद्धिं प्राप्नोति ॥ न जडं कर्म सिद्धिं प्रयच्छति ॥ किंतु कर्मणाऽऽराधितः परमचेतनः परमात्मा सिद्धिं प्रयच्छति॥ तत्तत्कर्मानुगुणं फलदातु-

---

१. ३. ३१. २. कर्मणा ज्ञाननिष्ठायोग्यतां प्राप्तः येन प्रकारेण तत्त्वज्ञानं लभते ॥ इति वा ॥ अ. मुख्यसंन्यासलक्षणां नैष्कर्म्यसिद्धिं वा॥ ३. ५. २९. ४. ९. २४. ५. अ. उत्तमोऽधिकारी परमात्मानं ब्रह्मत्वेनाराध्य मध्यमोऽधिकारी इन्द्रादीन् ब्रह्मत्वेनाराध्य ॥

परमात्मनः, येभ्यः फलं प्रयच्छति तेषु वात्सल्यं अनेनेदं कृतमिति तत्तत्कृतकर्मपरिज्ञानं चावश्यकम् ॥ किमस्ति तस्य तदुभयं इति चेत् ॥ यतः भूतानां चेतनानां अचेतनानां च तत्कृता उत्पत्त्यादिका चलनादिका सर्वा प्रवृत्तिः भवति ॥ सर्वमिदं चेतनाचेतनात्मकं जगत् येन १ व्याप्तं स किल सः॥ स्वाधीनस्वरूपसत्ताप्रवृत्तिकत्वेन जगतः तत्र वात्सल्यं सर्वांतर्यामित्वेन सर्वं व्याप्यावस्थानात्तत्कृतकर्मपरिज्ञानं च परमात्मनोऽस्ति ॥ अतः कर्मणाऽभ्यर्चितः तेन तुष्टः परमात्मा फलं प्रयच्छति ॥ कर्म तु तत्प्रसादहेतुतया साधनभूतम् ॥ सर्वव्यापकः सर्वप्रवर्तकश्च परमात्मा अहमेव ॥ उक्तं हि मया । सर्वप्रवर्तकत्वसर्वव्यापकत्वादिकं मम ॥ २ ‘अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ’॥ ३ ‘मया ततमिदं सर्वं जगत् ’॥ ४ ‘मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ’॥ ५ ‘अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ’॥ ६ ‘भवन्ति भावा भूतानां मत्त एव पृथग्विधाः’ ॥ ७ ‘मत्तः स्मृतिर्ज्ञानमपोहनं च ’इत्यादिषु ॥ भगवदाराधनमिदमिति ज्ञात्वा ८ ‘ब्रह्मार्पण ’मित्युक्तरीत्या कृतं कर्म भगवत्प्रसादद्वारा ध्यानं ज्ञानं मोक्षं च प्रयच्छति ॥ इदमेवोक्तं मया॥ ९ ‘जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ’॥ १० ‘असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः’॥ ११ ‘युध्य च॥ ’मय्यर्पितमनोबुद्धिः मामेवैष्यस्यसंशयः’ ॥ १२ ‘मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्यसि युक्त्वैवं आत्मानं मत्परायणः’ ॥ इत्यादिषु ॥ उक्तरीत्या यथावत् अकुर्वाणानां सिद्धिर्न भवति ॥ उक्तरीत्या यथावत् कुर्वाणानां तु सिद्धिर्भवत्येव ॥ उक्तं च मया ॥ १३ ‘कर्मणैव हि संसिद्धिमास्थिता जनकादय ’इत्यादि ॥ अनया परीक्षया अमुमधिकारं लभेत इत्युक्ते नाचेतना सा परीक्षा अधिकारं प्रापयति ॥ किंतु अनया अनया अयमयमधिकार इति कल्पव्यवस्थानुसारेण प्रवर्तकत्वादिमान् तं तमधिकारं दातुं प्रभवन् महानधिकारी तं तमधिकारं प्रापयति। परीक्षा तु साधनभूता इति विदितमेव हि सर्वेषां॥ तद्वत् कर्मणा ज्ञानद्वारा मोक्ष इत्युक्ते कर्मणाऽऽराधितस्तुष्टो यथाकर्म फलं प्रयच्छति इति ज्ञातव्यम् ॥ अतो निःशङ्कमनुष्ठेयं कर्म ॥ ४९ ॥

---

१. अ अधिष्ठानात्मकेन ब्रह्मणा अध्यस्तं जगत् शुक्त्या रजतमिव व्याप्तम् ॥ कारणेन ब्रह्मणा कार्यं जगत् सुवर्णेन कटकादिकमिव व्याप्तम् ॥ २. ७ ६. ३. ९. ४. ४. ९. १०. ५. १०. ८. ६. १०. ५. ७. १५. १५. ८. ४. २४ ९. २. ५१. १०. ३. १९ १२. ८. ७. १२ ९ ३४. १३. ३. २०.

अर्जुनः ॥ सर्वकर्मसमाराध्यः परमात्मा कर्मणा अभ्यर्चितः तेन तुष्टः फलं प्रयच्छतीत्युक्तं ॥ परमात्मनस्तस्याराधनरूपं कर्म कर्तव्यमेव ॥ अहमपि यथावत् करिष्यामि ॥ तत्र मांशास्त्रिकः कः ॥ युद्धं हि ममानिष्टम् ॥ अतः केनापि कर्मणा भगवन्तमाराधयामि सभक्त्या श्रद्धया च ॥ युद्धं परं मास्तु ॥

कृष्णः ॥ श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ॥ ४६ ॥ ॥

श्रेयानिति ॥ सु सम्यक् अनुष्ठितं स्वनुष्ठितं तस्मात् परस्य धर्मः परधर्मः तस्मात् विगतः गुणः अङ्गं यस्मात् सः विगुणः अङ्गहीनः स्वस्य धर्मः स्वधर्मः श्रेयान् श्रेष्ठः ॥ ४६ ॥ ॥

स्वो धर्मः स्वस्य धर्मो वा स्ववर्णाश्रमोचितविहितधर्मः विगुणोऽपि अङ्गहीनोऽपि अनिष्टत्वात् असम्यगनुष्ठितोऽपि श्रेयान् प्रशस्ततरः कस्मात् प्रशस्ततरः इति चेत् ॥ सम्यक् अनुष्ठितात् परस्य वर्णतः आश्रमतश्च स्वस्मात् भिन्नस्य स्ववर्णेतरवर्णस्थस्य स्वाश्रमेतराश्रमस्थस्य च धर्मात् प्रशस्ततरः ॥ इदमेव त्वयुक्तं मया ॥ १ 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ॥ स्वधर्मे निधनं श्रेयः परधर्मो भयावहः '॥ इति ॥ अत्र यद्वक्तव्यं तदखिलमुक्तं तत्रैव ॥ स्मर तत्सर्वमवधानेन ॥ अतस्तव विहितं युद्धमेव कर्तव्यं त्वया ॥ न हि ततोऽन्यत् क्षत्रियस्य श्रेयो विद्यते ॥ उक्तं च मया ॥ २ 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते' ॥ इति ॥ ४६ ॥ ॥

अर्जुनः ॥ अङ्गहीनोऽपि स्वधर्मः श्रेयान् इत्युक्तम् ॥ स्वधर्मस्य अदुष्टत्वे सः श्रेयान् स्यात् ॥ तस्य हिंसादिदोषदुष्टत्वे कथं सः श्रेयान् स्यात् ॥ युद्धरूपः स्वधर्मो हिंसादिदोषदुष्ट इति विदितमेव सर्वेषाम् ॥ अतः कथं युद्धमभ्युपगच्छेयम् ॥ वद ॥

कृष्णः ॥ स्वभावनियतं कर्म कुर्वन् नाप्नोति किल्बिषम् ॥ ४७ ॥

---

१. ३. ३५. २. २. ३१.

स्वभावेति ॥ स्वभावेन नियतं स्वभावनियतं कर्म कुर्वन् किल्बिषं पापं नाप्नोति ॥ ४७ ॥

१ स्वभावो ब्राह्मणत्वादिः तदनुसारेण विहितं कर्म दुष्टमपि कुर्वन् अङ्गहीनताप्रयुक्तम् अवर्जनीयहिंसादिदोषप्रयुक्तम् च पापं नाप्नोति ॥ यथा विषक्रिमेः विषं न बाधकं सहजत्वात् ॥ तथा दुष्टमपि नियतं कर्म न बाधकं सहजत्वात् ॥ स्वशब्दवाच्ये भगवति भावः भक्तिर्यस्मिन् तत् स्वभावं स्वभावं च तत् नियतं च स्वभावनियतमिति विग्रहः ॥ विहितं भगवद्भक्तियुक्तम् च कर्म कुर्वन् किल्बिषं नाप्नोति ॥ विहितयागांगहिंसादेरिवविहितयुद्धाङ्गहिंसादेरपि २ अदोषत्वात् ॥ उक्तं चेदमधस्तादसकृत् ॥ स्वयोग्यतानुसारेण स्वस्य विहितं कर्म कुर्वन् किल्बिषं नाप्नोति ॥ किंतु विहितकर्मानुष्ठानजन्यभगवत्प्रसादात्परमं श्रेयः प्राप्नोति ॥ तदशुद्धमिति न मन्तव्यम्॥ विधिप्राप्तत्वात् ॥ विधिप्राप्ते न दोषविचारः कार्यः ॥ ३ 'अशुद्धमितिचेन्न शब्दा'दिति सूत्रम् ॥ न हि विधिप्राप्तं अपराधिनः कशया ताडनं कुर्वन् सेवकः [illegible]वैति ॥ किंतु यथावत् तदनुष्ठानजन्यप्रभुप्रसादादुत्कर्षमाप्नोति ॥ अतो निश्शङ्कं स्वधर्मं युद्धं हिंसादिदोषदुष्टमप्यनुष्ठेयं त्वया ॥ दुष्टमपि स्वकर्म स्वकर्मत्वात् कर्तव्यमेव सर्वैः ॥ ४७ ॥

वि ॥ अर्जुनः ॥ ज्ञानकर्मणोरुभयोर्मध्ये ज्ञानस्य श्रेष्ठत्वात् तेनैव भगवन्तं प्रतोष्य तत्प्रसादात्प्राप्तव्यं प्राप्नवानि किमपरेण कर्मणा ॥ वद ॥

कृष्णः॥ 'श्रेयान् स्वधर्मो विगुण' इति पूर्वोक्तरीत्या परस्य उत्तमस्य इन्द्रियजयादिमतः अर्हो यो धर्मः ज्ञानरूपः सकलेन्द्रियव्यापारनियमनरूपः तस्मात् कदाचित् सम्यगनुष्ठितात् इन्द्रियजयादिरहितस्य स्वस्य अर्हः साध्यः यः कर्मयोगः इन्द्रियव्यापाररूपः सः विगुणः अङ्गवैकल्ययुक्तोऽपि सुकरत्वेन श्रेयान् ॥ इन्द्रियव्यापारनियमनसाध्यत्वेन ४ 'सदृशं चेष्टते स्वस्याः' इत्याद्युक्तरीत्या सप्रमादात् ज्ञान-

---

१. सु सम्यक् अभावाय परस्य नाशाय अश्रेयसे वा 'श्येनेनाभिचरन् यजेत' त्यादिना विहितं कर्म श्येनयागादिकं कुर्वन् ना नरः किल्बिषं आप्नोति ॥ अतस्तादृशमेव न कर्तव्यं अग्निष्टोमादिकं युद्धादिकं च कर्तव्यमेव ॥ इति वा ॥ २. अत्र, हिंसा त्ववैदिकी या तु तयाऽनर्थो ध्रुवं भवेत् ॥ वेदोक्तया हिंसया तु नैवानर्थः कथंचन '॥ इति पाद्मवचनमनुसन्धेयं ३. ३. १. २७. ४. ३ ३३.

योगात् ॥ इन्द्रियव्यापाररूपतया अप्रमादः कर्मयोग एव श्रेयान् ॥ इदमेव व्यक्तं मया ॥ १'कर्म ज्यायो ह्यकर्मणः' इति ॥ अतः ज्ञानयोगार्होऽपि त्वं अप्रमादेन कर्मयोगेनैव भगवन्तमाराधय ॥ तच्च कर्म तव युद्धम् ॥ अतस्तदसङ्गः कुरु ॥४६॥ ॥

वि ॥ अर्जुनः ॥ कुतः कर्मयोगो ज्ञानयोगात् श्रेयान् ॥

कृष्णः ॥ प्रकृतिसंसृष्टस्य स्वस्य स्वभावतोऽभ्यस्तं कर्म कुर्वन् किल्बिषं नाप्नोति ॥ तस्य स्वभावनियतत्वेन अप्रमादत्वात् ॥ अनभ्यस्ते सप्रमादे ज्ञानयोगे प्रवर्तमानस्तु प्रमादात् किल्बिषं प्रपद्येतापि ॥ अतः ज्ञानयोगादपि कर्मयोग एव श्रेयान् ॥ ४७ ॥

अर्जुनः ॥ स्वकीयं कर्म अनिष्टमपि दुष्टमपि स्वकर्मत्वात् कर्तव्यमेव ॥ अन्यदीयं कर्म इष्टमपि अदुष्टमपि अन्यकर्मत्वादकर्तव्यमेव इत्युक्तम् ॥ अनिष्टमपि स्वकर्म कर्तव्यमिति न्याय्यं दुष्टमपि कर्तव्यमिति तु अन्याय्यम् ॥ न हि दुष्टस्य कर्मणो विधानं युज्यते ॥ अतः स्वकीयमपि दुष्टं कर्म त्यक्त्वा अदुष्टं स्वकीयं कर्मान्तरं अन्यदीयं कर्म वा निःश्रेयसाय कर्तुं युक्तम् ॥ अतोऽदुष्टकर्मान्तराणां विद्यमानत्वात् दुष्टस्य स्वकर्मणः परित्याग एव न्याय्यः ॥ अतो नाहं युद्धमभ्युपगच्छेयम् ॥ किं ब्रवीषि ॥ ब्रूहि ॥

कृष्णः ॥ सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ॥
सर्वारंभा हि दोषेण धूमेनाग्निरिवाऽऽवृताः ॥ ४८ ॥

सहजमिति ॥ हे कौन्तेय पार्थ दोषेण सहितं सदोषमपि सह जायत इति सहजं कर्म न त्यजेत् ॥ सर्वे च ते आरभ्यन्त इत्यारंभाः कर्माणि ते च सर्वारंभाः सर्वकर्माणि धूमेन अग्निः इव दोषेण आवृताः ॥ हि प्रसिद्धत्वम् ॥ हि यस्मात् तस्मात् इति वा ॥ ४८ ॥

हे पार्थ सदोषमपि जात्या आश्रमेण च सहैव जायते इति सहजं वर्णाश्रमोचितं विहितं कर्म न त्यजेत् ॥ कुतो न त्यजेदित्युच्यते ॥ सदोषस्य कर्मणः त्याग

१. ३ ८.

एष त्वचितः ॥ यददोषं कर्म तदनुष्ठीयतां भगवदाराधनाय इति चेत् ॥ सर्वाणि १कर्माणि हिंसादिना येन केन चिद्दोषेण व्याप्तानि धूमेनाग्निरिव ॥ यदि निर्दोषं स्वकीयं परकीयं वा किमपि कर्म स्यात् दुष्टं विहाय अदुष्टं तत्कर्म सेवितुं युक्तम् ॥ नादुष्टमेकमपि कर्मोपलभ्यते ॥ सर्वाणि , स्वकीयानि परकीयाणि च कर्माणि येन केनापि दोषेण दुष्टान्येव ॥ अतो न विहितं उचितं प्रशस्ततमं स्वकर्म दुष्टमिति विहाय अन्यादृशं दुष्टमेव किमप्यन्यत् स्वीकर्तुमुचितम् ॥ स्वकर्मपरकर्मणोरुभयोरपि दुष्टत्वेन स्वीयत्वरूपविशेषसद्भावात् स्वकीयमेव कर्म कर्तव्यम् ॥ न परकीयं ॥ परधर्माचरणे स्वाभाविक एको दोषः स्वधर्मत्यागकृतो द्वितीयः अविहिताचरणात्तृतीयः ईश्वराज्ञोल्लंघनाच्चतुर्थः ॥ इति चत्वारो दोषाः ॥ स्वकर्मस्वपि यत् प्रशस्ततरं तदेव कर्तव्यं कर्तव्यमेव तत् तादृशं च युद्धमेव ॥ उक्तं च मया ॥ २ 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते '॥ इति ॥ न हि पुरातनं जीर्णं शिथिलसन्धिबंधं स्वीयं सदनं जीर्णमिति विहाय तादृशमन्यदीयं सदनमाप्तुमुचितम् ॥ किंतु स्वीयत्वरूपविशेषेण तादृशमपि स्वकीयमेव सदनं वरम् ॥ सर्वस्यापि कर्मणो दुष्टत्वात् मास्त्वेव कर्म किमपीति चेत् ॥ सकललौकिकवैदिककर्मनिर्वहणोपायिकोऽग्निः मास्तु विवाहादावश्रुपातजनकोऽयमिति त्यक्तुं न शक्यते॥ किंतु तत्रत्यं दोषमनालोच्य गुणांशं केवलं स्वीकृत्य सेवनीय एव भवति ॥ तथा दुष्टमिति कर्म त्यक्तुं न शक्यते ॥ किंतु गुणसद्भावादनुष्ठेयमेव ॥ न हि शक्यते चापि कर्मैव मास्त्विति त्यक्तुम् ॥ उक्तं च मया ॥ ३ 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' ॥ इति॥ ४ 'शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः' ॥ इति॥ ५ 'न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' ॥ इति च ॥ अतः स्वीयं कर्म करणीयमेव ॥ अतो युद्धस्यैव त्वदीयत्वात्तदेव निःशङ्कमनुष्ठेयमेव त्वया ॥ ६ सर्वकर्मत्यागासमर्थोऽज्ञानी कुर्यादेव कर्म तस्य कर्मण्येवाधिकारात् ॥ सर्वकर्मत्यागसमर्थस्तु ज्ञानी कर्म त्यजेदेव ॥ तस्य कर्मसंन्यास एवाधिकारात् ॥ त्वं कौन्तेयोऽसि ॥ महद्भिरादिष्टे कर्मणि निःशङ्कं प्रवृ-

---

१. आरंभाः कर्माणि ॥ उक्तं च मया 'यस्य सर्वे समारंभाः' (४. १९.) इति 'सर्वारम्भपरित्यागी' (१२. १६.) (१४. २५.) इति च आरंभशब्देन कर्म॥ २. २. ३१. ३. ३. ५. ४. ३. ८. ५. १८. ११. ६ अ ज्ञिस्तरस्तु भाष्यादौ ॥

स्तिरोहितेति दुर्वाससा महर्षिणा उपदिष्टेन मन्त्रेण परपुरुषाह्वानरूपे कर्मणि प्रवृत्तां जननीं कुन्तीं स्मर ॥ ४८ ॥

वि ॥ अर्जुनः ॥ सुकरत्वाद् अप्रमादत्वाच्च ज्ञानयोगादपि कर्मयोगः श्रेयान् अतस्स एव कर्तव्यः इत्युक्तम् ॥ कथं कर्मणः श्रेयस्त्वेन कर्तव्यत्वम् ॥ कर्मणः कायक्लेशसाध्यत्वेन दुःखहेतुत्वात् ॥ न हि सुकरं अप्रमादं इति दुःखप्रदं प्रवर्तेत कोऽपि॥ किंतु सदुःखमिति त्यजेदेव ॥ अतः कथमिदम् ॥

कृष्णः ॥ सहजं स्वभावनियतं कर्म कायक्लेशदुःखसाध्यत्वरूपदोषयुक्तमपि न त्यजेत् ॥ दुःखसाध्यत्वरूपदोषरहितो ज्ञानयोग एव सेव्यतां किमनेन कर्मयोगेन सदोषेणेति चेत् ॥ सर्वे आरंभाः ज्ञानारंभाः कर्मारंभाश्च धूमेन अग्निरिव दुःखसाध्यत्वरूपदोषेण आवृताः ॥ अतः ज्ञानकर्मणोरुभयोरपि दुष्टत्वात् सुकरमप्रमादं च कर्मैव कर्तव्यम् ॥ उभयोस्साम्ये ज्ञानयोग एवानुष्ठीयतां किं कर्मणा इति चेत् ॥ कर्मयोगस्सुकरः अप्रमादश्च ॥ ज्ञानयोगो दुष्करः सप्रमादश्च ॥ कर्मारंभेषु कायक्लेशमात्रम् ज्ञानारंभेषु तु अत्यासन्नत्वेऽपि कफोणिगुडायमानप्रत्यग्विषयान्वेषणाय इन्द्रियमनोनियमनप्रयासक्लेशोऽपि ॥ अतः दुःखसाध्यत्वसाम्येऽपि सुकरत्वाप्रमादत्वरूपविशेषसद्भावात् कर्मयोग एव श्रेयान् ॥ अतः स एवानुष्ठेयः अतस्त्वं तमेवातिष्ठ ॥ ४८ ॥

अर्जुनः ॥ ब्राह्मणक्षत्रियवैश्यशूद्राणां पृथक् विहितानि कर्माण्युक्त्वा [1] 'स्वे-स्वे कर्मण्यभिरतः' इति यदुक्तं तदाक्षेपपरिहारेण आसिष्टमपि सदोषमपि स्वकर्मैव कर्तव्यमिति समर्थितम् ॥ [2] 'संसिद्धिं लभते नरः'॥इति [3] 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः'॥ इति च यदुक्तं तत्समर्थनाय केन प्रकारेण कर्म कुर्वन् केन प्रकारेण ज्ञानं प्राप्य मोक्षमाप्नोति ॥ तं प्रकारं आह ॥

कृष्णः ॥ असक्तबुद्धिस्सर्वत्र जितात्मा विगतस्पृहः ॥
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥

---

१. १८. ४५. २. १८. ४५. ३. १८. ४६.

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ॥
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

**असक्तेति** ॥ सर्वत्र सर्वेषु विषयेषु न सक्ता असक्ता बुद्धिः यस्य सः असक्तबुद्धिः जितः आत्मा मनः यस्य स जितात्मा विगता स्पृहा यस्य सः विगतस्पृहः पुरुषः संन्यासेन भगवदर्पणसहितकर्मयोगेन संन्यासेनैव वा परमां उत्कृष्टां निर्गतानि कर्माणि यस्मात् सः निष्कर्मा तस्य भाव. नैष्कर्म्यं तद्रूपा सिद्धिः तस्य सिद्धिर्वा नैष्कर्म्यसिद्धिः तां अधिगच्छति प्राप्नोति ॥ ४९ ॥

**सिद्धिमिति** ॥ हे कौन्तेय अर्जुन या ज्ञानस्य परा निष्ठा तां सिद्धिं प्राप्तः यथा ब्रह्म आप्नोति तथा समासेन संग्रहेणैव निबोध ॥ ५० ॥

जितात्मा वशीकृतमनाः अतएव नश्वरेषु ऐहिकामुष्मिकसुखेषु विगताभिलाषः अतएव सर्वत्र सुखसाधनेषु विषयेषु असक्तबुद्धिः एव अशब्दवाच्ये भगवति सक्तबुद्धिः अत एव वशीकृतमनाः अतः सुखेभ्यः तत्साधनेभ्यश्च स्वत एव निर्गतस्पृहः सन् संन्यासेन काम्यकर्मत्यागेन १ 'तत्कुरुष्व मदर्पणम्' ॥ २ 'संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसी' त्यक्तरीत्या ज्ञानद्वारा मोक्षार्थं कृतेन भगवति समर्पणयुक्तेन अकाम्यकर्मयोगेन च प्रयोजनपूत्तमां नैष्कर्म्यसिद्धिं निर्गतं विधिप्राप्तं कर्म यस्मात् सः निष्कर्मा मुक्तः तस्य भावः नैष्कर्म्यम् निर्गतं कर्म काम्यकर्म यस्मात् सः निष्कर्मा काम्यकर्माभाववान् तेन प्राप्यं नैष्कर्म्यं मोक्षः तस्मै सिद्धिः उपायः ज्ञानयोगरूपः तां ज्ञानयोगरूपां सिद्धिं ज्ञानेन प्रारब्धान्यसर्वकर्मनिवृत्तिरूपां सिद्धिं च प्राप्नोति॥ तां सिद्धिं प्राप्तः ब्रह्म नारायणाख्यं प्राप्नोति ॥ सा सिद्धिः कीदृशीति चेत् ॥ ज्ञानस्य या परा उत्कृष्टा निष्ठा स्थितिः स्थितप्रज्ञतारूपा तां प्राप्तो ब्रह्म प्राप्नोति ॥ 'असक्तबुद्धिः' इत्याद्युक्तप्रकारेण कर्म कुर्वन् 'असक्तबुद्धिः' इत्याद्युक्तप्रकारेण ज्ञानम् तेन च ब्रह्म प्राप्नोति॥ कर्मणा ज्ञानयोगरूपां सिद्धिं प्राप्तः तेन ब्रह्म प्राप्नोतीत्युक्तम् ॥ येन प्रकारेण प्राप्नोति तं प्रकारं सम्यक् ब्रूहि ॥ किं, कर्म तेन ज्ञानं

---

१. ९. २७. २. ९. २८.

तेन मोक्षः इत्येव क्रमः उत कर्मज्ञानयोर्मध्ये किमपि ज्ञानमोक्षयोर्मध्ये किमपि वर्तते वर्तते चेत् ॥ तं मार्गक्रमं ब्रूहि इति चेत् कर्म कुर्वन् येन प्रकारेण सिद्धिं प्राप्तः ब्रह्म प्राप्नोति ॥ तं प्रकारं संग्रहेणैव वक्ष्यामि ॥ श्रुत्वा सम्यगवधारय ॥ इदंब्रूहि इदंब्रूहि इति पुनः पुनः निर्बध्नाति मामयमिति नाहं त्वयि विरसो भवामि ॥ किंतु १'अमानित्वमदंभित्व'मित्याद्युक्तरीत्या मानदंभादिकं विहाय ज्ञातव्यार्थज्ञानाय ज्ञात्वा ज्ञापनाय च मामयं सम्यक् पृच्छतीति त्वयि नितरां हृष्यामि ॥ पितृष्वसुः पुत्रो ह्यसि त्वम् ॥ ४९ ॥ ५० ॥

अ॥ अर्जुनः॥ २सर्वकर्मत्यागासमर्थोऽविद्वान् कुर्यादेव स्वकर्म॥ कर्मणा ज्ञानं प्राप्तः सर्वकर्मत्यागसमर्थो विद्वांस्तु कर्मसंन्यासं कुर्यादित्युक्तम् ॥ सर्वकर्मत्यागसमर्थः कर्मसंन्यासाधिकारी कीदृशः स तेन कृतेन कर्मसंन्यासेन कां सिद्धिं प्राप्य ब्रह्मणा एकीभावलक्षणां विदेहमुक्तिं प्राप्नोति ॥ कर्मणा ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्य ज्ञानद्वारा ब्रह्मप्राप्तिप्रकारश्च कः ॥ तदुभयं सम्यक् ब्रूहि ॥

कृष्णः ॥ विषयेभ्यो निर्गताभिलाषः विषयेषु विरक्तः अतएव जितमनाः विषयेभ्यः प्रत्याहृत्य वशीकृतान्तःकरणः सर्वत्र पुत्रदारदेहगेहादिषु बुद्ध्यावासक्तिरहितः एवं कर्मणा शुद्धान्तःकरणः कर्मजां ज्ञानसाधनवेदान्तविचाराधिकारलक्षणां अपरमां सिद्धिं 'संसिद्धिं लभते नरः' ॥ 'सिद्धिं विन्दति मानवः ॥' इत्युक्तां प्राप्तः लब्धकर्मसंन्यासाधिकारः संन्यासेन ज्ञानपूर्वभाविना ज्ञानाङ्गभूतेन अविद्वत्संन्यासाङ्गसंन्यासापरपर्यायेण कर्मसंन्यासेन कर्मजायाः सिद्धेः फलभूतत्वात्ततोऽप्युत्तमां नैष्कर्म्यसिद्धिं निष्कर्म निष्क्रियं ब्रह्म तद्विषयकं ज्ञानं, निर्गतानि कर्माणि यस्मात् निष्क्रियब्रह्मात्मसंबोधात् सः निष्कर्मा ब्रह्मज्ञानी तस्य भावो वा नैष्कर्म्यं तद्रूपां सिद्धिं तस्य सिद्धिं वा प्राप्नोति ॥ एतादृशः कर्मसंन्यासाधिकारी [illegible]न्यासेन नैष्कर्म्यसिद्धिं संन्यासरूपां सर्वकर्मनिवृत्तिलक्षणां विद्वत्संन्यासाङ्गिसंन्यासशब्दितां प्राप्नोति ॥ एतादृशः संन्यासेन वेदान्तविचारजन्यज्ञानमूलकेन तत्वज्ञानेन नैष्कर्म्यस्य ३ ब्रह्मभावस्य सिद्धिं प्राप्नोति ॥ सं सम्यक् इतरभावापत्तिराहित्येन केवलब्रह्म-

---

१. १३. ८ २. कर्म कुर्वन् केन प्रकारेण ज्ञानद्वारा ब्रह्म प्राप्नोति ॥ ब्रूहि ॥ इति केचित् ॥
३. ब्रह्मभावप्राप्तिः जीवन्मुक्त्यवस्थाख्या ॥

त्मना नितरां आसः स्थितिः येन सः संन्यासः ब्रह्मज्ञानमिति निर्गतं कर्म यस्मात् तत् निष्कर्म निष्क्रियं ब्रह्म तस्य भावो नैष्कर्म्यं तस्य सिद्धिः लाभः इति च विग्रहः ॥ संन्यासेन सति ब्रह्मणि नितरां आसः स्थितिः निरन्तरब्रह्मनिष्ठारूपः तेन ब्रह्मभावं प्राप्नोति ॥ संन्यासेन सङ्कल्पादित्यागरूपेण ब्रह्मभावं प्राप्नोति ॥ संन्यासेन तत्वज्ञानेन तत्पूर्वकविद्वत्संन्यासेन वा निर्गतः कर्मभ्यो निष्कर्मा तस्य भावः नैष्कर्म्यं तस्य सिद्धिं सर्वकर्मसंबन्धराहित्येनावस्थानरूपां निष्क्रियात्मस्वरूपेणावस्थानरूपां वा प्राप्नोति ॥ उक्तं च मया ॥ १ 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी '॥ इत्यादि ॥ कर्मजां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः तया प्राप्तस्य ज्ञानस्य या परा निष्ठा समाप्तिः तद्रूपेण येन प्रकारेण ब्रह्म प्राप्नोति विदेहमुक्तिं प्राप्नोति तं प्रकारं मत्तो बुध्यस्व ॥ कर्मजां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः तया शास्त्रजन्यज्ञाननिष्ठारूपां अपरोक्षज्ञाननिष्ठां प्राप्य तद्रूपेण प्रकारेण विदेहमुक्तिं प्राप्नोति तं प्रकारं शृणु ॥ सिद्धिं उक्तरूपां प्राप्तः येन प्रकारेण ब्रह्म प्राप्नोति तथा निबोध ॥ ब्रह्मप्राप्तिः कीदृशीति चेत् ॥ या ब्रह्मज्ञानस्य परा निष्ठा समाप्तिः फलभूता तादृशी ब्रह्मप्राप्तिः ॥ कर्मणा तत्प्राप्तिप्रकारं शृणु ॥ सिद्धिं उक्तरूपां प्राप्तः येन प्रकारेण ब्रह्म प्राप्नोति ब्रह्मैवाहमिति साक्षात्करोति तं प्रकारं शृणु ॥ तदनन्तरं किमिति चेत् साक्षात्काररूपा निष्ठा शास्त्रजन्यविवेकज्ञानस्य परा अन्त्या निष्ठा तदनन्तरं अनुष्ठेयं नास्ति ॥ तादृशीं अपरोक्षसाक्षात्कारनिष्ठां ते वक्ष्यामि शृणु ॥ नैष्कर्म्यसिद्धिं जीवन्मुक्त्यवस्थारूपां प्राप्तः यथा ब्रह्म प्राप्नोति तथा शृणु ॥ सा ब्रह्मप्राप्तिः विदेहमुक्तिरूपा अपरोक्षसाक्षात्कारस्य परा निष्ठा परमं फलं ॥ विस्तरशो वक्तुं नेदानीमवकाशः ॥ अतः संक्षेपेणैव वक्ष्यामि ॥ शृणु ॥ उक्तस्य पुनःपुनर्वचनं पितृष्वसृपुत्रत्वप्रयुक्तप्रीत्यतिशयेन ॥ अतः परमेणादरेण वक्ष्यामि २ श्रुत्वा तदवधारय ॥ ४९ ॥ ५० ॥

वि ॥ ज्ञानयोगो दुष्करः अतो ज्ञानयोगादपि कर्मयोगः श्रेयान् ॥ अतः

---

१. ५. १३. २. अत्र, ज्ञानस्य विषयाकारत्वात् आत्मनश्चाविषयत्वात् अनाकारत्वाच्च तदाकारज्ञानायोगादात्मज्ञानासिद्धिः इति शंका समाधानं च भाष्ये विस्तरशः ॥

ज्ञानयोगयोग्येनापि कर्मयोग एव कार्यः इत्युक्तम् ॥ तेन ब्रह्मप्राप्तिप्रकारः कः तं ब्रूहि ॥

कृष्णः ॥ सर्वत्र असक्तबुद्धिः जितमनाः विगतस्पृहः कर्तृत्वादित्यागवान् पुरुषः त्यागादनन्यत्वेननिर्णीतेन सात्विकत्यागरूपेण संन्यासेन परमां नैष्कर्म्यसिद्धिं ज्ञानयोगस्यापि फलभूतां सर्वेन्द्रियव्यापारोपरतिरूपां ध्यानयोगनिष्ठां प्राप्नोति ॥ निष्कर्मा ध्यानयोगी तस्य भावो नैष्कर्म्यं तस्य सिद्धिः इति व्युत्पत्तिः ॥ तां सिद्धिं प्राप्तः येन प्रकारेण ब्रह्म परमात्मानं प्राप्नोति तं प्रकारं शृणु ॥ तद्ब्रह्म कीदृशमिति चेत् ॥ ज्ञानस्य या परा निष्ठा ध्यानात्मकस्य ज्ञानस्य परमप्राप्यभूतं तद्ब्रह्म ॥ सात्विकत्यागपूर्वककर्मयोगेन ध्याननिष्ठां प्राप्य तया परं ब्रह्म प्राप्नोति ॥ तत्प्राप्तिप्रकारं संक्षेपेणैव वक्ष्यामि ॥ हे पार्थ श्रुत्वा सम्यक् तमेव बुध्यस्व ॥४९॥५०॥

अर्जुनः ॥ अवहितोऽस्मि मार्गक्रमं ब्रूहि ॥

कृष्णः ॥ बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ॥
शब्दादीन् विषयान् त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ॥
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥
विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ॥
समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः ॥
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

बुद्ध्येति ॥ विशुद्धया बुद्ध्या युक्तः धृत्या धैर्येण आत्मानं मनः नियम्य

निगृह्य च शब्दः आदिः येषां ते शब्दादयः तान् शब्दादीन् विषयान् त्यक्त्वा रागश्च द्वेषश्च रागद्वेषौ तौ व्युदस्य दूरीकृत्य च ॥ ९१ ॥

विविक्तेति ॥ विविक्तं शुद्धं विजनं च देशं सेवत इति विविक्तसेवी लघु अशितुं शीलमस्य लघ्वाशी वाक् च कायश्च मानसं च वाक्कायमानसानि यतानि निगृहीतानि वाक्कायमानसानि येन सः यतवाक्कायमानसः नित्यं सदा ध्यानरूपो योगः ध्यानयोगः तस्मिन् परः ध्यानयोगः परः यस्य इति वा ध्यानयोगपरः नित्यं विगतः रागः यस्मात् सः विरागः तस्य भावः वैराग्यं तत् सम्यक् उपाश्रितः समुपाश्रितः ॥ ९२ ॥

अहङ्कारमिति ॥ अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहं विमुच्य त्यक्त्वा निगतं मम ममकारः यस्मात् सः निर्ममः शान्तः सन् ब्रह्मणि भूयं भवनं ब्रह्मणः भूयं भावो वा ब्रह्मभूयं तस्मै ब्रह्मभूयाय कल्पते अर्हो भवति ॥ ९३ ॥

ब्रह्मभूत इति ॥ ब्रह्मणि भूतः ब्रह्म भूतः प्राप्तो वा ब्रह्मभूतः प्रसन्नः आत्मा मनः यस्य सः प्रसन्नात्मा सन् न शोचति न कांक्षति सर्वेषु भूतेषु समः सन् परां मयि भक्तिः मद्भक्तिः तां लभते ॥ ४ ॥

भक्त्येति ॥ अहं तत्वतः यावान् अस्मि यश्च अस्मि तादृशं तं च मां अभि सम्यक् जानाति ॥ ततः मां तत्वतः ज्ञात्वा तस्मात् अनन्तरं तदनन्तरं मां विशते॥९९॥

कर्मणा मोक्ष इत्येतत् , हनुमान् प्रस्थाय गत्वा सीतां दृष्टवानितिवत् अस्मिन्नारोहणस्थाने आरुह्य शङ्करं उद्दिष्ट अवरोहणस्थाने अवरूढोऽस्मीतिवत् प्रथमसाधनचरमफलयोः कार्यकारणभावावधारणदार्ढ्याय ॥ कर्मयोगे प्रवृत्तः मोक्षमश्नुते अतः कर्मयोगे प्रवर्तितव्यमिति बुद्धिजननाय च ॥ कर्म प्रथमं साधनं मोक्षश्चरमं फलं त्रयोर्मध्ये अवान्तरारोहणावरोहणस्थानानीव कानि प्राप्तव्यानि अवान्तरफलानि ॥ अवान्तरफलेषु कानि प्रधानानि अवान्तरस्थानेषु प्रधानस्थानानीव तानि साध्यसाध-

मभावक्रमेण ब्रूहि ॥ जिज्ञासेऽहमिति चेत् ब्रवीमि तानि श्रुत्वा बुध्यस्व ॥ १ कर्मणा बुद्धिशुद्धिः विशुद्धया बुध्या युक्तस्य धैर्येण सात्त्विकेन मनोनिग्रहः धृत्या मनोनियमितवतः शब्दादिविषयत्यागः शब्दादीन् विषयान् विवेकेन दूरतस्त्यजतः रागद्वेषनिरासः रागद्वेषौ व्युदस्यतः जनसंमर्दरहितशुद्धदेशसेवनशीलता तां प्राप्तस्य लघ्वशनशीलता लघु स्वल्पं अन्तर्गत्वा मदस्य अजनकं च वस्तु लघु शीघ्रं अशितुं शीलमस्य तादृशस्य शरीरवाङ्मनोनियमनं यतवाक्कायमानसस्य २ सदाध्यानयोगनिष्ठा तां प्राप्तस्य ध्येयवस्तुगतरुचिविशेषेण तदितरसर्वविषयेषु भोग्यत्वबुद्धिनिरासः तद्रूपं वैराग्यं ३ सदासम्यगुपाश्रितस्य देहादिष्वहमिति बुद्धेः अभिजनधनविद्यामूलकाहंकारस्य बलाभिमानस्य अकार्यकरणप्रवृत्तिहेतुभूतस्य सत्यपि भीति हेतौ निर्भय प्रवृत्तिहेतुभूतस्य धर्मातिक्रमपर्यवसायिनो वृत्तिविशेषस्य विषयाभिलाषस्य सूक्ष्मरूपेणवर्तमानस्य कामलाभविरोधिविषयकमनःप्रज्वलनरूपक्रोधस्य भार्यापुत्रादेः गृहगेहादेश्च परिग्रहस्य च क्रमान्निरसनं अहङ्कारादीन् त्यक्तवतः अनात्मीयेष्वात्मीयत्वभ्रमरूपममतात्यागः त्यक्तममताकस्य उपशांतिरतिशयिता तां प्राप्तस्य ब्रह्मभावः ॥ कर्मयोगं कुर्वन् उक्तक्रमेण ब्रह्मभावाय योग्यो भवति ॥ ब्रह्मणि भूयं भवनं असंप्रज्ञातसमाधियोगनिष्ठारूपं तस्मै कल्पते ॥ ४ 'सगुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पत' इत्युक्तरीत्या ब्रह्मशब्दोदिते लक्ष्मीतत्त्वे स्थितिरूपं वा ॥ ५ ब्रह्मणो भवनं भावमं ब्रह्मणा ब्रह्मत्वेन भवनं अवस्थानं वा ब्रह्मैवाहमिति सच्चिदानन्दाखण्डाद्वितीयैकरसपरब्रह्मात्मनाऽवस्थानं वा ब्रह्मभूयं तस्मै कल्पते ॥ ६ 'ब्रह्म प्रकृतिबन्धरहितशुद्धात्मस्वरूपं तस्य भवनं प्राप्तिः तस्मै ब्रह्मणः शुद्धात्मनो भवनं भावः शुद्धात्मत्वं तस्मै कल्पते ॥ इदमात्मावलोकनरूपं वा कैवल्यरूपं वा फलं इदमवान्तरफलेषु प्रधानम् ॥ तत्र विलंब्य विश्रम्य तदुपजातातिशयितमनोनैर्मल्यस्य व्युत्थानदशायामपि सर्वथा-

---

१. 'सिद्धिं यथा विन्दति तच्छृ' (१८. ४५.) णित्युपक्रमात् कर्मणेति लब्धम् ॥ २. ध्यानयोगे परः आसक्तः ध्यानयोगः परो यस्य स वा ॥ ध्यानं ध्येयवस्तुचिन्तन योगः तत्र मनसः एकाग्रतोऽऽपादनं तयोः परः तौ परौ यस्य इति वा ॥ ध्यानेन योगः 'सुखेन ब्रह्मसंस्पर्श' (६. २८.) मित्युक्तः ब्रह्मसंस्पर्शः तत्परः इति वा॥ ३. नित्यमित्युभयान्वयि ॥ ४. द्वै॥ ५. अ॥ ६ वि ॥

तृष्णाशोकयोरनुदयः ॥ तादृशीं दशामापन्नस्य सर्वेषु भूतेषु १ 'सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ॥ साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते' ॥ इत्युक्तरीत्या समत्वबुद्धिः ॥ सर्वेषु प्राणिषु विषये २ 'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ॥ सुखं वा यदि वा दुःखं स योगी परमो मतः'॥ इत्युक्तरीत्या सुखदुःखसाम्यबुद्धिः ॥ लोकदृष्ट्या परकीयसुखदुःखेषु स्वसुखदुःखसाम्यबुद्धिः मद्व्यतिरिक्तेषु सर्वेषु अनादरणीयतया साम्यबुद्धिः ॥ समबुद्धेस्तस्य मयि परमभक्तिलाभः ॥ कर्मयोगादिसाधनभूतसाधनभक्त्यपेक्षया भूयसातिशयितायाः परभक्तेः साध्यभक्तिशब्दितायाः लाभः ॥ इयं भक्तिः अत्यर्थातिशयितमाहात्म्यज्ञानपूर्वकाविच्छिन्नसुदृढस्नेहप्रवाहोत्कर्षरूपा ॥ श्रवणमननाभ्यासफलभूतपरिपक्वनिदिध्यासनरूपा ३ 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभे'त्युक्तानां चतुर्णां भक्तिषु चतुर्थी ज्ञानलक्षणा परा चतसृषु अन्त्या ॥ ४ सर्वेषु भूतेषु मद्भक्तिं मद्भावनां परां लभते ॥ समस्य सर्वत्र ब्रह्मदृष्टिलाभः इति वा ॥ तया परया भक्त्या युक्तस्य तत्वज्ञानलाभः ॥ अहं तत्वतः यत्स्वरूपः देशकालगुणैर्यादृशव्याप्तिमांश्चास्मि तत्स्वरूपं तादृशव्याप्तिमन्तं च मां तत्वतः सम्यक् जानाति ॥ ततः भक्तितः तत्वतो मां ज्ञातवतः तदनन्तरं तत्वज्ञानानन्तरं मयि प्रवेशः मत्प्राप्तिरूपमोक्षरूपः तदनन्तरं प्राप्यपरब्रह्माभिन्नं मां विशते इति वा ॥ यथा ब्रह्म प्राप्नोति तथा निबोधेत्युपक्रमात् ॥ ५ स्वरूपतः स्वभावतश्च अहं यत्स्वरूपः यत्स्वभावश्च तं तत्स्वरूपं तत्स्वभावं च गुणतो विभूतितश्चाहं यावान् तावन्तं मम गुणा यावन्तः तावद्भिर्गुणैर्युक्तं मम विभूतयो यावत्यः तावतीभिर्विभूतिभिर्युक्तं च मां तत्वतो जानाति तत्वतो ज्ञात्वा तज्ज्ञानानन्तरं ततः ६ भक्तितः मां विशते॥ तत्वतोविशते तत्वतः प्रवेशः परिपूर्णप्राप्तिः सा च यथावस्थितसर्वाकारेणानुभवः ॥ उक्तश्चायं तत्वतः प्रवेशो मया 'तत्वेन प्रवेष्टुं च परन्तपे'त्यत्र ॥ ७ 'अहं उपाधिकृत-

---

१. ६. ९. २. ६. ३२. ३. ७. १६. ४. सर्वेषु भूतेषु समः सर्वेषु भूतेषु मद्भक्तिं इत्युभयथाऽन्वयः ॥ समः सन् सर्वेषु भूतेषु मद्भक्तिमित्यन्वयः॥ इति केचित् ॥ ५. वि ॥ ६. भक्त्येयुक्तायास्तस्या एव परतरशब्दिता उत्कटावस्था सत इत्यनूद्यते ॥ 'भक्त्या त्वनन्यया शक्य' (११. ५४) इति भक्तेरेव तत्वतःप्रवेशहेतुत्वोक्तेः ॥ ७. अ.

विस्तारभेदो यावान् विध्वस्तसर्वोपाधिभेदः स्वरूपतः यश्च तावन्तं तं च मां तत्वतो जानाति ॥ अहं अव्यक्तमहदादितत्तत्कार्योपाधियोगात् मायाकल्पितोपाधिभेदैर्यादृशोऽस्मि ॥ समष्टिस्थूलसूक्ष्मकारणोपाधिभिः विराट् हिरण्यगर्भः ईश्वर इति, व्यष्टिस्थूलसूक्ष्मकारणोपाधिभिः विश्वः तैजसः प्राज्ञः इति, गुणत्रयोपाधिभिः ब्रह्मा विष्णुः ईश्वरः इति, अवान्तरवृत्तिभिः देवाः मनुष्याः तिर्यंचः इति, उपाधिभेदैर्यादृशोऽस्मि तादृशं स्वरूपतः योऽस्मि पारमार्थिकस्वरूपेण नित्यः शाश्वतः एकः अद्वितीयः अखण्डसच्चिदानंदैकरसश्चेति स्वरूपेण यादृशोऽस्मि तादृशं च मां तत्वतः जानाति ॥ परिपक्वज्ञाननिष्ठया ब्रह्मैवाहमिति साक्षात्करोति॥ ततः भक्तिप्राप्त्यनन्तरं तया भक्त्या मां तत्वतो ज्ञात्वा तदनन्तरं तत्वज्ञानानन्तरं १ देहपातानन्तरं मां विशते॥ मद्रूपो भवति ॥ विशते स्वात्मना साक्षात्कृते निर्गुणे ब्रह्मणि एतदेवाहमस्मी २ त्यहं बुद्धिं प्रवेशयति ॥ न तु देवदत्तो गृह इव प्रविशति ॥ ३ 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुत्या ब्रह्मात्मनाऽवस्थितस्यैव ब्रह्मभावप्राप्तिरवगमात् ॥ ४ 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते॥ अथ सोऽभयं गतो भवति' इति श्रुतिः ॥ प्रतिष्ठां विन्दते निर्गुणे ब्रह्मणि अहंबुद्धिं प्रतिष्ठापयतीत्यर्थः॥ सविशेषं परित्यज्य निर्विशेषब्रह्मात्मना सुखं तिष्ठति॥ ५ 'ब्रह्मभूयाय कल्पते' 'भक्तिं लभते' 'मामभिजानाती'ति त्रेधा ज्ञानमुच्यते कथं ज्ञानस्य ज्ञानापेक्षा इति चेत् ॥ उत्तरोत्तरोत्कर्षविवक्षया पूर्वपूर्वज्ञानापेक्षोक्तिः ॥ इमास्तिस्रोजीवन्मुक्तेरवस्थाः ॥ अत्र यद्वक्तव्यं तदखिलं ६ 'तस्य कार्यं न विद्यते' इत्यत्रोक्तं मया ॥ ७ तदनुस्मर॥ ज्ञानेनाज्ञाननाशात् सद्यएव कुतो मुक्तिर्नसिध्यति देहपातप्रतीक्षा किमर्था इति चेत् बलवत्प्रारब्धारब्धदेहपातावधि अवस्थानस्य दुस्त्यजत्वात् ॥ अतएव

---

१. क्त्वाप्रत्ययेनानन्तर्यस्य लाभे तदनन्तरमित्यस्य वैयर्थ्यापत्त्याऽयमर्थो युक्तः ॥ २ अत्र ज्ञानतदनन्तरप्रवेशक्रिये न भिन्ने किंतु ज्ञानातिरिक्तफलान्तराभावज्ञानमेव प्रवेशः ॥ ३ तै. आ. २. २. ४. तै. २. ७. ५. १४. २६. ६. ३. १७. ७. अत्र 'चतुर्थी भूमिका ज्ञानं तिस्रः स्युः साधनं पुरा ॥ जीवन्मुक्तेरवस्थास्तु परास्तिस्रः प्रकीर्तिताः' ॥ इति पूर्वोक्तं स्मर्तव्यम् ॥

१ तदनन्तरं इत्यस्य देहपातानन्तरमित्यर्थ उक्तः ॥ अत्र कर्मणा शुद्धबुद्धिरुक्तमार्गक्रमेण मोक्षं लभते इति मोक्षकर्मणोस्साध्यसाधनभावो ज्ञातव्यः ॥ ब्रह्मभूयाय कल्पते ब्रह्मभूतः भक्तिं लभते भक्त्या जानाति इत्युक्त्या तेषां अवान्तरफलेषु प्राधान्यं ज्ञायते॥ केषांचिदवान्तरस्थानानां प्राधान्यवत् ॥ ब्रह्मभूतः भक्त्या ज्ञात्वा इति उक्तस्य पुनरनुवादस्तेषां प्राधान्येन तत्रादरातिशयात् ॥ यथा कश्चित् प्रथमारोहणस्थाने आरुह्य प्रधानावान्तरस्थलेषु विश्रम्य उद्दिष्टमवरोहणस्थलं प्राप्य अवरुह्य प्राप्तव्यस्थलं प्राप्य प्रवेष्टव्यगृहं विचार्य गत्वा प्रविशति तद्वत् इति बोध्यम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

द्वै ॥ सञ्जयः ॥ एवं उपसंहृतकृत्स्नगीताशास्त्रार्थो भगवान् अन्ततः कर्म करणीयमेव जातं हा हन्त हन्त का गतिः इत्यन्तरनुशयमर्जुनस्य विदित्वा उक्त्वा विवृत्य दृढीकृत्य उपसंहृतमपि कर्मयोगं पुनस्सार्धश्लोकद्वयेनाह ॥

कृष्णः ॥ सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ॥
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ॥
बुद्धियोगमुपाश्रित्य मच्चित्तस्सततं भव ॥५७॥
मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ॥ ५८॥ ॥

सर्वेति ॥ अहं विशिष्टः अपाश्रयः व्यपाश्रयः यस्य सः मद्व्यपाश्रयः सन् सर्वाणि च तानि कर्माणि च सर्वकर्माणि सर्वकर्माण्यपि कुर्वाणः मम प्रसादः मत्प्रसादः तस्मात् शश्वत् सदा भवं शाश्वतं न विद्यते व्ययः यस्य तत् अव्ययं पद्यत इति पदं तत् आप्नोति ॥ ५६ ॥

---

१ विशति आत्मनीति विशत् अज्ञानं तस्मै विशते अज्ञानाय तत्समूलमुन्मूलयितुं तत्वतो ज्ञात्वा अन्तरं भेदः अनन्तरं भेदशून्यं तत् शाश्वतं पदं आप्नोतीत्युत्तरेणान्वयः॥ विशते पूर्ववत् ज्ञात्वा तदनन्तरं ततः व्याप्तः ब्रह्मीभूतः॥ ततः कारणब्रह्मभावमापन्नः अनन्तरं कारणब्रह्मभावापत्तेरनुपदमेन तत् तत्पदाभिधेयं ब्रह्म विशते प्रविशति ॥ कार्योपाधीनां जीवानां कारणोपाधिश्वरप्राप्तिद्वारैव निष्कलब्रह्मप्राप्तिरिति निष्कर्षः ॥ इत्याद्याहुः ॥

चेतसेति ॥ अहं परो यस्य सः मत्परः सन् चेतसा सर्वकर्माणि मयि संन्यस्य समर्प्य बुद्धिरूपो योगः बुद्ध्या योगः बुद्धेः योगो वा बुद्धियोगः तं उपाश्रित्य सततं मयि चित्तं यस्य सः मच्चित्तः भव ॥ ५७ ॥

मच्चित्तइति ॥ मयि चित्तं यस्य सः मच्चित्तः सन् मम प्रसादः मत्प्रसादः तस्मात् सर्वाणि च तानि दुर्गाणि च सर्वदुर्गाणि तरिष्यसि ॥ ५७॥ ॥

हे पार्थ किमालोचयसि कर्णागमेव नियतं कर्म ॥ मामेव १ सम्यगाश्रयणीयमाश्रित्य मामेवोद्दिश्य न तु स्वर्गादिकं फलान्तरं विहितानि २ सर्वाण्यपि कर्माणि सदा कुर्वन् मत्प्रसादात् नित्यं निर्विकारं निर्दुःखं ३ परमप्राप्यं मामाप्नोति ॥ उक्तं चेदं मया ॥ ४ 'जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामय'मिति ॥ ५ 'असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः' ॥ इति ॥ ६ 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः'॥ इति च ॥ मदर्थं कर्माणि ७कुर्वन्नपि तैः कर्मभिर्हेतुभूतैः मत्प्रसादद्वारा मोक्षमाप्नोति॥ उक्तं चेदं मया ॥ ८ 'श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः'॥ इति॥ ९ 'मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसी'ति च ॥ कर्तव्यानि सर्वाण्यपि कर्माणि मदाश्रयेणैव कर्तव्यानि॥ न त्वेकमपि कर्म अन्याश्रयेण कर्तव्यम्॥ अतः कर्माणि कृत्वा कृतानि तानि सर्वाणि कर्माणि मामेव परमप्राप्यं तैः कर्मभिराराध्यं तेषां कर्मणां समर्पणस्थानं मत्वा मनसा मयि १० समर्पय ॥ उक्तं च मया ॥ ११ 'संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसी'ति ॥ समर्प्य च कर्माणि तेन तुष्टस्य मम प्रसादात् बुद्धियोगशब्दितं १२ ज्ञानयोगमुपाश्रय॥ सदा मच्चित्तो भव॥ कर्मणा शुद्धमन्तःकरणं मयि निवेशय ॥ तस्मिन्नन्तःकरणे मां निवेशय॥ संप्रज्ञातासंप्रज्ञातसमाधियोगवान् भव॥ एवं सततं मच्चित्तश्चेत् तेन मत्प्रसादात् सर्वदुर्गाणि दुःखेनापि गमयितुमशक्यानि सर्वाणि सांसारिकदुःखानि तरिष्यसि अत्येष्यसि मुक्तिमाप्स्यसि॥ उक्तं चेदं मया॥

१. अहं विशिष्टः अपाश्रयो यस्य सः ॥ २. कर्माण्यपीत्यन्वयः ॥ ३. पद्यते गम्यते इति पदम्॥ ४. २. ५१. ५. ३. १९. ६. १८. ४५. ७. कुर्वाणोऽपीत्यन्वयः ॥ ८. ३, ३१. ९. १२. १०. १०. न समर्पणमात्रेण मोक्षः देवतान्तरोद्देशेन कृत्वा अन्ते मयि समर्पयतां त्रैविद्यानामपि मोक्षप्रसङ्गात्॥ अतः मद्व्यपाश्रयः मत्परः सततं मच्चित्त इत्युक्तम् ॥ ११ ९. २८. १२. बुद्धेर्योगे प्रत्याहारे उपाश्रितः मय्येव निरुद्धमनस्को भवेति केचित् ॥

१ 'समाधावचला बुद्धिस्तदा योगमवाप्स्यसी 'ति॥ २ 'ददामि बुद्धियोगं तं येन मामुपयांति ते ॥' इति च ॥ अतः ज्ञानेन मत्प्रसादद्वारा मोक्षसिद्धये कर्तव्यमेव युद्धाख्यं नियतं कर्म त्वयेति पुनरप्यादरातिशयेन कृत्स्नगीताशास्त्रार्थसंग्रहोपदेशोऽयं ते मया कृतः ॥ अवधारयेमम् ॥ ५६ ॥ ५७ ॥ ५७॥ ॥

अ॥ अर्जुनः॥ ३ 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ इत्यारभ्य ४'ज्ञात्वा विशते तदनन्तरम् '॥ इत्यन्तेन स्वविहितकर्मानुष्ठायिनः क्रमान्मोक्ष इत्येतदुपपाद्योपसंहृतम् ॥ यदि विहितकर्मानुष्ठायी पापान्याचरेत् तर्हि तस्य मोक्षो न स्यात् ॥ तथा च तदीयं कर्मानुष्ठानं निष्फलं स्यात् ॥ पापकृच्चाहं किं मम कृतेन कर्मणा भविष्यति अतोऽहं न करिष्यामि ॥ वद ॥

कृष्णः ॥ ५सर्वकर्माणि निषिद्धकर्माणि सदा ६ कुर्वाणोऽपि मद्व्यपाश्रयश्चेत् भक्त्या मामेवाश्रितश्चेत् मामेवाश्रित्य विहितकर्माणि मदाराधनार्थं कृतवांश्चेत् मत्प्रसादात् शाश्वतं अव्ययं पदं वैष्णवं मोक्षस्थानं अवाप्नोति ॥ न तस्य पापेन मोक्षः प्रतिबध्यते ॥ मद्व्यपाश्रयत्वरूपया मद्भक्त्या मामेवोद्दिश्य कृतस्य कर्मणः मत्प्रसादेन सर्वपापनिरसनद्वारा मोक्षदानसामर्थ्यसद्भावात् ॥ इयं कर्मणः स्तुतिः न पापाचरणाभ्यनुज्ञा ॥ ७' अपि चेत्सुदुराचार ' इत्यादिवत् ॥ अतः मत्परः सन् कर्माणि कृत्वा तानि ८ मनसा मयि समर्प्य ९बुद्धियोगं बुद्धेर्मयि योगं ध्यानयोगं ज्ञानयोगं च उपाश्रित्य सदा मच्चित्तो भव ॥ एवं मच्चित्तः सन् सर्वाणि १० दुस्तराणि संसारबीजभूतानि रागद्वेषादीनि मत्प्रसादात्तरिष्यसि॥ मुक्तो भविष्यसि॥ ११' मत्प्रसादादवाप्नोति' १२' मत्प्रसादात्तरिष्यसि ' इत्युक्तया मत्प्रसाद एव सर्वपापनिरसनद्वारा मोक्षं प्रापयिष्यति ॥ महानसौ महिमा मत्प्रसादस्येति सूच्यते ॥ प्रतिषिद्धानि कुर्वाणोऽपि विहितकर्मणा ज्ञानद्वारा मोक्षमाप्नोति ॥ किमुत तान्यकुर्वाणस्त्वादृशः ॥ अतः निर्भयं निश्चिन्तं निःशङ्कं कर्तव्यं कर्म कृत्वा मय्यर्पय ॥

---

१. २. ५३. २. १०. १०. ३. १८. ४६. ४. १८. ५५. ५. सर्वाणि कर्माणि नित्यानि नैमित्तिकानि इति केचित् नित्यानि नैमित्तिकानि काम्यानि च इति च । ६. कुर्वाणोऽपि कुर्वाण एव वा ॥ ७. ९. ३०. ८. चेतसा विवेकबुद्ध्या वा ॥ ९. बुद्ध्य योगम् बुद्धेः मयि योगं सर्वत्र परमेश्वरत्वबुद्धिरूप योगम् बुधेः ज्ञानस्य योगः उपायभूतः श्रवणमननादिः तम् ॥ १०. दुर्गाणि अविद्याकामकर्माणि सत्वरजस्तमांसि सकार्याणि जन्ममृत्युजरादुःखानि सांसारिकदुःखानि ॥ कामक्रोधादीनि अज्ञानादीनि वा ॥ ११. १८. ५६ १२. १८. ५८.

अर्जुनः ॥ अशुद्धान्तःकरणस्य कर्मयोगः शुद्धान्तःकरणस्य कर्मसंन्यासः इत्युक्तम् ॥ १ 'कर्मणैव हि संसिद्धिं आस्थिता जनकादयः'॥ इत्यत्र ब्राह्मणस्यैव कर्मसंन्यासः न क्षत्रियादेरित्युक्तम् ॥ शुद्धान्तःकरणो मादृशः क्षत्रियादिः किं कर्माणि करोतु उत संन्यस्यतु ॥ कर्माणि करोतु इति चेत् ॥ २ 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥ योगारूढस्य तस्यैव शमः कारणमुच्यते'॥ इति योगं अन्तःकरणशुद्धिमारूढस्य कर्मानुष्ठाननिषेधविरोधः ॥ संन्यस्यतु इति चेत् ३ 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः'॥ इति ब्राह्मणधर्मस्य संन्यासस्य क्षत्रियं प्रति निषेधविरोधः॥ अतः उभयथाऽपि विरोधात् गत्यन्तरस्य चाभावात् क्षत्रियादेः कर्मत्याग एव श्रेयान् बन्धहेतुपरित्यागरूपत्वात्॥ न तु कर्मयोगः तस्य बन्धकत्वात् ॥ अतः शुद्धान्तःकरणोऽहं सर्वकर्मसंन्यासमेव करोमि न कर्मयोगम् ॥ किं ब्रवीषि ॥

कृष्णः॥ शुद्धान्तःकरणः क्षत्रियादिः मद्व्यपाश्रयः सन् सर्वाणि वर्णाश्रमोचितविहितकर्माणि कुर्वाण एव तेन मत्प्रसादात् शाश्वतं अव्ययं पदं अवाप्नोति ॥ न कर्मसंन्यासेन ॥ सर्वाणि निषिद्धादीनि कुर्वाणोऽपि मत्प्रसादात् शाश्वतं परमं पदमवाप्नोति ॥ यद्यपि शुद्धान्तःकरणः न कुर्यादेव प्रतिषिद्धानि यदि कुर्यात् तथाऽपि मत्प्रसादात् प्रत्यवायानुत्पत्त्या मद्विज्ञानेन मोक्षमाप्नोतीति कर्मणः स्तुतिरियं ॥ अतः क्षत्रियस्त्वम् समत्वबुद्धिरूपं योगं उपाश्रित्य चेतसा विवेकबुध्या मत्परः सन् सर्वकर्माणि कृत्वा तानि मयि संन्यस्य सततं मच्चित्तो भव॥ एवं मच्चित्तस्त्वं मत्प्रसादात् सर्वाणि दुर्गाणि कामक्रोधादीनि तरिष्यसि ॥ मुक्तो भविष्यसि ॥ अतस्त्वं कर्मैव कुरु ॥ ५६ ५७ ५७॥ ॥

वि ॥ अर्जुनः ॥ कर्माणि ज्ञानद्वारा मोक्षसाधनत्वात् करणीयानीत्युक्त्वा उपपाद्योपसंहृतम् ॥ किं मोक्षसाधनानि कर्माणि नित्यनैमित्तिकान्येव ॥ उत काम्यान्यपि अकामनया अनुष्ठितानि ॥ ब्रूहि ॥

कृष्णः ॥ न केवलं नित्यनैमित्तिकान्येव कर्माणि कर्तव्यानि किंतु काम्या-

१. ३. २०. २ ६. ३. ३. ३. ३५.

न्यपि कर्माणि फलं सङ्गं च त्यक्त्वा करणीयानि ॥ कुत इति चेत् मद्व्यपाश्रयः मयि संन्यस्तकर्तृत्वादिकः सर्वाणि नित्यानि नैमित्तिकानि काम्यान्यपि कर्माणि कुर्वाणः मत्प्रसादात् शाश्वतं अव्ययं परं [illegible] मां प्राप्नोति ॥ अतः त्वं मत्परः सन् चेतसा परेशपत्वादिविशेषितयथावस्थितात्मगोचरबुध्या नित्यानि नैमित्तिकानि काम्यान्यपि कर्माणि अ[illegible]नुसन्धानादिरूपं बु[illegible]योगमुपाश्रित्य कृत्वा तानि मयि समर्प्य सदा [illegible] कर्माणि कुर्वन् मत्प्रसादादेव सर्वाणि सांसा[illegible] तरिष्यसि मुक्तो भविष्यसि ॥ एवं नित्यानां नैमित्तिकानां काम्यानां च कर्मणां फलसङ्गादिपरित्यागेन कृतानां परम्परया तत्वतःप्रवेशशब्दितपरिपूर्णभगवत्प्राप्तिपर्यन्तं विपाकमुपपाद्य ज्ञानयोगाधिकारिणाऽपि कर्मयोग एव कर्तव्य इति निगमितम् ॥ अवधारयेदमखिलमवधानेन ॥ ५६ ॥ ५७ ॥ ५७॥ ॥

सञ्जयः ॥ यद्यप्येतावता प्रबन्धेन कर्मयोगस्सपरिकरः शिरसि मे स्थापितः तथाऽपि न तमहं चिकीर्षामि ॥ यद्यपि कर्मयोगोऽभ्युपगन्तुं शक्यते ॥ तथाऽपि युद्धाख्यं कर्म नाभ्युपगन्तुमर्हम् ॥ तस्य हिंसारूपत्वेन भीष्मादिप्रतियोगिकत्वेन च पापद्वारा नरकसाधनत्वात् ॥ असकृदहं युद्धाख्यं विहितं कर्म कुर्विति ब्रवीमि मदुक्तं कर्तुं केयमाशङ्का तव ॥ अतो निःशङ्कं कुर्विति चेत् 'युक्तियुक्तं वचो ग्राह्यं न तु पूरुषगौरवात्' ॥ इति न्यायेन युक्तिप्रमाणविरुद्धेऽर्थे त्वद्वचनस्याप्रयोजकत्वात्॥ इति, पैतृष्वसेयत्वभगिनीपतित्वमातुलेयत्वस्याल्पवरूपसंबन्धविशेषसंजातधैर्यावष्टंभेन वदति पार्थे भगवान् निर्भर्त्स्य तं हेतुभिरनिष्टमपि कर्म युद्धाख्यमङ्गीकारयन् करोमि न करोमीति न केनापि वक्तुं शक्यं अस्वतन्त्रत्वात् ॥ स्वतन्त्र ईश्वरो यथा कारयति तथा कर्तव्यमेव कर्म सर्वैः ॥ स चेश्वरो यथा साधु कर्म कारयेत् तथा तदानुकूल्यं संपादनीयं इत्यर्थं पार्थस्य स्वस्य च लीलाविवादव्याजेन स्थापयति सार्धचतुष्टयेन ॥

कृष्णः ॥ अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥

अथेति ॥ अथ पक्षान्तराश्रयेण त्वं अहङ्कारात् न श्रोष्यसि चेत् विनङ्क्ष्यसि नाशं प्राप्स्यसि ॥ ५८ ॥

अथ एतावता प्रबन्धेन मदुक्तं पक्षमनादृत्य पक्षान्तरमवलंब्य त्वं, कोऽयं मे वक्तुमिति अहङ्कारात् न श्रोष्यसि श्रुतमर्थं नानुष्ठास्यसि चेत् तर्हि ऐहिकामुष्मिकसकलपुरुषार्थभ्रंशरूपं आत्यन्तिकविनाशं प्राप्स्यसि ॥ ५८ ॥

अर्जुनः ॥ न श्रोष्यसि चेत् विनंक्ष्यसीति शापमेव दातुं शक्नोषि ॥ न तु ममानिष्टं तवेष्टं युद्धाख्यं कर्म कारयितुं शक्नोषि तव शक्तिरेतावती ॥

कृष्णः ॥ [1]यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ॥
[2]मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

यदिति ॥ अहङ्कारं आश्रित्य न योत्स्ये इति मन्यसे इति यत् एषः ते तव व्यवसायः निश्चयः मिथ्या वृथा निष्फलः प्रकृतिः त्वां नियोक्ष्यति प्रेरयिष्यति ॥ ५९ ॥

कर्तुमकर्तुमहमेव प्रभुः नान्यः कुरु मा कुरु इति वक्तुं मे प्रभुरस्ति इति आत्मनि कर्तृत्वाभिमानरूपमहङ्कारमाश्रित्य न योत्स्ये इति मन्यसे मत्वा वदसि च ॥ उक्तं किल त्वया ३ 'न योत्स्ये' इति ॥ इति यत् एष ते 'न योत्स्ये' इत्येवं निश्चयः तत्पूर्वकं तथा वचनं च इत्युभयं मिथ्या वृथा निष्फलं कुत इति चेत् प्रकृतिः क्षत्रियस्वभावः तज्जात्यारंभकरजोरूपपरिणतप्रकृतिः ईश्वरेच्छा वा त्वां अनिच्छन्तमपि युद्धे प्रेरयिष्यति तत्प्रेरितश्च करिष्यस्येव ॥ अतो मिथ्या ते व्यवसायः ॥ यथा अनिष्टमकार्यमनुचितमपि कर्म पिशाचेन प्रेरितः करोति तद्वत् ॥ ॥ ५९ ॥

अर्जुनः ॥ अनिच्छन्तं मां प्रकृतिः कथं कारयेत् ॥ युद्धं कर्तुमहं नेच्छामि अतो न करिष्यामि किं करोषि ॥

कृष्णः ॥ स्वभावजेन कौन्तेय निबद्धस्स्वेन कर्मणा ॥
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥ ६० ॥

स्वभावजेनेति ॥ हे कौन्तेय अर्जुन स्वभावाज्जायत इति स्वभावजं तेन स्वस्य कर्म

---

१ वि ॥ यद्यहमितिपाठः ॥ २. छै. मिथ्यैव इति पाठः ॥ ३. २. ९.

स्वकर्म तेन निबद्ध त्वं मोहात् यत् कर्म कर्तुं नेच्छसि न वशः अवशः पराधीनः त्वं तदपि करिष्यसि ॥ ६० ॥

प्रकृतिः इदानीं वा कारयितुं यतिष्यते उत्पत्तेः पूर्वमेव येन येन यद्यत्कर्म कर्तव्यम् तस्य तस्य तत्तत्कर्मकरणोचितब्राह्मणादिजातिलम्भनेन तं तं तेन तेन कर्मणा निबध्नाति ॥ अतः स्वभावः पूर्वसंस्कारः क्षात्रियस्वभावो वा पूर्वकर्म वा तन्मूलकेन कर्मणा १'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनं' मित्युक्तेन क्षात्रेण स्वकीयकर्मणा निबद्धः तदपि करिष्यसि ॥ किं तदिति चेत् मोहात् इदमनुचितमकार्यमनिष्टमिति भ्रमात् यत् युद्धाख्यं कर्म कर्तुं नेच्छसि तत् युद्धाख्यं कर्म ॥ किमहं कुर्यामनिच्छन् तदिति चेत कस्त्वं न कुर्यामिति वक्तुं अवशो हि त्वं त्वं त्वदधीनो न किंतु प्रकृतेरधीनः अतः अनिष्टमपि सा कारयति पिशाचिकेव ॥ 'कर्तुं नेच्छसी'ति 'करिष्यसी'ति च वर्तमानभविष्यद्व्यपदेशेन इदानीं प्राप्तावसरे धर्मयुद्धानुष्ठानं परित्यज्य अतिक्रान्तावसरे परपरिभवव्रीलितो गतजलसेतुबन्धं करिष्यसीति सूच्यते ॥ उक्तं चेदं मया ॥ २'अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः' ॥ इति ॥ अपिरेवार्थे ॥ तदेव करिष्यसि ॥ कौन्तेय क्षत्रियक्षेत्रजोऽसि ॥ मा वद इतः परं युद्धं न करिष्यामीति ॥ ६० ॥

अर्जुनः ॥ कथं चेतनं मां अचेतना प्रकृतिः प्रेरयितुमीष्टे प्रकृतिं वशीकृत्य प्रवर्तयितुं मदन्यः कोऽतरः स्वतन्त्रोऽस्ति ॥ ब्रूहि ॥

कृष्णः ॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

ईश्वर इति ॥ हे अर्जुन ईश्वरः सर्वाणि च तानि भूतानि च सर्वभूतानि तेषां हृद्रूपो देशः हृदः देशो वा हृद्देशः तस्मिन् यन्त्रं आरूढानि यन्त्रारूढानि सर्वाणि च तानि भूतानि च सर्वभूतानि तानि मायया भ्रामयन् सन् तिष्ठति ॥ ६१ ॥

---

१. १८. ४३. २. २. ३६.

हे अर्जुन त्वदन्यः परमचेतनः स्वतन्त्र ईश्वरः त्वां प्रवर्तयितुं तव हृदयदेशे वर्तते॥ न केवलं तव किंतु सर्वेषामपि प्राणिनां॥ किं कुर्वन् वर्तते इति चेत् १यन्त्रं शरीराख्यं आरूढानि सर्वभूतानि कर्मानुगुणं नानाकर्मसु स्वेच्छया प्रकृत्या वा निजशक्तिरूपया मायया वा सङ्कल्पेन वा प्रवर्तयन् वर्तते ॥ दारुनिर्मितयन्त्रलंबकदीर्घायःशलाकाप्रोतदार्वादिमयगजतुरगच्छागादिप्रतिमारूपयन्त्रारूढपुरुषान् तद्धस्तदण्डानुगुणं भ्रामणेन भ्रामयन् यन्त्रस्वामी पुरुष इव सर्वभूतानि भ्रामयन् वर्तते ॥ २'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च'॥ ३'य आत्मनि तिष्ठन्नात्मनोऽन्तरः'॥ ४'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा'॥ ५'दहं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्॥ तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' ॥ इत्याद्याः श्रुतयः ॥ शुद्धान्तःकरणः शुद्धकर्मकारी च त्वं तमीश्वरं ज्ञातुं समर्थोऽसि ॥ स तादृश ईश्वरः प्रकृत्या स्ववशया कर्मानुगुणं स्वभावानुगुणं च कारयति ॥ स यथा कारयति तथा करणीयम् ॥ अतः, करोमि न करोमीति वक्तुं न शक्यते ॥ अतः स युद्धं कारयेत् ॥ त्वं च कुर्याः॥ अवधारयेदम् ॥ ६१ ॥

अर्जुनः ॥ यदि त्वमिव स ईश्वरः बहिः स्थित्वा युद्धं कुर्विति निर्बध्नीयात् तर्हि त्वयेव तेनापि विवदितुं शक्यं गूढस्सन् अन्तः स्थित्वा हि नियमयतीत्युच्यते ॥ किं कर्तव्यम् ॥ का गतिः ॥ स यथा उचिते विहिते हिते कर्मणि प्रवर्तयेत् तथा समनुकूलयितुं क उपायः करणीयः तदाज्ञानुसारेण कृतं कर्म सदोषमपि विगुणमपि निर्दोषं सगुणं कथं संपद्यते ॥ ब्रूहि ॥

कृष्णः ॥ तमेव शरणं गच्छ सर्वभावेन भारत ॥
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥

तमेवेति ॥ हे भारत अर्जुन सर्वश्चासौ भावः प्रकारः स च सर्वभावः तेन तं ईश्वरमेव शरणं गच्छ ॥ तस्य प्रसादः तत्प्रसादः तस्मात् परां शान्तिं सुखं उपरतिं च शाश्वतं स्थानं च प्राप्स्यसि ॥ ६२ ॥

---

१. यन्त्रमिव यन्त्रं उत्क्रमणादिसाधनं लिङ्गशरीरं इति केचित्॥ २. श्वे ६. ११. ३. बृ ५. २२. ४. तै. आ. ३. ११ २ ५ ना. १२. ३. ६ परमेश्वरभूतमिति छान्दोग्याः पठन्ति ॥

हे भारत तमेव सर्वेश्वरं १ सर्वप्रकारेण कायेन वाचा मनसा च शरणं रक्षकं उपायं गच्छ ॥ अन्तर्यामित्वोपदेष्टृत्वप्राप्यत्वप्रापकत्वादिभिरनेकैः प्रकारैरेक एवावस्थित इत्यनुसन्धाय शरणत्वेन तमेवाश्रय ॥ अनन्यभावेन तमाश्रय ॥ भारता हि तमेवाश्रित्य महान्तमुत्कर्षं प्राप्ता उपलभ्यन्ते ॥ यदि तं शरणीकुर्याः तर्हि तस्य प्रसादात् परां अतिशयितां शान्तिं बुद्धेर्भगवन्निष्ठतां उपशान्तिं वृत्तेरुपरतिं अविद्यातत्कार्यनिवृत्तिं सर्वकर्मबन्धोपशमं शाश्वतं वैकुण्ठादिस्थानं च मोक्षस्थानं अद्वितीयस्वप्रकाशपरमानन्दरूपेणावस्थानं च विकारराहित्येन सदातिष्ठतीतिस्थानं अखण्डैकरसाद्वितीयपरब्रह्माभिन्नं स्वस्वरूपं तिष्ठत्यस्मिन् सर्वमिति स्थानं परब्रह्म वा प्राप्स्यसि ॥ तमीश्वरं शरणीकुरु ॥ स त्वां उचिते विहिते हिते कर्मणि प्रेरयेत् ॥ तदाज्ञानुसारेण कृतं कर्म सर्वात्मना तद्व्यपाश्रयेण सदोषं विगुणमपि निर्दोषं सगुणं संपद्यते॥ स चेश्वरोऽहमेव २ मयि सर्वाणि कर्माणि संन्यस्य ' ३ 'ब्रह्मण्याधाय कर्माणि ' ४ 'ये तु सर्वाणि कर्माणि मयि संन्यस्य ' ५ 'स्वकर्मणा तमभ्यर्च्य सिद्धिं ' ६ ' चेतसा सर्वकर्माणि मयि संन्यस्य ' ७ ' तमेव शरणं गच्छ ' इति परोक्षापरोक्षाभ्यां ब्रह्मत्वेन ममैव निर्देशात् ॥ ८ ' मामेकं शरणं व्रजे 'ति वक्ष्यमाणत्वाच्च ॥ मद्व्यपाश्रयस्सन् सर्वकर्माणि कुर्वाणो मत्प्रसादादव्ययं पदमवाप्नोति तमेव शरणं गच्छ तत्प्रसादाच्छाश्वतं स्थानं प्राप्स्यसि इति परोक्षापरोक्षाभ्यां निर्देशाच्च ॥ अतो मदुक्तमनुतिष्ठ ॥ मदाज्ञानुसारेण कृतं कर्म सदोषमपि विगुणमपि निर्दोषं सगुणं संपद्यते ॥ तेन च ज्ञानद्वारा मोक्षमाप्स्यसि ॥ उक्तं चेदं मया ॥ ९ ' ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ॥ श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ' ॥ इति ॥ युद्धे जयलाभकीर्तिसुखादिरूपैहिकफलप्राप्तिश्च साक्षात् प्रदर्शिता विश्वरूपे ॥ अतः ऐहिकामुष्मिकसकलसुखसाधनत्वात् मदाराधनरूपत्वात् मदाज्ञानुवर्तनरूपत्वात् स्वधर्मानुष्ठानरूपत्वाच्च युद्धाख्यं कर्म कर्तव्यमेव त्वया ॥ अतस्त्वं निश्शङ्कं युद्धाख्यं स्वधर्ममनुतिष्ठ ॥ ६२ ॥

सञ्जयः॥ एवं कृत्स्नगीताशास्त्रमुपदिश्य किं ब्रवीषि किं युद्धाख्यं स्वकर्म करिष्यसि उत न इति पृष्ट्वा तूष्णीमवस्थितं तमालक्ष्य किं तूष्णीं तिष्ठसि योत्स्ये इति वा न योत्स्ये इति वा वद इति पुनः पृष्ट्वा युध्यस्व भीष्मादिभिरिति त्वं निर्बन्धा-

---

१ अ. सर्वं ब्रह्मेति भावेन ॥ २. ३. ३०. ३. ५. १०. ४. १२. ६. ५. १८. ४६. ६. १८. ५७. ७. १८. ६२. ८. १८. ६६. ९. ३. ३१.

सि अतस्त्वदर्थं युद्धं करिष्यामीति वदन्तमर्जुनं न त्वया मदर्थं युद्धकर्म कर्तव्यं किं मामुद्दिश्य युद्धं करिष्यसि ॥ युद्ध्वा राज्यं प्राप्य सुख्यन् त्वं किं ते भीष्मादीन् महानुभावान् संहृत्य तदीयभोगानुभवो युक्तः इति केनाप्यनुयुज्यमाने नाहं युद्धे प्रथमं प्रावर्तिषि माऽस्तु मे युद्धमिति बहुशः प्रतिपन्नवानपि भूभारपरिहाररूपस्वकार्यसाधनतत्परेण कृष्णेन निर्बध्य युद्धे प्रवर्तितोऽहं इति धयाः ॥ माऽस्तु स ममापवादः ॥ किं युद्धेन त्वया लब्धे राज्येऽहमंशवान् भविष्यामि ॥ समये आप्तेन यद्वक्तव्यं तन्मयोक्तं श्रुतं च त्वया॥ विमृश्येदमशेषेण ततो यथेच्छा तथा क्रियतामित्यधिक्षिपन्नुपसंहरति भगवान् ॥

कृष्णः ॥ इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ॥
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

• इतीति ॥ गूहितुं योग्यं गुह्यं तस्मात् गुह्यात् अतिशयेन गुह्यं गुह्यतरं ज्ञायतेऽनेनेति ज्ञानं ज्ञानसाधनं इदं गीताशास्त्रं मया ते तुभ्यं इति उक्तरीत्या आख्यातं उक्तम्॥ एतत् अशेषेण विमृश्य आलोच्य यथा इच्छसि तथा कुरु ॥ ६३ ॥

इति ते रहस्येभ्योऽपि रहस्यतरं कर्मयोगध्यानयोगभक्तियोगज्ञानयोगविषयज्ञानसाधनं गीताशास्त्रं ज्ञानयोगकर्मयोगविषयं ज्ञानं कर्मयोगभक्तियोगज्ञानयोगविषयं ज्ञानं परमाप्तेन मया सम्यक् उपदिष्टम् ॥ इदं आमूलाग्रमशेषेण विमृश॥ विमृश्य यथा १इच्छसि तथा कुरु ॥ युद्धं कर्तव्यमेवेति यदि तवेच्छा जायते तर्हि युद्धं कुरु नचे-

१. अत्रेयं अर्थव्यक्तिः ॥ श्रुतसकलगीताशास्त्रार्थं तदुक्तकरणे प्रवृत्तिमलभमानं शिष्यादिकं प्रति उपदेष्टा विदितार्थेन तत्त्वदर्शिना आप्तेन मया कर्मयोगादिकं सम्यगभिहितं इदमशेषेण विमृश्य यथेच्छसि तथा कुरु इत्युक्त्वा शिष्यादेः कर्मयोगादौ प्रवृत्तिरत्यादरणीया इति ॥ श्रुतसकलगीताशास्त्रार्थं श्रोतारं वीक्ष्य अद्य श्वः परश्वो वा गीतासमाप्तिमहोत्सवो भविष्यति ॥ मया तु गुह्याद्गुह्यतरमिदं शास्त्रं सम्यगुक्तम् ॥ अत्र एवमुक्तं अत्र एवमुक्तं इति सम्यगामूलाग्रं विमृश ततो मदभ्यर्चनाविषये यथेच्छसि तथा कुरु ॥ न तत्र निर्बन्धः ॥ विमर्शे क्रियमाणे सम्यगेव संभावना कार्येति मतिर्जायेत ॥ अतो विमृश्य मां समाश्रय ॥ इति श्रोतसाहसप्रकारोऽप्यनेन सूच्यते इति च ॥

न्मा कुरु॥ अस्य गीताशास्त्रस्य अशेषेण विमर्शे क्रियमाणे मोहापगमेन सर्वेषां स्वस्ववर्णाश्रमोचितविहितकर्मकरणे जायेतैव नियतमिच्छा ततः कुर्युरेव स्वस्वकर्म ॥ तवापि युद्धकरणे स्यादेवेच्छा ॥ अतो विमृशेदं गीताशास्त्रमादित आरभ्य ततो नियतमकामोऽपि युध्येथाः ॥ कर्मयोगं वा ज्ञानयोगं वा यथाधिकारमनुतिष्ठ ॥ कर्मयोगं ज्ञानयोगं भक्तियोगं वा यथाधिकारमनुतिष्ठ ॥ विमर्शे क्रियमाणे ममेदानीं कर्मयोग एवाधिकार इति मत्वा कर्मयोग एव प्रवर्त्तेथाः अतो विमृश ॥ जायेत च योद्धुमिच्छा ॥ कुर्याश्च युद्धं विनैव मदीयं निर्बन्धं ममेष्टतमम् ॥ ६३ ॥

अर्जुनः ॥ गुह्याद्गुह्यतरं इदं गीताशास्त्रं मया ते आख्यातं विमृशेदं अशेषेण ॥ विमृश्य यथेच्छसि तथा कुरु इत्यभिहितं क्वेदं गीताशास्त्रमतिगंभीरं क्वाहमल्पमतिः अतः कथमस्य विविधविचित्रबह्वर्थगर्भितस्य गीताशास्त्रस्य विमर्शः कर्तुं शक्यते॥ यथामति विमृशामि ॥ अल्पमतेर्मम विमर्शसौकर्याय गीताशास्त्रसारांशमुद्धृत्य दययोपदिश ॥

कृष्णः ॥ सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥

सर्वेति ॥ अतिशयेन गुह्यं गुह्यतमं सर्वेभ्यः गुह्यतमं सर्वगुह्यतमं परमं मे वचः भूयः पुनः शृणु॥ त्वं मे दृढं अत्यन्तं इष्टोऽसि॥ ततः हेतोः ते हितं इति वक्ष्यमाणरीत्या वक्ष्यामि ॥ दृढ इति पाठे मे दृढः इष्टोऽसि इत्यन्वयः ॥ ६४ ॥

गुह्यं गुह्यतरं चोक्तं [२] गुह्यतममिदानीं वक्ष्यामि ॥ शृणु ॥ सर्वेषु गुह्यतमं सर्वेभ्यो गुह्येभ्यः गुह्यतरेभ्यश्च परमं गुह्यं तादृशार्थविषयकं अतएव परमं मे वचः शृणु॥ इदमुक्तमेव तत्रतत्र तदेव विमर्शसौकर्याय भूयोऽपि वक्ष्यामि ॥ शृणु ॥ कुतो निर्बन्धममुं सोढ्वा वक्ष्यामीत्युच्यते इति चेत् त्वं मे दृढं नितरामिष्टोऽसि ॥ ततो हेतोः ते हितं इति वक्ष्यमाणप्रकारेण वक्ष्यामि ॥ त्वं मे इष्टोऽसि इति दृढं निश्चितम् ॥ ततो हेतोस्ते हितं वक्ष्यामि ॥ त्वमिष्टोऽसि मे ततो हेतोः दृढं बहुप्रमाणोपेततया अचाल्य-

---

१. दृढमतिः इति पाठान्तरम् ॥ २. गुह्यं कर्म गुह्यतरं ज्ञानं गुह्यतमा भक्तिः गुह्यतमं भक्तियोगविषयकम् ॥

तमं ते हितं इति वक्ष्यमाणप्रकारेण वक्ष्यामि ॥ इति वक्ष्यमाणप्रकारेण ते हितं दृढं यथातथा ते मनसि असंशयं यथा लगेत् तथा वक्ष्यामि ॥ श्रुत्वा सम्यगवधारय ॥ ६४ ॥

अर्जुनः ॥ अवहितोऽस्मि उपदिश मे हितम् ॥

कृष्णः ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥

**मन्मना इति** ॥ मयि मनः यस्य सः मन्मनाः भव॥ मयि भक्तः मद्भक्तः भव॥ मां यजत इति मद्याजी भव ॥ मां नमस्कुरु ॥ मामेव एष्यसि प्राप्स्यसि ॥ सत्यम् ॥ मे प्रियः असि अतः ते प्रतिजाने प्रतिज्ञां करोमि ॥ ६५ ॥

उक्तं मया ते पूर्वम् ॥ ' मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्यसी'ति नवमान्ते॥ तदेव ते भूयः परमहितमुपदिशामि॥ १ मदर्थं कर्तव्यं कर्म कुरु तेन शुद्धमन्तःकरणं मयि निवेशय ॥ तेन च श्रवणादिना माहात्म्यज्ञानपूर्वकसुदृढस्नेहरूपभक्तिमान् भव॥ मय्येव संभावितसकलविषयपराधदोषप्रायश्चित्तार्थं मां २नमस्कुरु॥ एवं कुर्वाणस्त्वं ज्ञानद्वारा मामेव एष्यसि मां एष्यस्येव ॥ किमिदं सत्यं इति चेत् इदं सत्यं सत्यमिति वचनमात्रेण नाहं श्रद्दध्यां प्रतिजानीहि प्रतिज्ञायां कृतायां श्रद्दध्यामिति चेत् ते ३ प्रतिजाने तव विश्वासजननाय ४ प्रतिज्ञां करोमि ॥ कुतः सत्य-

---

१. मद्याजी भव तेन मन्मना भव तेन मद्भक्तो भव मां नमस्कुरु इत्यन्वयः ॥ अत्र मद्याजीति कर्मयोगः मन्मना इति ध्यानयोगः मद्भक्त इति भक्तियोगः मां नमस्कुरु इति ज्ञानयोगः॥ नमु प्रह्वत्वे ॥ नमसः कारः नमस्कारः स च नमस्कार्यस्य उत्कर्षं स्वस्य अपकर्षं ज्ञात्वा तज्ज्ञापनाय क्रियमाणो व्यापारः॥ अतः नमस्कारेण ज्ञानयोगलाभः ॥ २. कायेन वाचा मनसा मामाराधय ॥ इदं च अन्येषामपि भक्तिभेदानामुपलक्षणम्॥ अत्र, 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्॥ अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ॥ क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ' ॥ इति भागवत (७ स्कं ५. अध्याय ) श्लोकौ अनुसन्धेयौ ॥ ३. ते प्रति त्वां प्रति जाने अन्तर्णीतणिच् ॥ यतः प्रियोऽसि ततः प्रियं त्वां प्रति हितं ज्ञापयामि ॥ इति च ॥ सत्यं यथा तथा प्रतिज्ञां करोमि इति वा ॥

मिदं ते प्रतिजाने इत्युच्यते कुतस्तवेयमास्था इति चेत् त्वं मे प्रियोऽसि ॥ अत एव-मुच्यते॥ अहं ते प्रिय इति किं सत्यमिति चेत् त्वं मे प्रियोऽसि इति यत् तत् सत्यम्॥ त्वं मे प्रियोऽसि इति ते पुरतः प्रतिज्ञां करोमि ॥ यतः प्रियोऽसि ततः प्रियाय ते हितमुपदिशामि ॥ विमृशेदम् ॥ कदा त्वामेष्यामीति चेत् 'सत्यन्ते' इत्यत्र सति अन्ते इति च्छेदः ॥ अन्ते प्रारब्धकर्मणोऽवसाने सति १मामेष्यसि ॥ भगवता मया प्रतिज्ञायां कृतायां कस्य प्रामाणिकस्य योनिबीजशुद्धिमतो विश्वासो न स्यात् ॥ अत आरुरुक्षुणा मोक्षैककामेन विहितं स्ववर्णाश्रमोचितं कर्म कर्तव्यमकामनयेति सिद्धम् ॥ ६५ ॥

द्वै ॥ अर्जुनः ॥ कथं त्वन्मनसा भवितव्यम् ॥

कृष्णः ॥ सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

सर्वेति ॥ सर्वे च ते धर्माश्च सर्वधर्माः तान् परित्यज्य एकं मां शरणं व्रज ॥ शरणागतिं कुरु ॥ अहं त्वा त्वां सर्वाणि च तानि पापानि च सर्वपापानि तेभ्यः मोक्षयिष्यामि ॥ मा शुचः शोकं मा कार्षीः ॥ ६६ ॥

अन्यधर्मान् परित्यज्य अवैष्णवधर्मान् परित्यज्य मन्मना भव इति पूर्वेणान्वयः॥ 'मन्मनाभवे'त्यादिना किमुक्तं भवति इति चेत् मामेकं शरणं व्रज ॥ मां प्रति २शरणागतिं कुरु ॥ मामेकमेव रक्षकत्वेनाश्रय ॥ कथं त्वद्यजनङ्कार्यमिति चेत् सर्व-धर्मान् लक्षणया तत्फलानि परित्यज्य मद्याजी भवेति पूर्वेणान्वयः ॥ उक्तं हि मया ॥ ३'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' ॥ इति ॥ एवं कुर्वाण स्त्वं मामेष्यसीत्युक्तं तत्कथम् ॥ अनादिकालकृतपापस्य प्रतिबन्धकसत्वात् त्वत्प्राप्तिः कथं भवि-

---

१. अत्र, विद्वानमृतमाप्नोति नात्र कार्याविचारणा ॥ अवसन्नं यदारब्धं कर्म तत्रैवगच्छति ॥ पचेत् बहूनि जन्मानि प्राप्यैवान्ते न संशयः॥ इति नारायणाध्यात्म वचनमनुसन्धेयम् ॥ २. अत्र, सर्वेशमत्वविज्ञानपूर्वं तत्रमनः सदा॥ सर्वाधिकप्रेमयुक्तं सर्वस्यात्मसमर्पणम् ॥ अखण्डा त्रिविधा पूजा तदत्यैव स्वभावतः ॥ रक्षतीत्येव विश्वासः तदीयोऽहमिति स्मृतिः॥ शरणागतिरेषा स्यात् विष्णौ मोक्षफलप्रदा॥ इति महाविष्णुपुराणवचनमनुसन्धेयम् ॥ ३. १८. ११.

ष्यति इति चेत् ॥ अहं शरणागत्या तुष्टः प्रतिबन्धकसर्वपापेभ्यो मोचयिष्यामि ॥ पापिनो मम भगवत्प्राप्तिर्नस्यादिति शोकं मा कार्षीः ॥ उक्तं च मया ॥ १ 'अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ॥ सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसी'ति ॥ अन्यकर्मकाम्यकर्मावैष्णवकर्मपरित्यागेन २ 'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ॥ निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः' ॥ ३ 'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ॥ लिप्यते न स पापेन पद्मपत्रमिवांभसा' ॥ ४ 'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ॥ अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥ भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्' ॥ ५ 'युध्य च ॥ मय्यर्पितमनोबुद्धिः' इत्याद्युक्तरीत्या मयि मनो निवेश्य ६ 'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा फलानि च' ॥ ७ 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा' ॥ ८ 'तस्मादसक्तः सततं कार्यं कर्म समाचर' ॥ ९ 'त्यक्त्वा कर्मफलासङ्गम्' ॥ १० 'युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्' ॥ ११ 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' ॥ १२ 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ॥ कर्तव्यानि' ॥ १३ 'कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन॥ सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः' १४ 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' ॥ इत्याद्युक्तरीत्या कर्मफलसङ्गादिकं त्यक्त्वा नियतमयं मां रक्षतीत्येवं विश्वासपूर्वं रक्षकत्वेन मामाश्रित्य स्वायं कर्म कृत्वा तस्य मयि समर्पणे क्रियमाणे तेन तुष्टोऽहं १५ 'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते' ॥ १६ 'शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः' ॥ इत्याद्युक्तरीत्या मोक्षप्रतिबन्धकपुण्यपापरूपोभयकर्मभ्यो मोचयित्वा १७ 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' ॥ १८ 'मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्' ॥ १९ 'तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतं' ॥ इत्याद्युक्तरीत्या शाश्वतं पुनरावृत्तिरहितं

---

१. ३. ३६. २ ३. ३०. ३ ५. १०. ४. १२. ६. ५. ८. ७. ६. ९. ४८ ७. २. ५१. ८. ३. १९. ९. ४. २०. १० ५. १२. ११ ६. १. १२ १८. ६. १३. १८. ९. १४. १८. ११. १५. २. ५०. १६. ९. २८. १७. १८. ४६. १८. १८. ५६. १९. १८. ६२.

नित्यं निरपायं परमानन्दघनं परमं पदं प्रापयिष्यामि ॥ अतो निःशङ्कमिदानीं स्वीयं युद्धाख्यं कर्म यथावदनुष्ठातुमारभस्व॥ त्वद्दृष्टान्तेन सर्वेऽपि स्वं स्वं कर्म कृत्वा मयि समर्प्य मत्प्रसादात्तरन्तु भवजलधिमपारमित्यशेषमनवद्यमतिमङ्गलम् ॥ ६६ ॥

अ ॥ अर्जुनः ॥ १'योगस्थः कुरु कर्माणि' ॥ २'कर्मयोगेन योगिनाम्' ॥ ३'नियतं कुरु कर्म त्वं'॥ इत्यादिभिरुपक्रान्तः कर्मयोगः ४'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' ॥ इति साङ्गोपाङ्गं सविस्तरं सेतिकर्तव्यताकं सफलं चोक्त्वा उपसंहृतः अङ्गीकृतश्च मया अतो यावज्ज्ञानोदयं विहितं कर्म करिष्यामि ॥ उदिते ज्ञान किं कर्तव्य मया ब्रूहि ॥

कृष्णः ॥ उपसंहृतः कर्मयोगः॥ अनेन तु ५'ज्ञानयोगेन सांख्यानां' इत्युपक्रान्तः ६'सर्वकर्माणि मनसा संन्यास्यास्ते सुखं वशी' ॥ इत्याद्युक्तसर्वकर्मसंन्यासशिरस्कः ज्ञानयोगः इदानीमुपसंह्रियते ॥ ज्ञानयोगे लब्धे सर्वान् ७'धर्मानधर्मांश्च परित्यज्य कर्मसंन्यासं कृत्वा किं कर्तव्यमिति चेत् परित्यज्य मामेकमेव शरणं व्रज ॥ ब्रह्मेतरत् मायिकं सर्वं परित्यज्य मायातीतं सत्यमेकं मां रक्षकत्वेन आश्रय ॥ कर्म-कर्तरि भृत्ये राज्ञ इव स्वाराधानरूपकर्मकर्तरि ईश्वरस्य प्रीतिसंभवात् कर्तव्यमेव कर्म ज्ञाननिष्ठावताऽपीति चेत्॥ मायिकमन्यत् सर्वं परित्यज्य मायातत्कार्यसंबन्धरहितं नित्यं निरन्तरं निराभासं निष्कलं निष्क्रियं शान्तं अनन्तं अनाद्यन्तं सच्चिदानन्दैकरसं प्रमाणान्तराबाध्यं परिपूर्णं अद्वैतं परं ब्रह्म मामेकमेवायमुपास्ते अयमीश्वर

१. २. ४८. २. ३. ३. ३. ३. ८. ४. १८. ६५. ५. ३. ३. ६. ५. १३. ७. धर्मान् परित्यज्येत्यनेन अधर्मकरणमभ्यनुज्ञायेत ॥ अतो धर्मपदं धर्माधर्मोभयसंग्राहकमिति भावः ॥ ब्रह्मचर्ये परित्यक्तस्य पर्युषितान्नभोजनस्य गार्हस्थ्ये यथा प्रसक्तिर्नास्ति तथा कलञ्जभक्षणादेरधर्मस्य पूर्वमेव त्यक्तस्य उत्तरकाले प्रसक्त्यसंभवात् अधर्मान् परित्यज्येति वचनमनर्थकमिति न शंक्यं ब्रह्मे-तरस्य सर्वस्य मायिकत्वमिथ्यात्वदर्शनेन नैष्कर्म्यस्य विवक्षितत्वात् ॥ अधर्मपरित्यागस्तु पूर्वमेव कृतः धर्मपरित्यागमपीदानीं कृत्वा मां शरणं व्रजेति विवक्षणान्नानुपपत्तिरिति बोध्यम् ॥

एव मां रक्षेदिति ॥ अतो मम वैभवनिर्वाहकोऽयमेव इति ब्रह्मविदि सर्वकर्मसंन्यासिनि ईश्वरस्य अधिकतरप्रीतिसंभवात् ॥ क्षत्रियस्य मम संन्यासे नाधिकारः अतः कथं मां प्रति कर्मसंन्यासोपदेश इति चेत् त्वां पुरस्कृत्य अधिकारिभ्यः तदुपदेश इत्याशयः ॥ निर्धूताशेषद्वैतदर्शनस्य ब्रह्मात्मैकत्वदर्शिनो ज्ञानिनः ममायं रक्षक इति रक्षकत्वेनाश्रयणरूपं शरणीकरणं कथमिति चेत् एकं सजातीयविजातीयस्वगतभेदरहितं नित्यशुद्धबुद्धमुक्तस्वभावं अपूर्वं अनपरं अनन्तरं अबाह्यं अखण्डं चिदेकरसं अद्वितीयं मां परं ब्रह्म शरणं आश्रयं व्रज सर्वमिदमहं च ब्रह्मैवेति प्रत्यग्दृष्ट्याऽनुसन्धेहि ॥ तथाऽनुसंहितश्चाहं सर्वपापेभ्यः पापकार्येभ्यो जन्मजरामृत्युबन्धेभ्यो मोचयिष्यामि ॥ जन्मादिबन्धविनिर्मुक्तं करिष्यामि ॥ सर्वपापेभ्यः पापकारणभूतेभ्यः अविद्याकामकर्मभ्यो मोचयिष्यामि ॥ ब्रह्मात्मैकत्वज्ञानादविद्यातत्कार्यनिवृत्तिरूपमोक्षप्राप्तिर्भवति ४ अतः आत्मानं अविद्यातत्कार्यबन्धनिर्मुक्तं निर्विशेषब्रह्मात्मनाऽवस्थितं साक्षादपरोक्षीकृत्य जीवन्नेव मुक्तस्त्वं १ माशुचः ॥ २ 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' ॥ इति श्रुतिः ॥ ३ 'अशोच्यानन्वशोचस्त्वं' इत्युक्तरीत्या द्वैतमात्मनः कर्तृत्वादिकं च पश्यन् शोचसि ॥ उक्तं सर्वमिदं विमृश्य अद्वैतं आत्मनोऽकर्तृत्वं च पश्यतस्तव ४शोको न युक्तः ॥ अतोऽशोच्यानिमान् प्रति मा शोकं कार्षीः ॥ इति ज्ञाननिष्ठोपसंहारः ॥

अर्जुनः ॥ 'मन्मना मद्भक्तो मद्याजी भव' इत्युक्तं अङ्गीकृतं च तन् मया अवनतेन शिरसा ॥ करिष्यामि च तथा ॥ ५'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' ६ 'तमेव शरणं गच्छ सर्वभावेन भारत' ॥ इत्युक्तम् ॥ स चेश्वरः कः तं प्रति शरणागतिश्च कथं कार्या शरणीकृतश्च स किं करिष्यति ॥ ब्रूहि ॥

---

१. कर्मत्यागनिमित्तं पापं स्यादिति मा शुचः त्वामहं सर्वेभ्यः पापेभ्यो मोचयिष्यामि इति च ॥ २. ई ७. ३. २. ११. ब्रह्मविदा कर्माणि त्यक्तव्यानि इति महता प्रबन्धेन प्रतिपादितं भाष्ये ॥ ४. अशोच्यानन्वशोचस्त्वमित्युपक्रान्तस्य शोकापनोदनस्य उपसंहारोऽनेन क्रियते इत्याह ॥ ५. १८. ६१. ६. १८ ६२.

कृष्णः ॥ ईश्वरभक्तिश्रुति ममैव शरणं गच्छ इत्युक्त ईश्वरोऽहमेव मां प्रत्येव शरणागतिः कार्या॥ कथं कार्या इति चेत् सर्वधर्मान् परित्यज्य वर्णधर्माः आश्रमधर्माः सामान्यधर्माश्च इत्यनेके धर्माः तान् परित्यज्य शरणत्वेनानाश्रित्य अद्वितीयं ईश्वरं सर्वधर्माणामधिष्ठातारं फलदातारं च मामेव शरणमाश्रय ॥ किं तैरन्यसापेक्षैर्धर्मैः भगवदनुग्रहादेव निरपेक्षादहं कृतार्थो भविष्यामीति निश्चयेन प्रेमप्रकर्षपूर्विकया तैलधारावदविच्छिन्नया मनोवृत्त्या सततं चिन्तनरूपं मद्भजनं कुरु ॥ सर्वैः धर्मैः यत्कार्यं तत् मयैव संपद्येत ॥ सर्वधर्मकार्यकारी ह्यहम् ॥ एतदर्थलाभायैव 'सर्वधर्मान् परित्यज्य' त्युक्तं अन्यथा मामेकं शरणं व्रजे' त्यनेनैव सर्वधर्मशरणतापरित्यागे लब्धे 'सर्वधर्मान् परित्यज्य' त्यस्य वैयर्थ्यात् ॥ अत्र कर्मपरित्यागो न विधीयते ॥ किंतु क्रियमाणेऽपि कर्माणि नेदमवेदनं मां रक्षिष्यति ॥ किंत्वनेन तुष्टः परमात्मैव मां रक्षिष्यति इति कर्मण्यनादरेण भगवदेकशरणतामात्रं विधीयते ॥ 'सर्वधर्मान् परित्यज्ये' ति किमर्थमिति चेत् वर्णाश्रमधर्माणां अभ्युदयहेतुत्वप्रसिद्धेर्मोक्षहेतुत्वमपि स्यादिति शङ्कया तत्रादरसंभवेन तन्निवारणार्थम् ॥ अत्र सर्वकर्मसंन्यासो विधीयते इति मा मंस्थाः ॥ क्षात्रियं संन्यासानधिकारिणं त्वां प्रति सर्वकर्मसंन्यासोपदेशायोगात् ॥ मद्व्याजेन अन्यस्य कर्मसंन्यासोपदेश इत्यस्तु इति चेत् ॥ १'वक्ष्यामि ते हित'मित्युपक्रम्य 'त्वां सर्वपापेभ्यो मोक्षयिष्यामि त्वं मा शुच' इति उपसंहारात् उपदेशस्य त्वद्विषयत्वमेव वक्तव्यम् ॥ त्वं तु न संन्यासाधिकारी ॥ अतो मदेकशरणतामात्रे मम तात्पर्यमवधारय ॥ न्याय्यमन्याय्यं वा भगवता कुर्विति विहितं कर्तव्यमेव इति मां शरणीकृत्य विहितं युद्धाख्यं कर्म कुरु ॥ अहं बन्धुवधादिजनितसर्वपापेभ्यः त्वां मोक्षयिष्यामि ॥ अतो युद्धे प्रवृत्तस्य मम बन्धुवधादिजनितपापेभ्यः कथं मुक्तिरिति शोकं मा कार्षीः ॥ अत्र गीताशास्त्रे निष्ठात्रयं कर्मनिष्ठा ज्ञाननिष्ठा भक्तिनिष्ठा चेति ॥ तत्र कर्मनिष्ठोपसंहारः २'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः'॥ इत्यत्र कृतः ॥ ज्ञाननिष्ठोपसंहारस्तु ३'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्'॥ इत्यत्र कृतः ॥ भक्तिनिष्ठोपसंहारस्तु 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इत्यत्र कृतः ॥ विस्तरेदम् ॥ सर्वधर्मान् परित्यज्येति त्यागविधिः 'न हि निन्दा' न्यायेन भगवच्छरणीकरणप्रशंसापरः इति व्याख्यानमप्यूह्यम् ॥ ६६ ॥

---

१. १८. ६४. २. १८. ४६. ३. १८. ५५.

वि ॥ अर्जुनः ॥ 'मामेवैष्यसि' इत्युक्तं प्रतिबन्धकपापसद्भावे कथं त्वत्प्राप्तिः सेत्स्यति ॥ पापवांश्चाहम् ॥ का गतिर्मम ॥ कर्मयोगज्ञानयोगभक्तियोगैरनुष्ठितैः पापनिवृत्तिर्भवतीति न वक्तुं शक्यम् ॥ तेषामचेतनानां पापनिर्हरणसामर्थ्याभावात् ॥ अतः समीचीनमुपायं ब्रूहि ॥

कृष्णः ॥ कर्मयोगज्ञानयोगभक्तियोगरूपान् परमनिःश्रेयससाधनतया स्वरूपेणावस्थानहेतुभूतान् ॥ 'धृञ् अवस्थाने' इति धातुः ॥ लक्षणया तत्फलानि कर्तृत्वादीनि च परित्यज्य यथाऽधिकारं तान् कुर्वाण एव मामेकमेव शरणं व्रज ॥ स्वसाध्यनश्वरकर्मयोगादिषु कालान्तरभाविफलसाधनत्वबुद्धिं परित्यज्य सिद्धे स्थायिनि सर्वज्ञे सत्यसङ्कल्पत्वमहोदारत्वादिगुणशालिनि सकलशास्त्रार्थसमाराध्ये मयि फलप्रदत्वरूपोपायत्वबुद्धिं कुरु ॥ एतन्मां [1]शरणागतिं कुरु ॥ शरणं [2]उपाय व्रज [3]अनुसन्धेहि इत्यर्थः ॥ ईदृशानुसन्धानपूर्वकमनुष्ठितैः कर्मयोगादिभिराराधितोऽहं त्वां मत्प्राप्तिविरोधिभ्यः सर्वेभ्यः पापेभ्यः अनादिकालसञ्चितानन्ताकृत्यकरणकृत्याकरणरूपेभ्यः मोक्षयिष्यामि ॥ मामेवैष्यसीत्युक्त्वा सर्वपापेभ्यो मोक्षयिष्यामीत्युक्तया प्राप्तिविरोधिभ्य इति लभ्यते ॥ प्रतिबन्धकनिवृत्तौ मत्प्राप्तिरनायासेन सेत्स्यति ॥ अतः मा शुचः दीर्घकालनैरन्तर्यादरसेवनीयोपायदौर्घट्यचिन्तनफलाविलम्बानुसन्धानमूलकं शोकं मा कार्षीः ॥ प्राप्तिविरोधिपापपरिहारोपायपरतया प्रतिपादितमेव प्राप्त्युपायविरोधिपरिहारपरतया प्रतिपाद्यते ॥ श्रुत्वेदमवधारय ॥ प्राप्त्युपायो भक्तियोगः तद्विरोधीनि च पापानि ॥ सर्वपापविनिर्मुक्तात्यर्थभगवत्प्रीतिविषयपुरुषनिर्वर्त्यो हि भक्तियोगः ॥ अतस्तदारम्भविरोधीनि पापानि परिहर्तव्यानि ॥ तानि च विना प्रायश्चित्तमपरिहार्याणि ॥ पापानामानन्त्यात् प्रायश्चित्तैरनन्तैर्भाव्यम् ॥ न च पापसमसंख्याकानि प्रायश्चित्तानि परिमितेनायुषा कर्तुं शक्यानि क्रियमाणान्यपि अङ्गवैकल्यादिना पापजनकानि तेषां पापानां परिहाराय प्रायश्चित्तान्तराणि गवेषणीयानि ॥ अतः प्रायश्चित्तैः पापपरिहारो दुष्करः ॥ अतः

१. 'अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् ॥ तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः ॥ आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ॥ रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥ इत्यादिवचनान्यनुसन्धेयानि ॥ षड्विधा षडङ्गा ॥ आत्मनिक्षेपः शरणागतिः अन्यानि पञ्च अङ्गानि ॥ अङ्गाङ्गिसमुच्चयेन षाड्विध्यमुक्तम् ॥ यमनियमादिसमाङ्गके योगे अष्टाङ्गत्वोक्तिवत् ॥ उक्तं च न्यायविंशतौ ॥ 'साङ्गत्वाङ्गयोगव्यवहृतिनयतः षाड्विध्योपचारः' ॥ इति ॥
२. 'उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् ॥ वर्तते साम्प्रतं त्वेषः उपायार्थैकवाचकः' ॥ ३. व्रजगच्छ ॥ गत्यर्थानां ज्ञानार्थकत्वादनुसन्धानार्थकत्वम् ॥

परिहृतपापेन करणीयो भक्तियोगो मत्प्राप्तिसाधनः॥ अतः एकमूलिकाप्रयोगन्यायेन कृत्स्नपापपरिहारकं प्रत्यवायानापादकं च एकं प्रायश्चित्तं बुध्या परिकल्प्योपदिशामि ॥ तच्च प्रायश्चित्तं मदेकशरणीकरणम् । मामेकमेव शरणमाश्रय ॥ मां प्रति शरणागतिरेव सर्वपापपरिहारकं १ महाप्रायश्चित्तं तदेव कुरु ॥ प्रायश्चित्ततया प्रायश्चित्त ग्रन्थेषु विहितान् कृच्छ्रचान्द्रायणव्रतपर्वाग्निपवित्राग्निप्रमुखान् धर्मान् परित्यज्य तानि प्रायश्चित्तानि परित्यज्य मत्प्रपदनरूपं प्रायश्चित्तमाश्रय ॥ मामेकमेव शरणं व्रजेत्यनेनैव प्रायश्चित्तरूपधर्मान्तरपरित्यागे सिद्धे सर्वधर्मान् परित्यज्येति कुत उच्यते इति चेत् दुष्करतया चिरकालसाध्यतया च अल्पशक्तिना परिमितकालवर्तिना च दुरनुष्ठानानां धर्माणामर्थसिद्ध एव त्यागो भगवदेकोपायताकरणविधेरुपकारित्वेन विधिच्छाययाऽनूद्यते ॥ एवं प्रपन्नं त्वां भक्तियोगारम्भविरोधिभ्यः सर्वेभ्यः पापेभ्यः मोक्षयिष्यामि ॥ मा शुचः ॥ आत्मनो भक्तियोगारम्भानर्हतानुसन्धानमूलकं शोकं मा कार्षीः ॥ मां शरणीकृत्य तेन मत्प्राप्त्युपायभक्तियोगविरोधिपापानि परिहृत्य भक्तियोगं कृत्वा तेन मत्प्राप्तिविरोधिपापानि परिहृत्य निर्निरोधं मामेष्यसि ॥ अतो यथोक्तमनुतिष्ठ ॥ स्यादनेन ते २ परममङ्गलम् ॥ ६६ ॥

---

१. 'प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ॥ यानि तेषामशेषाणां कृष्णानुस्मरणं परम्॥' इति वचनं 'अनुक्षणसमुत्थिते दुरितवारिधौ दुस्तरे यदि क्वचन निष्कृतिर्भवति साऽपि दोषाविला ॥ तदित्थमगतौ मयि प्रणिविधानमाधीयतां स्वबुद्धिपरिकल्पितं सपदि रङ्गधुर्य त्वया' ॥ इति अभीतिस्तवश्लोकश्चेत्येतदनुसन्धेयम् ॥

२. अस्य श्लोकस्य चरमश्लोक इति प्रथा ॥ चरमश्चासौ श्लोकश्चेति निरुक्तिः ॥ यद्यपि इतः परं द्वादश श्लोकाः सन्ति॥ तथाऽपि 'अशोच्यानन्वशोचस्त्वमित्यादिका 'सर्वधर्मान् परित्यज्ये'त्यन्ता गीता उपदेशरूपा ॥ ततः प्राक्तनाः सप्तपंचाशत श्लोकाः पूर्वाङ्गभूताः इत उपरितनाः द्वादश श्लोकाः उत्तराङ्गभूताः तस्मादस्य श्लोकस्य चरमश्लोकत्वम् ॥ अत एव भाष्ये 'तमुवाच हृषीकेशः' इति श्लोकव्याख्याने 'न त्वेवाहं जातु नाऽऽस'मित्यारभ्य 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इत्येतदन्तं वच उवाचेत्यर्थः इति उपदेशस्य एतदवधिकत्वमुक्तम्॥ अथवा चरमस्य श्लोकः चरमश्लोकः इति निरुक्तिः ॥ उपायेषु चरमस्य अन्त्यस्य स्वापेक्षया उत्तमोपायरहितस्य शरणागतिप्रपत्तिप्रपदनन्यासभरन्यासभरसमर्पणादिशब्दवाच्यस्य उपायस्य प्रतिपादकः श्लोकः इत्यर्थः ॥ अत्र रहस्यरत्नावलीहृदय रहस्यत्रयसारमुमुक्षुप्पडिपरन्दपाडिप्रभृति वाक्यानि सम्यगनुसन्धेयानि ॥ संप्रदायानुसारी विस्तरस्तु तत्रतत्रानुसन्धेयः ॥ साध्येषु उपायान्तरेषु उपायत्वबुद्धिं परित्यज ॥ सिद्धोपाये मयि उपायत्वबुद्धिं कुरु इत्यादिरर्थः संप्रदायानुसारिभ्यः तत्तद्ग्रन्थेभ्यो ज्ञेयः ॥ अत्र, 'न्यस्याम्यकिंचनः श्रीमन् अनुकूलो-

**अर्जुनः** ॥ मह्यं परमया कृपया परमगुह्यमिदं गीताशास्त्रं त्वयोपदिष्टम् ॥ न केवलं मदुद्धारायैवायमुपदेशः ॥ किंतु मां व्याजीकृत्य लोकोद्धारायापि ॥ अत एव तत्र तत्र १ 'यं हि न व्यथयन्ति ' २ 'ये मे मतमिदं नित्यं ' ३ 'ये त्वेतदभ्यसूयन्तः' ४ 'यस्स मामेति पाण्डव ' इत्यादयः परोक्षनिर्देशाः ॥ अतः इदमन्यस्मै मयोपदेष्टव्यमिति तवाशय इति ज्ञायते ॥ कस्मै उपदेष्टव्यं कस्मै नोपदेष्टव्यम् ॥ वद ॥

कृष्णः ॥ **इदं ते नातपस्काय नाभक्ताय कदाचन ॥**

**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

इदमिति ॥ इदं गीताशास्त्रं ते त्वया न विद्यते तपः यस्य सः अतपस्कः तस्मै न वाच्यम् ॥ न भक्तः अभक्तः तस्मै कदाचन कदाऽपि न वाच्यम् ॥ न शुश्रूषुः अशुश्रूषुः तस्मै च न वाच्यम् ॥ यः मां अभ्यसूयति तस्मै च न वाच्यम् ॥ ६७ ॥

इदं गीताशास्त्रं त्वया तपःशब्दितशमदमयज्ञदानादिस्वधर्मानुष्ठानरहिताय न वाच्यम् ॥ ५ 'ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दमस्तपः शमस्तपो दानं तपो यज्ञं तप' इति श्रुतिः ॥ तपस्व्यपि ६ भक्तिरहितश्चेत् तस्मै कदापि न वाच्यम् ॥ कृतेऽप्युपदेशे तस्य भक्त्यभावादर्थो न प्रकाशेरन्॥ ७ 'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः'॥ इति श्रुतिः ॥ तपस्व्यपि भक्तोऽपि यो न शुश्रूषते तस्मै न वाच्यम् ॥ श्रवणेच्छा गुरुशुश्रूषा च शुश्रूषा तद्रहिताय कदाऽपि न वाच्यम् ॥ अत एवोक्तं मया ॥ ८ 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ' ॥ इति ॥ श्रवणेच्छया यः पृच्छति शुश्रूषते च तस्मै उपदेष्टव्यमिति तेन लभ्यते ॥ ९ मां योऽभ्यसूयति तस्मै मयि असूयावते मदुत्कर्षमसहमानाय मयि

---

ऽन्यवर्जितः ॥ विश्वासप्रार्थनापूर्वं आत्मरक्षाभरं त्वयि ' ॥ 'त्वत्प्रातिकूल्यविमुखाः स्फुरदानुकूल्याः कृत्वा पुनः कृपणतां विगतातिशङ्काः ॥ स्वामिन् भवत्स्वयमुपाय इतीरयन्तः त्वय्यर्पयन्तिनिजभारमपारशक्तौ '॥ 'मत्प्राप्त्यर्थतया मयोक्तमखिलं सन्त्यज्य धर्मं निजं मामेकं मदवाप्तये शरणमित्यार्तोऽवसायं कुरु ॥ त्वामेव व्यवसाययुक्तमखिलज्ञानादिपूर्णोऽप्यहं मत्प्राप्तिप्रतिबन्धकैर्विरहितं कुर्यां शुचं मा कृथाः ॥ इत्यादयः श्लोकाः अनुसन्धेयाः॥ १. २. १६. २ ३. ३१. ३. ३. ३२. ४. ११. ५५. ५. ना १०. ६. द्रै॥ तपस्व्यपि यो न शुश्रूषते तस्मै न वाच्यम् ॥ चशब्दः प्रत्यवायाधिक्यं सूचयति॥ 'समुच्चयेऽथवाऽऽधिक्ये न्यूनत्वे चः प्रयुज्यते ' इति शासनात् ॥ अतपस्विने अशुश्रूषवे केनाऽपि हेतुना उपदेष्टव्यम् उपदिश्यतां नाम भक्तिरहिताय कदाऽपि नोपदेष्टव्यम् ॥ ७. श्वे. ६. २३. ८. ४. ३४. ९. द्रै. अतपस्कत्वादित्रितयवते उपदेशादपि भगवति असूयावते उपदेशोऽधिकप्रत्यवायहेतुः इति भ

दोषानाविष्कुर्वते तपस्वित्वादिगुणवतेऽपि कदाऽपि न वाच्यम् ॥ एकैकविशेषणवतेऽपि न वाच्यम् ॥ किमुत अतपस्कत्वादिविशेषणचतुष्टयवते इति सूचनाय प्रतिवाक्यं नञः प्रयोगः ॥ प्रक्रमानुरोधेन न चाभ्यसूयवे इति वक्तव्ये तथाऽनुक्त्वा मां योऽभ्यसूयति तस्मै न वाच्यमिति विरूपवाक्यकरणात् यो भगवन्तं अभ्यसूयति तस्य अत्यन्तपरिहरणीयता सूच्यते॥ असूयामात्रवतेऽपि न वाच्यम् ॥ अत एव ह्यनसूयत्वमधिकारप्रयोजकमुक्तं मया ॥ १ 'इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे'॥ इति ॥ किमुत भगवति वासुदेवे असूयावते इति सूचयितुं मा [illegible] उक्तम् ॥ तपस्विने भक्तिमते गुरुशुश्रूषां कुर्वते श्रवणेच्छावते असूयारहिताय वाच्यम् ॥ तपस्वित्वादिगुणवते गीताशास्त्रोपदेशः तेन च तपस्वित्वादिगुणसंभव इत्यन्योन्याश्रय इति चेत् सत्सहवासादिना किंचित् तपस्वित्वादिकं प्राप्तवते उपदेशः कार्य इत्याशयः ॥ २ तादृशाय गीतामिमामुपदिश तेन चेयं सर्वत्र लब्धप्रचारा भवतु ॥ तेन च लोकाः कृतार्थीभूय प्रमोदन्ताम् ॥ ६७ ॥

---

१ मामिति चेन सूच्यते ॥ अ ॥ मां निर्गुणं ब्रह्म योऽभ्यसूयति ब्रह्मणो निर्गुणत्वं केवलत्वं सजातीयादिभेदरहितत्वं अद्वितीयत्वं च विदेहकैवल्यं अत्रैव मुक्तिं च यो नाभ्युपगच्छति तत्प्रतिपादकं चाद्वैतशास्त्रं निन्दति तस्मै न वाच्यम् ॥ अद्वैतशास्त्रत्वादस्य अद्वैते प्रीतिमत एव वाच्यम् ॥ १. ९. १. २. अत्र, 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ॥ असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥ १ ॥ शठायेति पाठान्तरम् ॥ य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन् ॥ तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्चन नाह ॥ २ ॥ अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ॥ यथैव ते न गुरोर्भोजनीयाः तथैव तान्नभुनक्ति श्रुतं तत् ॥ ३ ॥ यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ॥ यस्ते न द्रुह्येत्कतमच्चन नाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्' ॥ ४ ॥ इति चत्वारो मन्त्राः यास्कोदाहृता उदाहर्तव्याः॥ 'मा नः स्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ॥ येषा नैतन्नापरं किंचनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित ॥ अथोपशमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यः सदा नः ॥ आ देवानामोहते विप्रयो हृदि बृहस्पते न परः साम्नो विदुः' ॥ इति ऋग्वेदे द्वितीयाष्टके षष्ठाध्याये द्वात्रिंशवर्गे षोडशी सप्तदशी च ऋक् उदाहर्तव्या॥ अत्र 'मा नः स्तेनेभ्यः' इति 'आ देवानां इति च ऋग्द्वये पूर्वोत्तरार्धे एव बह्वृचैः पठ्येते ॥ तथाऽपि येषां नैतत् ', 'अथोपशमेन' इति, ऋग्द्वये उत्तरार्धपूर्वार्धे अविद्यमाने अप्यवान्तरऋग्वेदे सूत्रवेदे पठ्यते इत्यत्रोदाहृते ॥ अत एव 'मानःस्तेनेति पूर्वासु न्यूनता दृश्यतेऽर्थतः' इत्याचार्याः ॥

**अर्जुनः** ॥ तपस्वित्वादिगुणवते उपदेष्टव्यं इत्युक्तम् ॥ किमर्थं उपदेशः कार्यः उपदेष्टुः फलं किम् ॥

**कृष्णः** ॥ य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥

**य इति**॥ यः परमं गुह्यं इदं गीताशास्त्रं मयि भक्ताः मद्भक्ताः तेषु अभिधास्यति वक्ष्यति ॥ सः मयि परां भक्तिं कृत्वा मामेव एष्यति प्राप्स्यति ॥ न संशयः ॥ ६८ ॥

मयि ये भक्ताः तेभ्य इदमवश्यमुपदेष्टव्यम्॥ तपस्वित्वादिगुणचतुष्टयवते वाच्यं इत्युक्तं पूर्वत्र ॥ अत्र तु भक्तेषु वाच्यमित्युच्यते ॥ तत्कथमिति चेत् यो मयि भक्तिं करोति सः मत्प्रीतये कर्माण्यपि कुर्यात् ॥ मम मत्त्वोपदेष्टुर्गुरोश्च शुश्रूषामपि कुर्यात् ॥ नापि मामभ्यसूयेत ॥ अतो भक्त्युक्त्यैव अनुक्तेतरगुणत्रयमप्युक्तं भवति ॥ अतो मयि भक्तिमद्भ्य इदमुपदेष्टव्यमित्युच्यते ॥ यः भक्तिहीनोऽपि सत्कारमानपूजार्थी गुह्यं परमं परमं गुह्यमिति वा इदं गीताशास्त्रं मयि भक्तिमन्तो ये तेषु विषये तेभ्य इति यावत् ॥ सम्यक् वक्ष्यति ॥ सः तेन पुण्येन मयि परां भक्तिं कृत्वा [१] 'मद्भक्तिं लभते परा' मित्युक्तातिशयितभक्तिमान् भूत्वा मामेव प्राप्स्यति ॥ एष्यत्येव नात्र संशयः ॥ मयि परां भक्तिं कृत्वा अभिधास्यतीति च ॥ भगवानेव मयि स्थित्वा प्रवदति का ममैतत्प्रवचने शक्तिः एतत्प्रवचनरूपां शुश्रूषां अहं तस्य करोमि स भवतु नितरामनेन मयि तुष्ट इत्यनुसन्धानवान् अभिधास्यतीति च ॥ असंशयः सन् अभिधास्यति स्वयं संशयरहितेन उपदेशः कार्यः ॥ संशयरहितस्यैव उपदेशेऽधिकारः ॥ 'असंशयस्संशयच्छित् गुरुरित्यभिधीयते' इत्युक्तेः ॥ असंशयस्सन् मयि भक्तिं कृत्वा मामेष्यति ॥ प्रवचनेन संशयनिवृत्तिर्भवति निस्संशयज्ञानेन भक्तिरुदेति तया च मत्प्राप्तिर्भवति ॥ अतपस्कायेत्यादौ एकवचनेन निर्दिश्य मद्भक्तेष्विति बहुवचननिर्देशात् अनधिकारिणे एकस्मा अपि न वाच्यम् ॥ अधिकारिभ्यस्तु बहुभ्योऽपि वाच्यमिति सूच्यते ॥ गीताशास्त्रोपदेष्टुः प्रवक्तुश्च निस्संशयदिव्यज्ञानप्राप्त्या परभक्तिप्राप्तिद्वारेण मोक्षप्राप्तिः फलम् ॥ अत

---

१. १८. ५४.

एतदर्थं भक्त्यादिगुणवतेऽधिकारिणे उपदेष्टव्यमेवेदम्॥ भक्तगोष्ठीषु प्रवचनीयं चेदम्॥ भक्तेभ्यः कथनापेक्षया अनधिकारिभ्योऽकथनस्य पूर्वमुक्त्या अधिकारिणे कथनापेक्षया अनधिकारिणे अकथनं वरमिति सूच्यते ॥ ६८ ॥

अर्जुनः॥ भक्तेभ्यो गीताशास्त्रप्रवक्तुः भक्तिद्वारा मोक्षप्राप्तिः फलमित्युक्तम्॥ श्रोतुरपि तत्फलं वर्तते ॥ ज्ञानद्वारा मोक्षप्राप्त्यर्थं हि श्रवणादिकं ॥ श्रवणादिकर्त्रपेक्षया प्रवक्तुः को विशेषः ॥ ब्रूहि ॥

**कृष्णः ॥ न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

**न चेति** ॥ तस्मात तदपेक्षया मे प्रियं करोतीति प्रियकृत् अत्यन्तं प्रियकृत् प्रियकृत्तमः अन्यः कश्चित् मनुष्येषु न च नैवास्ति ॥ तस्मात् तदपेक्षया मे अत्यन्तं प्रियः प्रियतरः अन्यः भुवि न च नैव भविता भविष्यति ॥ ६९ ॥

भुवि मनुष्येषु मध्ये यः मद्भक्तेभ्यः गीताप्रवक्ता तस्मात् मे अन्यः प्रियकृत्तमः नास्ति च ॥ नेत्युक्त्या इदानीं नास्ति पूर्वं नासीत् इति प्रतीयते भविष्यति वा कश्चिदन्यः तस्मात् प्रियकृत्तमः इति चेत् तस्मात् अन्यः कश्चित् प्रियतरः न भविता- च ॥ स एव प्रियः प्रियतरः प्रियतमः ॥ प्रियतरस्यैवाभावात् प्रियतमो नास्तीति किमुत ॥ [1] प्रियकार्यकृत् प्रियकृत् स्तोत्रमन्त्रजपपूजादिबहिरङ्गसाधनपराः प्रियकृतः श्रवणमननाद्यन्तरङ्गसाधनपराः प्रियकृत्तराः ॥ गीताप्रवचनपरस्तु प्रियकृत्तमः ॥ स्तोत्रजपपूजादीनि मम प्रियाणि ॥ श्रवणमननादीनि मम प्रियतराणि ॥ गीताप्रवचनं तु मम प्रियतमम् ॥ अयमेव श्रवणादिकर्त्रपेक्षया प्रवक्तुर्विशेषः ॥ न तस्मात् मे इति पदानां पूर्वोत्तरार्धयोः प्रयोग उक्तार्थे दाढर्यसूचनाय॥ स्वर्गादिलोकेषु देवादयः गीताप्रवक्त्रपेक्षया उत्तमाः स्युः भुवि मनुष्येषु कोऽपिनास्ति नासीत् न भविष्यति इति भुवि मनुष्येषु इत्युक्त्या सूच्यते ॥ ६९ ॥

---

१. यथा प्रियकार्यकृत् नासीत् नास्ति न भविष्यति तथा मत्प्रीतिविषयोऽपि नासीत् नास्ति न भविष्यतीति योज्यम् ॥

अर्जुनः ॥ उपदेष्टुमर्हो भक्तेभ्य उपदिशति तदशक्तः ज्ञानपूर्वकं अज्ञानपूर्वकं वा गीतापारायणं करोति तस्य किं फलम् ॥ तेन तव परितोषोऽस्ति न वा ॥ वद ॥
उपदेष्टुः फलमुक्तं आचार्यमुखादध्येतुः किं फलम् ॥ वद ॥ इति च ॥

कृष्णः ॥ अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टस्स्यामिति मे मतिः ॥ ७० ॥

अध्येष्यत इति ॥ यः आवयोः धर्मादनपेतं धर्म्यं इमं संवादं अध्येष्यते च पठिष्यति च ॥ तेन ज्ञानरूपो यज्ञः ज्ञानयज्ञः तेन अहं इष्टः आराधितः स्यां इति मे मतिः ॥ ७० ॥

धर्मात् अनपेतं अनुष्ठेयधर्मप्रकाशकं धर्मशब्दवाच्यभगवत्प्रीतिसाधने स्वरूपेणावस्थानरूपमोक्षसाधनधर्मशब्दितज्ञानजनकं आवयोः अन्योन्यसंलापरूपं इमं गीताग्रन्थं यः जपरूपेण पठिष्यति गीतापारायणं अर्थज्ञानपूर्वकं अज्ञानपूर्वकं वा करिष्यति॥ तत् गीतापारायणं ज्ञानयज्ञः तत्तुल्यः तद्वन्महाफलप्रदः तेन पारायणकर्त्रा पुरुषेण ज्ञानयज्ञेन अहं आराधितो भवेयं इति मे मतिः मदीयो निश्चयः ॥ यो गुरुमुखादध्येष्यते तेन ज्ञानयज्ञेनाहमाराधितो भवेयम् ॥ गुरुमुखात् गीताध्ययनं ज्ञानयज्ञेन भगवदाराधनतुल्यम् ॥ ज्ञानयज्ञस्तु इतरसकलयज्ञापेक्षया नितरां मम मुखोल्लासहेतुः ॥ उक्तं च मया तस्य श्रेष्ठ्यम् ॥ १ 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप' इति ॥ २ 'ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते' ॥ इति च ॥ विनाऽप्यर्थज्ञानं पारायणस्य अध्ययनस्य वा ईदृशमहामहिमवत्वे किमु वाच्यमर्थज्ञानपूर्वकस्य तस्य ॥७०॥

अर्जुनः ॥ गुरुमुखात् श्रोतुः किं फलम् ॥ पारायणे क्रियमाणे अध्ययने क्रियमाणे वा ये तत्समीपे उपविश्य शृण्वन्ति तेषां किं फलम् ॥ ब्रूहि ॥

कृष्णः ॥ श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥
सोऽपि मुक्त श्शुभान् लोकान प्राप्नुयात्पुण्यकर्मणां ॥ ७१ ॥

श्रद्धावानिति ॥ योऽपि नरः श्रद्धा अस्यास्तीति श्रद्धावान् न विद्यते असूया यस्य सः अनसूयः तादृशश्च सन् शृणुयात् सोऽपि मुक्तः पापमुक्तस्सन् पुण्यानि च

१. ४. ३३. २. ९ १५.

तानि कर्माणि च पुण्यकर्माणि तेषां पुण्यानि कर्माणि येषां ते पुण्यकर्माणः तेषां च शुभान् लोकान् प्राप्नुयात् ॥ ७१ ॥

**एतच्छ्रवणं भगवत्प्रीतिद्वारा महाफलसाधनमिति श्रद्धावान् ग्रन्थे ग्रन्थकर्तरि ग्रन्थप्रवक्तरि च दोषाविष्काररूपामसूयां अकुर्वन् योऽपिनरः यश्च १ नरः शृणुयात्॥ क्रियमाणं पारायणं शृणुयात् परम्परयापि तत्कालं शृणुयात् सोऽपि २ उपश्रोताऽपि किमुत साक्षाच्छ्रवणं कुर्वन् अध्येता प्रवक्ता च ॥ पापेभ्यो मुक्तस्सन् सुखप्रदान् पुण्यकर्मकृतां प्राप्यान् लोकान् स्वर्गादीन् सत्यलोकादींश्च प्राप्नुयात् ॥ पुण्यकृतां इन्द्रादीनां लोकान् प्राप्नुयात्॥ पुण्यानां कर्मणां सकाशात् प्राप्यान् सुखप्रदान् देहान् प्राप्नुयात्॥ पुण्यकर्मकृतां भक्तानां समूहान् प्राप्नुयात् ॥ गीताश्रवणं तत्तत्पुण्यकर्मतुल्यमिति यावत् ॥ गीताश्रवणं भगवद्भक्तान् प्रापयति॥ भगवद्भक्तानां प्राप्तिरुपदेशद्वारा मोक्षाय भवति ॥ न केवलं मोक्षप्राप्तिः किंतु तत्तत्पुण्यलोकानुभवपूर्वकमोक्षप्राप्तिः फलम् ॥ गीताशास्त्रश्रवणकर्तॄणामिदं फलम् ॥ श्रवणाध्ययनपारायणप्रवचनैरीदृशोत्तरोत्तरमहाफलसाधनत्वादत्युपादेयमिदं गीताशास्त्रम् ॥ ७१ ॥**

**सञ्जयः** ॥ 'अशोच्यानन्वशोचस्त्व'मित्यादि 'सर्वधर्मान् परित्यज्ये'त्यन्तं परममहितं भयनिरसनरसायनं निःश्रेयसनिदानं सकलदुरितलवनमहास्त्रं गीताशास्त्रं पार्थायोपदिश्य तत्प्रवचनाध्ययनपारायणश्रवणफलं चाभिधाय गुरुणा शिष्याय अज्ञानसंशयविपर्ययरहिततत्त्वज्ञानोदयपर्यन्तमुपदेशः कार्यः इति गुरुधर्मं ज्ञापयितुं पार्थस्य अज्ञानादिनिवृत्तिं तत्त्वज्ञानोदयं च जानन्नपि भगवानजानान इव पृच्छति ॥

**कृष्णः** ॥ **कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ॥**

**कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनञ्जय ॥ ७२ ॥**

**कच्चिदिति** ॥ हे पार्थ इदं गीताशास्त्रं त्वया एकं अग्रं विषयः यस्य तत् एकाग्रं तेन चेतसा मनसा श्रुतं कच्चित् किं ॥ ते तव अज्ञानेन संमोहः अज्ञानसंमोहः प्र निःशेषं नष्टः प्रणष्टः कच्चित् किम् ॥ ७२ ॥

---

१. 'नर' इत्युक्त्या गीताश्रवणमकुर्वन् पशुरेवेति सूच्यते ॥ २. वक्ता अन्यः पृच्छकः अन्यः श्रोता अन्यः इति त्रयः ॥ 'वक्तारं पृच्छकं श्रोतॄन् तत्पादसलिलं यथा' ॥ इति भागवते १० स्कन्धे पूर्वार्धे १ अध्याये त्रयो उक्ताः ॥

हे पार्थ गीताशास्त्रमिदं त्वया एकाग्रेण मनसा श्रुतं १ किं ॥ अनेन ते अज्ञानमूलको विपरीतज्ञानरूपो मोहः निश्शेषं नष्टः किम् ॥ यदि यत्रकुत्रापि यत्किञ्चिन्न श्रुतं तर्हि तत्पुनरप्युपदिशामि ॥ यदि तव ज्ञानोदयेनाज्ञानसंमोहः न विनष्टः तर्हि तत्पर्यन्तं भूयोऽप्युपदिशामि ॥ २ पितृष्वसुः पृथायाः पुत्रत्वात्तथाऽनुग्राह्योऽसि ॥ ३ अज्ञानादिशत्रुनिरसनपूर्वकं तत्वज्ञानधनसंपादनसमर्थोऽसि ॥ ७२ ॥

सञ्जयः ॥ एवं पृष्टोऽर्जुनः तत्वोपदेष्टुः गुरोस्सकाशे लब्धोपदेशेन शिष्येण कृतज्ञताप्रदर्शनपूर्वकमेवं वाच्यमिति शिष्यधर्मं बोधयन् भगवन्तमाह ॥

॥ अर्जुन उवाच ॥

नष्टो मोहस्स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ॥
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥

नष्ट इति ॥ हे अच्युत कृष्ण तव प्रसादः त्वत्प्रसादः तस्मात् मोहः नष्टः स्मृतिः ज्ञानं लब्धा ॥ गतः सन्देहः यस्य सः गतसन्देहः सन् स्थितः स्थिरोऽस्मि ॥ तव वचनं करिष्ये ॥ ७३ ॥

अज्ञानसंमोहः नष्टः स्मृतिशब्दितं यथार्थज्ञानं मया लब्धं श्रुतपूर्वपरापरतत्वविषया स्मृतिर्वा लब्धा ॥ उक्तं च मया ॥ ४ 'आहुस्त्वामृषयः सर्वे' इत्यादि ॥ युद्धं क्षत्रियधर्मत्वादवश्यमनुष्ठेयम् अन्यथा नरकपातादिरनर्थः स्यात् स्वधर्मानुष्ठानं च ज्ञानद्वारा मोक्षप्राप्तिहेतुः इति मया ज्ञातमनेन त्वदुपदेशेन ॥ किमहं ज्ञानी जातोऽस्मि इत्यात्मानं प्रशंससीति चेत् ॥ नेदं मच्छक्त्या किंतु त्वत्प्रसादात्॥ अच्युतस्त्वमसि ॥ आश्रितान् न च्यावयसि ॥ परमकारुणिकेन ५ 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नं' इति मया प्रार्थितेन त्वया महार्थमिदं गीताशास्त्रमहं श्रावितः ॥ तेन च मोहनिवृत्तिपूर्वं तत्वज्ञानं दुरवापमवापम् तेनाहं विगतसन्देहोऽभूवम् ॥ तेन युद्धं कुर्विति त्वच्छासने स्थिरोऽस्मि ॥ न पुनर्युद्धाच्चलिष्यामि ॥ अतो गतसन्देहः सन्

---

१. कच्चिदित्यव्ययमिष्टप्रश्ने इत्यर्थे ॥ २. पार्थेत्यनेनेदम् ॥ ३. धनञ्जयेत्यनेनेदम् ॥ ४. १०. १३.
५. २. ७.

तव युद्धं कुर्विति वचनं करिष्ये ॥ योत्स्ये इत्यनुक्त्वा तव वचनं करिष्ये इत्युक्त्या न केवलं युद्धमेकमेव किंतु त्वया यद्यत् कुर्वित्युच्यते तत्तत् करिष्यामि ॥ त्वद्वचने मम तादृशो विस्रंभ उदितः॥ त्वद्वचनकरणं न त्वदर्थम्॥ किंतु मदीयक्षेमार्थं इति करिष्ये इति आत्मनेपदेन सूचितम् ॥ युद्धं धर्मः उताधर्मः इत्यादयः सर्वे संशयाः निरवशेषं निवृत्ताः युद्धं परमो धर्मः ज्ञानद्वारा मोक्षसाधनं इत्यादितत्वज्ञानं लब्धं तेन निश्चयबुध्या युद्धं करिष्यामि ॥ उक्तं हि त्वया ॥ १ 'तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः' ॥ इति ॥ २ 'यथेच्छसि तथा कु र्वित्युक्तिसूचितं मयि कोपं त्यज ॥ सुप्रसन्नो भव॥ रक्ष रक्ष मामगतिकमनन्यशरणम् ॥ त्वं हि नः परमा गतिः॥ भूयादनेन मम परमं मङ्गलम् ॥ ७३ ॥

अ ॥ हे अच्युत त्वदुपदेशेन मोहः कर्ताऽहंभोक्ताऽहं इमे मदीयाः मया हन्यन्ते युद्धमधर्मः तेनाहं नरके पतेयं इत्यादिविपरीतग्रहः नष्टः अज्ञानतत्कार्यनिवृत्या किं फलं त्वया प्राप्तमिति चेत् स्मृतिर्लब्धा अविद्याकृतकर्तृत्वभोक्तृत्वादिसर्वसंसारधर्मविमुक्तः नित्यकूटस्थः असङ्गश्चिद्रूपः निष्कलः निष्क्रियः सर्ववेदान्तसिद्धो यः परमात्मा स एवाहमस्मीति स्मृतिः त्वदुपदेशेन मया प्राप्ता ॥ प्रमादाद्विस्मृतार्थस्य आप्तोपदेशेन स्मृतिवत् ॥ एवं त्वदुपदेशजनितविज्ञानेन सर्वानर्थमूलभूते मोहे सकारणे नष्टे संप्राप्तात्मयाथात्म्यविज्ञानोऽहं गतसन्देहः सन् स्थितोऽस्मि ॥ अविद्यातत्कार्यतद्धर्मतत्कर्मतदवस्थाविमुक्ताविक्रियात्मस्वरूप एव स्थितोऽस्मि ॥ कृतकृत्योऽस्मि ॥ नेतः परं मया ज्ञातव्यं प्राप्तव्यं वा किमप्यस्ति ॥ तथाऽपि मद्योगेश्वरस्य तव वचनमहं करिष्ये ॥ अज्ञानतत्कार्यनिवृत्या सर्वं ब्रह्म ब्रह्मैवाहमिति विदितात्मयाथात्म्यस्य विदुषः तव कथं अहं तव इति निर्देशसूचितं भेदज्ञानं वचनं करिष्ये इति कार्यकरणाङ्गीकारो वा ३ 'तस्य कार्यं न विद्यते' इति तत्वज्ञस्य कृत्यनिषेधात् ॥ यदि तेऽस्ति कृत्यदोषः तर्हि त्वमतत्ववित् ॥ 'नैवास्ति किंचित्कर्तव्यं अस्ति चेन्न स तत्ववि'दिति हि स्मरन्ति ॥ अतत्वविदेवाहमिति चेत् 'नष्टो मोहः स्मतिर्लब्धा' इति ज्ञानप्राप्त्युक्तिः विरुध्येत ॥ अतः कथमिदमिति चेत् ॥ लब्धमेव मया तत्वज्ञानं

---

१. २. ३७. २ १८ ६३ ३. ३. १७.

ज्ञानिनः कार्यमपि न विद्यत एव ॥ तथाऽपि [1] जनकप्रियव्रताश्वपतिप्रभृत्याधिकारिकमहाराजवत् लोकसंग्रहचिकीर्षया मम कर्माचरणमावश्यकमिति मत्वा वचनं करिष्ये इत्युक्तं मया ॥ उक्तं हि त्वया [2] 'लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि' [3] 'यद्यदाचरति श्रेष्ठः' इत्यादि ॥ अत उक्तं युक्तम् ॥ युध्यस्व युध्य युद्धायोत्तिष्ठ युद्धाय युज्यस्व कर्म कुरु कर्म समाचर इत्यादि वचनं करिष्ये इत्युक्तेरेवमभिप्रायादुक्तमुपपद्यते ॥ अन्यः कश्चिदन्तराभिप्रायोऽस्ति ॥ अज्ञानतत्कार्यनिवृत्तिपूर्वं प्राप्तात्मयाथात्म्यज्ञानोऽहं मां परं ब्रह्मैवाजस्रमनुसन्धेहि इत्यर्थावबोधकं 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति वचनं करिष्ये॥ त्वदुपदेशेन प्राप्तस्य ज्ञानस्य परिपाकसिद्धिहेतोश्चरमन्तव वचनं हृदि निधाय तथैव त्वां परं ब्रह्मैव समाधियोगेनाजस्रमनुसन्दधामि ॥ एतदभिप्रायकत्वादस्य वचनं करिष्ये इत्यस्य युक्तं मदुक्तम् ॥ सर्वथा धन्योऽस्मि ॥ कृतकृत्योऽस्मि ॥ अहो मे भाग्यम् ॥ लब्धमद्य मया सर्वमैहिकमामुष्मिकं च [4] मङ्गलम् ॥ ७३ ॥

धृतराष्ट्रः ॥ एकान्ते सञ्जातः कृष्णार्जुनयोः संवादः कथं त्वया ज्ञातः वद मे सञ्जय ॥

॥ सञ्जय उवाच ॥

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

इतीति ॥ वसुदेवस्यापत्यं पुमान् वासुदेवः तस्य महान् आत्मा यस्य सः महात्मा तस्य पार्थस्य च अद्भुतं आश्चर्यकरं रोमाणि हर्षयतीति रोमहर्षणं इमं संवादं इति एवं अहं अश्रौषम् ॥ ७४ ॥

अहं वासुदेवस्य महामनसो महाबुद्धेः महानुभावस्य पार्थस्य च उक्तरीत्या यः संवादो जातः तमिमं आश्चर्यकरं अतो रोमाञ्चजनकं संवादं श्रुतवानस्मि ॥ अहो

---

1. स्पष्टमुक्तमेतत् तृतीये 'यस्त्वात्मरतिरेव स्यात्' 'मयि सर्वाणि कर्माणि' इति श्लोकव्याख्याने शङ्करानन्दीये ॥ २ ३. २०. ३. ३ २१. ४. इति च ॥

भाग्यं अन्यमुखाच्छ्रवणमात्रेण रोमाञ्चजनकं भगवद्वचनं साक्षाच्छृतवतोऽर्जुनस्य ॥ अतो महानुभावस्सः ॥ सूचितं चेदं १'देहभृतां वरेति'॥ पार्थ संबोधयता भगवता॥ परमधन्यो वसुदेवः यस्य गृहे स्वयं भगवानवतीर्णः ॥ पृथा च परमधन्या यस्याः पुत्रः परमभागवतो भगवदनुगृहीतः प्रतिक्षणं भगवता संवदमानोऽर्जुनः ॥ त्वं तु अत्यन्ताधन्यः यस्य पुत्रो दुर्योधनः कृष्णपराङ्मुखस्तद्भक्तद्रोही च इति वासुदेवपार्थपदाभ्यां सूच्यते ॥ ७४ ॥

धृतराष्ट्रः ॥ तयोरेकान्ते प्रवृत्तः संवादः त्वया कथं ज्ञातः इति प्रश्नस्य तयोः संवादमहमश्रौषं तेनाहं ज्ञातवानस्मि तयोः संवादमिमं इति उत्तरमुक्तम् ॥ कथं दूरे जातस्य संवादस्य श्रवणं विश्वरूपप्रदर्शनादेः दर्शनं च तव संभवेत् ॥ न हि विप्रकृष्टस्य श्रवणं दर्शनं वा लोके संभवति ॥ अतः कथमिदम् ॥

सञ्जयः ॥ व्यासप्रसादाच्छ्रुतवानेतद् गुह्यमहं परम् ॥
योगं योगेश्वरात्कृष्णात् साक्षात्कथयतस्स्वयम् ॥ ७५ ॥

व्यासेति ॥ योगं साक्षात् कथयतः उपदिशतः योगानां ईश्वरः योगेश्वरः तस्मात् कृष्णात् अहं परं उत्कृष्टं गुह्यं रहस्यं एतत् गीताशास्त्रं व्यासस्य प्रसादः व्यासप्रसादः तस्मात् हेतोः साक्षात् श्रुतवान् ॥ ७५ ॥

पार्थाय २योगशब्दितं स्वसामर्थ्यं कर्मयोगादिकं वा स्वयं कथयतः ३सर्वोपायानामीश्वरात् कर्मयोगाद्युपायानां प्रवर्तकात् फलप्रदातुश्च कृष्णात् गुह्यं परं उत्तमम् परं गुह्यं नितरां गोप्यं वा एतत् संवादरूपं गीताशास्त्रं अहं गुरोर्व्या-

---

१. ८. ४. २. अ. इमं गुह्यमिति पाठः ॥ इमं संवादम् ॥ योगं योगसाधनम् ॥ योगमिति संवादस्य विशेषणम् ॥ कर्मयोगादियोगार्थत्वात्संवादस्य ॥ एतद्गुह्यमिति पाठः ॥, गुह्यं परं एतत् एनं योगं ज्ञानयोगं श्रुतवानस्मि ॥ कस्मात् कथयतः कृष्णात् कथं साक्षात् ॥ इति केचित् ॥ वि. एतद्गुह्यमहं परमिति पाठः ॥ योगं योगाख्यम् ॥ २ वि. योगः कल्याणगुणसंबन्धः तस्येश्वरात् ॥ ज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधेः ॥ योगानां हठादियोगानां ईश्वरात् ॥ योगः मायया सृष्ट्यादिः तत्कर्तृत्वाद्योगेश्वरः तस्मात् ॥ योगः ज्ञानयोगः तत्प्रदातृत्वेन तदीश्वरात् ॥

स्य प्रसादात् साक्षात् श्रुतवान् ॥ तुभ्यं कथयितुं मम व्यासेन दिव्यं चक्षुः श्रोत्रं च दत्तम् ॥ तद्दत्तदिव्यश्रोत्रेण विप्रकृष्टमपि संवादं श्रुतवानहम् ॥ तद्दत्तदिव्यचक्षुषा, कृष्णदत्तदिव्यचक्षुषा पार्थ इव विश्वरूपं दृष्टवांश्चास्मि ॥ अतो दूरे जातस्यापि संवादस्य श्रवणं विश्वरूपप्रदर्शनादेश्च दर्शनं मम संभावितमेव ॥ अघटितघटनापटीयसी हि तस्य विष्टरश्रवसः शक्तिः ॥ ७५ ॥

धृतराष्ट्र ॥ कुरुक्षेत्रे समवेताः मामकाः पाण्डवाश्च किमकुर्वतेति मया पृष्टेन त्वया, तावकाः पाण्डवाश्च कुरुक्षेत्रे युयुत्सवः समवेताः॥ तत्र युद्धारंभात्पूर्वं दुर्योधनः पाण्डवसैन्यं दृष्ट्वा व्याकुलचेताः द्रोणसमीपं गत्वा स्वीयां व्यथां प्राह ॥ ज्ञात्वा तत्पितामहो भीष्मः सिंहनादादिना तमाश्वासयामास॥ ततः कृष्णार्जुनौ रणाङ्गणमेत्य शङ्खौ दध्मतुः ॥ ततो भीमादयश्च शङ्खान् दध्मुः एवमुभयोः सेनयोः सेनयोर्मध्ये लोकोद्धारार्थं अर्जुनायोपदिदिक्षितं गीताशास्त्रं अवतारयितु कामः भगवान् तमर्जुनं शोकमोहाकुलमारचय्य १ 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नं' मिति तेन प्रार्थितः तस्मै गीताशास्त्रं सम्यगुपादिदेश ॥ तच्च तयोः संवादरूपं शास्त्रं व्यासप्रसादलब्धदिव्यश्रवसा मया साक्षाच्छ्रुतम् ॥ तुभ्यमभिहितं चेत्यभिहितम् ॥ गीताश्रवणान्निवृत्ताज्ञानेन लब्धतत्वज्ञानेन युध्यस्वेत्यादि त्वदीयं वचनमसंशयं करिष्ये इति युद्धकरणेऽङ्गीकृते कथं युद्धं प्रावर्तिष्ट ब्रूहि तत् आदित आरभ्य ॥

सञ्जयः ॥ राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

राजन्निति ॥ हे राजन् धृतराष्ट्र केशवश्च अर्जुनश्च केशवार्जुनौ तयोः पुण्यं पवित्रं अद्भुतं इमं संवादं संस्मृत्य संस्मृत्य मुहुर्मुहुः हृष्यामि ॥ ७६ ॥

नास्मिन् क्षणे युद्धप्रकारकथनमारब्धुमुत्सहे ॥ मम मुहूर्तार्धमवकाशो देयः कृष्णार्जुनयोस्संवादं आमूलाग्रं एकधारया सम्यगनुसन्धाय तदुपजनितामंदानंदसागरादुत्तीर्णः कथयिष्यामि ॥ संवादो हि तयोः श्रवणस्मरणमात्रेण पापहरः

१. २. ७३

पुण्यकरश्च॥ इमं तं संवादं [1]प्रतिक्षणं स्मृत्वा स्मृत्वा हर्षं प्राप्नोमि॥ स्मृत्वा स्मृत्वा प्रतिक्षणं हर्षं अनुभवामि ॥ प्रतिक्षणं हृष्यामि रोमाञ्चितगात्रो भवामि ॥ महाराज परमपावनमिमं संवादं त्वमपि स्मर स्मृत्वा हर्षमनुभव ॥ पुनः पुनः स्मरामि ॥ तेन किं मया जन्मान्तरशतेषु पुण्यं कृतं किं तप्तं किं दत्तं किं हुतं किं इष्टं वा न जाने ॥ येन तयोरिमं संवादलक्षणं गीताशास्त्रं मया श्रुतमिति हर्षं चानुभवामि ॥ स्मरणमात्रेण हर्षकरं रोमाञ्चजनकं पापहरं पुण्यकरं च संवादं एकवारं एकधारयाऽनुसन्धाय तज्जनितममन्दमानन्दमनुभूय पश्चात्कथयिष्यामि ॥ दयया दीयतामवकाशः ॥ ७६ ॥

धृतराष्ट्रः ॥ दत्तो ह्यवकाशः संवादमनुसन्धाय परममन्दमानन्दमनुभूतवानसि ॥ कथयेदानीमुत्तरकथाम् ॥

सञ्जयः ॥ तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ॥
विस्मयो मे महान् राजन् हृष्यामि च पुनःपुनः ॥ ७७ ॥

तच्चेति ॥ हे राजन् अति अद्भुतं अत्यद्भुतं तत् हरेः कृष्णस्य रूपं च संस्मृत्य संस्मृत्य मे महान् विस्मयः आश्चर्यम् ॥ पुनःपुनः हृष्यामि च ॥ ७७ ॥

अतोऽस्मरणादपि दृष्टार्थस्मरणमतिसन्तोषावहं अतः पार्थाय प्रदर्शितं विश्वरूपं यन्मया दृष्टं परमाद्भुतं तद्रूपं स्मृत्वा तज्जनितमानन्दमनुभूय पश्चात्कथयिष्यामि ॥ तदर्थं भूयोऽप्यवकाशो देयः ॥ श्रवणस्मरणादिमात्रेण सकलदुरितहरस्य भगवतो यत् रूपं मया दृष्टं आश्चर्यकरं तदपि संस्मृत्य संस्मृत्य मे महान् विस्मयो जायते॥ एतादृशमहाश्चर्यकररूपदर्शनेन धन्योऽस्मि कृतकृत्योऽस्मि अहो मे भाग्यमिति पुनःपुनः हृष्यामि च ॥ महाराज त्वमपि यथाश्रुतं तदद्भुतं रूपमनुस्मर ॥ ७७ ॥

धृतराष्ट्रः ॥ दत्तोऽवकाशः अनुसन्धाय भगवतस्तदत्यद्भुतं रूपं परमममन्दमानन्दमनुभूतवानसि ॥ कथयेदानीमुत्तरकथां ॥ तत्र युद्धे कस्य पक्षस्य जयादिलाभः स्यात् ॥ मम तु विशिष्टत्वात् विशिष्टशिष्टभूयिष्ठत्वात् संख्यया गरिष्ठत्वाच्च मदीयानां पक्षस्यैव जयादिकं स्यादिति भाति ॥ त्वं तु कथं मन्यसे ॥ ब्रूहि ॥

---

१. मुहुः इत्यस्य पुनःपुनरित्यर्थः ॥ 'मुहुः पुनःपुनः शश्वत् अभीक्ष्णमसकृत्समाः' ॥ इत्यमरः ॥ पुनःपुनरित्यर्थकस्य मुहुरित्यस्य अस्माभिः स्थाने प्रतिक्षणमिति लभ्यते ॥

सञ्जयः ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥
तत्र श्री र्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

यत्रेति ॥ यत्र पक्षे योगानां ईश्वरः योगेश्वरः योगीश्वरः इति पाठे योगः एषा अस्तीति योगिनः तेषां ईश्वरः योगीश्वरः कृष्णः यत्र पक्षे धरतीति धरः धनुषः धरः धनुर्धरः पार्थः स च वर्तते॥ तत्र पक्षे श्रीः विजयः भूतिः ध्रुवा स्थिरा नीतिश्च॥ इति मे मम मतिः निश्चयः ॥ ७८ ॥

१ योगिनां उपायविदां ईश्वरः २ योगानां उपायानां उपायवतां वा कर्मयोगादिमतां वा ईश्वरः योगानां कर्मज्ञानादियोगानां ज्ञानवैराग्यादितत्फलानां च ईश्वरः सर्वेषां कर्मादियोगानां सर्वशक्तीनां वा ईश्वरः योगाः तेजोबलपौरुषविद्याराज्यजयधनधान्यपुत्रपौत्राद्यभ्युदयानां घटनाः तेषां ईश्वरः ॥ योगौ विद्या अविद्या च युज्यते पुरुषः आभ्यामिति योगौ इति व्युत्पत्तिः तयोः विद्याऽविद्ययोः ईश्वरः ॥ योगाः कर्मसाध्याः उपासनासाध्याश्च ऐहिकामुष्मिकसुखविशेषाः तेषां ईश्वरः तत्प्रदाने शक्तः ॥ युज्यते समाधीयते चित्तं एतेष्विति योगाः इति व्युत्पत्तिः ॥ कृष्णः निजाश्रितजनसकलदुरितनिरसनशीलः भगवान् वासुदेवः यत्र पक्षे युद्धस्य कारयितृत्वेन स्थितः धनुर्विद्यापारङ्गतः गाण्डीवधन्वा च पितृष्वसुः पुत्रत्वेन भगवतः परमप्रीतिपात्रभूतोऽर्जुनः यत्र पक्षे युद्धस्य कर्तृत्वेन स्थितः तत्र पक्षे श्रीः राज्यलक्ष्मीः विजयः जयश्रीः भूतिः गजतुरगधनधान्यादिसंपत्तिः नीतिश्च स्युः॥ राज्यश्रीप्रभृतयो ३निश्चलाश्च स्युः॥ तस्मिन् पक्षे ध्रुवा निश्चला नीतिर्वर्तते ॥ तथा च 'यतो धर्मः ततो जयः' इति न्यायेन जयोऽपि विशिष्ट इष्टः संभवेदव्यभिचारेण ॥ तेन च राज्यलक्ष्मीर्निश्चिता ॥ तया गजतुरगादिसकलभोगसंपत्संपत्तिरचञ्चला संभवेदिति मम निश्चयः ॥ गुरुप्रसादलब्धसम्यग्ज्ञानानां मादृशानामेव भाति ॥ भगवद्भागवतविरोधिकुपुत्रवात्सल्यादिदोषदूषिताशयानां भवादृशानां अन्यथा भायात् ॥ अतः त्यक्त्वा पुत्रस्नेहं भगवति वासुदेवे परमभागवतेषु पाण्डवेषु च स्नेहं कृत्वा सन्धिमेव कारय ॥ स्यात्तेन ते त्वदीयानां जगतोऽखिलस्य च परमं मङ्गलम् ॥

१. छं योगीश्वर इति पाठः॥ २. योगेश्वर इति सर्वेषां पाठः॥ ३. ध्रुवा इति सर्वेषां विशेषणम्॥

यत्र १ 'ततः श्वेतैर्हयैर्युक्ते' इति श्लोके शब्दशक्तिमूलव्यञ्जनया बोधिते गीताशास्त्रप्रतिपाद्यकर्मज्ञानध्यानभक्तियोगानां ईश्वरः कृष्णः गुरुत्वेन २ 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ॥ अप्रमत्तेन वेद्धव्यम्' ॥ इति श्रुत्युक्तप्रणवधनुषा परब्रह्मलक्ष्यवेधननिपुणः ॥ पातीति पः परमात्मा स एव अर्थः प्रयोजनं यस्य सः पार्थ इति व्युत्पत्त्या परब्रह्मप्राप्त्येकप्रयोजनः अर्जुनः शिष्यत्वेन च 'भगवानुवाच' 'अर्जुन उवाच' इति प्रस्तूयेते। तत्र गीताशास्त्रे प्रवृत्तानां श्रीः विजयः भूतिः नीतिः भुक्तिः मुक्तिः इत्यादिकं सर्वमिष्टमवश्यं स्यादेव इति मे निश्चयः ॥ ईदृशमहाफलकगीताशास्त्रप्रवर्तनाय कृष्णार्जुनौ गुरुशिष्यत्वेन प्रावर्तिषाताम् ॥ अत ईदृशमिदं गीताशास्त्रं ऐहिकामुष्मिकसकलफललाभाय सेवनीयमखिलैरिति गीतां यथावच्छ्रुतवतो विश्वरूपं यथावद्दृष्टवतश्च ममाशयः॥ यत्र यस्मिन् देशे यस्मिन् राज्ये यस्मिन् नगरे यस्मिन् स्थले यस्य श्रोतुः येषां उपश्रोतॄणां च ३ कृते कृष्णार्जुनौ गुरुशिष्यत्वेन उच्येते कृष्णार्जुनसंवादरूपगीताशास्त्रं अभिधीयत इति यावत् ॥ तस्मिन्देशे तस्मिन् राज्ये तस्मिन् नगरे तस्मिन् स्थले तस्य श्रोतुः तेषां उपश्रोतॄणां च राज्यलक्ष्मीविजयसर्वसंपत्संपत्तिभक्तिमुक्त्यादिकमखिलमिष्टं संपद्यते इति मे निश्चयः ॥ अतो यत्नेन भक्त्या सेवनीयमिदं गीताशास्त्रमभ्युदयकामै रक्षामैः ॥ स्यादनेन तेषामतिशयितं मङ्गलम् ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते मोक्षसंन्यासयोगाख्यायार्थ-
प्रदर्शकोऽष्टादशः प्रतिबिंबः ॥ १८ ॥

या गीता हरिणोदिता रणमुखे पार्थाय भक्ताय या व्याख्याता च महात्मभिर्बुधवरैर्मोक्षैकनिश्रेणिका॥ सोपन्यासमुखेन सर्वसुगमा सर्वार्थसन्दर्शिनी गीताऽनेन मया कृता मयि हरिस्तेनातिसंप्रीयताम्॥ १ ॥

भगवद्गीतासोपन्यासो लक्ष्मणाचार्यनिर्मितः ॥ यस्तत्राष्टादशोऽध्यायः पूर्णः प्रीणातु माधवः ॥

समाप्तमिदं श्रीमद्भगवद्गीतोपन्यासदर्पणम्

॥ ॐ तत्सत् श्रीरस्तु ॥

---

१. १. १४. २ मु. ४. ४ ३. निमित्तसप्तमी ॥

एषाप्रकटनपत्रिका यथानुकूलं सर्वेभ्योयुष्मन्मित्रेभ्यो बन्धुभ्यश्च मयि कृपया प्रदर्शयितव्या ।
किंच ये इदं पुस्तकमपेक्षेरन् तादृशानां नामादिकं मह्यं निर्दिशेयुश्चेत्, तेभ्योऽहमिमांप्रेषयेयम्.

---

अचिरादेव प्रकाशयिष्यते ॥ ॥ श्रीः ॥ अचिरादेव प्रकाशयिष्यते ॥

अनितरसाधारणया द्वैताद्वैतविशिष्टाद्वैतरूपमतत्रयसाधारण्या सुललितपदविन्यासविचित्रतया, आत्मार्थमवबुभुत्सूनां गीतोपन्यासकानां चात्यन्तमुपकारिण्या, अतिसमीचीनदेवनागरीमुद्राक्षरमुद्रितया **गीतोपन्यास दर्पण** अभिख्यायाव्याख्यया विभूषिता ॥

इयंच व्याख्या विचित्रशतावधानी विद्वन्मणि, महाभागवत, सलक्षणवर्णक्रमघनपाठी, मतत्रयगीतोपन्यासविद्वत्प्रमुख विविध बिरुदविभूषितैः **पण्डित टि. लक्ष्मणाचार्यै** विरचिता तत्पौत्रेणच टि. एन्. रघूत्तमाचार्येण प्रथम भाग पण्डितमहाशयानां भूमिकयासह संपुटत्रयेण प्रकाश्यमानाच विजयतेतमां ॥

| | | रू. |
|---|---|---|
| प्रथम संपुटः | (१ to ६ अध्यायाः (यन्त्रस्थः कश्चिद्भागः) १९२५ एप्रेल् मासि (प्रकाश्येत ॥ | ५ |
| द्वितीय संपुटः | (७ to १२) १९२५ आगस्ट् मासि ॥ | २ |
| तृतीय संपुटः | (१३ to १८) इदानीं सज्जोऽस्ति ॥ | ३ |

पुस्तकसंख्यायाः परिमितत्वात् नैराश्यपरिहाराय अचिरादेव अपेक्षापत्र प्रतीक्ष्यते ॥

१९२५ एप्रेल् मासादर्वागेव स्वापेक्षां निवेदयतां भागत्रयस्यापि देयत्वेन कल्पितं मूल्य रूप्यकाष्टकं ॥

१९२५ एप्रेल् मासादर्वागेवस्वापेक्षा निवेदितवद्भ्यो निवेदनानन्तरमेव तृतीयस्संपुटो वि. पी. द्वारा रूप्यकत्रयस्य प्रेष्येत ॥

१९२५ एप्रेल् मासादनन्तरं प्रथमस्संपुटो रूप्यकत्रयस्य आगस्ट् मासादनन्तरं द्वितीयसंपुटो रूप्यकद्वयस्य च प्रेष्येत ॥

बन्धनं विना यथायथमेव जिघृक्षतां कालानुरोधेन मूल्यं किंचिन्न्यूनीक्रियेत ॥

सर्वत्रापि प्रेषणव्ययः पृथगेव ॥

एतत्पुस्तकप्रचारकाणां प्रत्येकं कमिषन् दीयेत ॥

अतिदुर्लभमिदं ग्रन्थं प्रकाशयितुमुद्युक्तं पण्डितमहाशयानां पौत्रं मां सर्वोपिसंस्कृतभाषाभिमानिनः आस्तिकवर्याः पुस्तकग्रहणादिभिः अनुगृह्णीयुरिति सप्रश्रयमभ्यर्थये ॥

इत्थं विद्वज्जनकृपाकांक्षी

**T. N. रघूत्तमाचार्यः**

प्रकाशकः गीतोपन्यास दर्पण आपीस तिरुवादी, तञ्जावूर्—Dt.